# हितोपदेशः ।




श्रीविष्णुशर्म्मणा सङ्कलितः ।

पण्डितकुलपतिना,

वि, ए, उपाधिधारिणा

श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्येण

विरचितया व्याख्यया समुद्भासितः ।

तदात्मजाभ्यां

पण्डित-श्रीमदाशुबोध-विद्याभूषण-

पण्डित-श्रीमन्नित्यबोध-विद्यारत्नाभ्यां

परिवर्द्धितटीकया समलङ्कृतः प्रकाशितश्च ।

एकादशसंस्करणम् ।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितः ।

इं १९२४ ।




# उपोद्घातः।

अस्ति हि नीतिशास्त्रं नाम अतिप्राचीनमतिविस्तृतञ्च शास्त्रम्। तस्मिंश्च राजनीति-दण्डनीत्यर्थनीत्यादीनामर्वाचीनानां शास्त्राणामन्तर्भावः।

तच्च खृष्टप्रादुर्भावात् प्राक् पञ्चमादिशतके विशालाख्य-बाहुदन्तीपुत्र--कुणपदन्त--घोटकमुख-बृहस्पति--शुक्रप्रभृतिभिः आचार्य्यैरतिविस्तृतिं नीतम्। अध्ययनाध्यापन-सौकर्य्यार्थं तच्च विस्तृतं शास्त्रं चन्द्रगुप्तस्य मौर्य्यस्य निमित्तं कौटिल्येन षड्भिः श्लोकसहस्रैः सङ्गृहीतम्।

तेन चोक्तं,—"चतस्रो राजविद्याः, आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्चेति"। तासु च बृहस्पतिः आन्वीक्षिकीं त्रयीञ्च न मन्यते; तेन च बृहस्पतेर्नास्तिक इत्याख्या, शुक्रस्तु दण्डनीति-मेवैकां मन्यते, नान्याः; अतः सोऽसुरगुरुरिति नामभाग्भवति। कौटिल्येन च स्वमतस्थापनार्थं परमतदूषणार्थञ्च बहूनां प्राचीनानां नीतिशास्त्रविदां वचनान्युद्धृतानि। ते च मानवा-चार्य्यः बृहस्पतिः शुक्रः भारद्वाजः विशालाक्षः पाराशरः पिशुनः कुणपदन्तः वातव्याधिः आसभीयः कात्यायनः कणिङ्कः चारायणः घोटकमुखः किञ्जल्कः पिशुनपुत्रश्चेति। कौटिल्य-शिष्यः कामन्दकः नीतिसारनामानं राजनीतिग्रन्थं व्यरीरचत्। पुनरप्येतेषां टीकाटिप्पन्यादिभिः बहुविस्तृतिं गते नीतिशास्त्रे तदध्ययनालसैः राजपुत्रैरुच्छृङ्खलता समासादिता। तस्माद् कारणात् केनापि सुबुद्धिना पण्डितेन पशुपक्षिकथाव्याजेन पञ्चतन्त्रं नाम नीतिपुस्तकं लिखितम्। तच्च कौटिल्यस्यान्यस्मिन् नामनि विष्णुशर्म्मणि आरोपितम्। तच्च पुस्तकं खृष्टीयषष्ठशतके लिखितमिति विदुषां परामर्शः।

तत्र प्रमाणम्,—एतत् पञ्चतन्त्रं नाम पुस्तकं नासिरवान्-नामकः पारस्यदेशीयो राजा पारदीयभाषायां सङ्कलितवान्। स च राजा खृष्टीय ५३१ अब्दम् आरभ्य ५७९ अब्दं यावत् पारस्यमही शशास इति ख्यातिः। तस्मिंश्च पञ्चतन्त्रग्रन्थे वराहमिहिरस्य ज्योतिर्ग्रन्थाद्बहूनि वचनान्युद्धृतानि। वराहमिहिरश्च खृष्टीय ४७६ अब्दे जातः, खृष्टीय ५०५ अब्दे च तेन ग्रन्थो लिखितः। तस्मात् खृष्टीय ४७६ अब्दादूर्द्धम् ५७९ अब्दादर्वाक् पञ्चतन्त्रस्य रचनाकालः। तस्मिंश्च शताधिकवर्षमध्ये खृष्टीय ५०५ अब्दादूर्द्धं ५३१ अब्दादर्वाक् ग्रन्थरचनायाः अत्यधिका सम्भावना।

हितोपदेशो नाम नीतिग्रन्थः प्रधानतः पञ्चतन्त्रमवलम्ब्यैव लिखित इति ग्रन्थकर्त्रा स्वयमेव कथारम्भे उक्तम्, अत एवायं पञ्चतन्त्ररचनाकालादूर्द्धं रचित इति स्पष्टम्। स च ग्रन्थो ग्रन्थकर्त्रा नारायणेन विष्णुशर्म्मराजपुत्रसंवादरूपेण लिखित इति, विष्णुशर्म्मणैव कृत इति च किंवदन्ती विजृम्भते। तस्य च रचनाकालो न ज्ञायते। यच्चाध्यापकमागदोनेलेनाभिहितं, यतः पञ्चशतवर्षेभ्यः प्राचीनतमं हितोपदेशस्य पुस्तकं नोपलभ्यते, अतः इतः समयात् पञ्चशतवर्षोत्तरमेव स ग्रन्थो रचित इति, तद्वेयम्; यतः यत् प्राचीनतमं पुस्तकं प्राप्तं तत् ग्रन्थकर्त्रा स्वयमेव स्वहस्तेन लिखितमित्यत्रास्ति किञ्चित् प्रमाणम्? यदि नास्ति, तदा खृष्टीय ५७९ वर्षादूर्द्धम् इतश्च पञ्चशतवर्षादर्वाक् कस्मिन्नपि काले लिखितमिति तावदेव वक्तुं शक्यं, यावत् प्रमाणान्तराविष्कृतिर्न भवति इति।

महामहोपाध्याय—श्रीयुक्तहरप्रसाद-शास्त्रिणाम्।

# हितोपदेशस्य कथानां सूचीपत्रम् ।

विषयाः पृष्ठाङ्काः

## विग्रहे



## सन्धौ

# अकारादिक्रमेण श्लोकोक्तविषयनिघण्टुः ।

| विषयाः | श्लोकाङ्काः |
| --- | --- |

# हितोपदेशः ।

मङ्गलाचरणम् ।—

सिद्धिः साध्ये सतामस्तु प्रसादात् तस्य धूर्जटेः ।
जाह्नवीफेनलेखेव यन्मूर्द्ध्नि शशिनः कला ॥ १ ॥

ग्रन्थप्रयोजनम् ।—

श्रुतो हितोपदेशोऽयं पाटवं संस्कृतोक्तिषु ।
वाचां सर्वत्र वैचित्र्यं नीतिविद्यां ददाति च ॥ २ ॥

---

(१) ग्रन्थारम्भे विघ्नविघाताय मङ्गलमाचरति, सिद्धिरिति ।—यस्य मूर्द्ध्नि यन्मूर्द्ध्नि यस्य ललाटे इत्यर्थः; शशिनश्चन्द्रस्य, कला षोड़शभागैकभागः, जाह्नवी-फेनलेखेव जटान्तर्वर्त्तिन्याः गङ्गायाः फेनरेखा इव, राजते इति शेषः। [ पुरा कपिलशापदग्धानां सगरसन्ततीनामुद्धाराय भगीरथेन स्वर्लोकादानीयमाना गङ्गा, स्वाश्रमभङ्गकुपितेन राजर्षिणा जह्नुना गण्डूषीकृता, ततो भगीरथेन प्रसादितः स जानुना तां निःसारितवानिति गङ्गाया जाह्नवीनामहेतुः;—"जानुद्वारा पुराऽदात्तां जह्नुः सम्पीय कोपतः। तस्य कन्यास्वरूपा च जाह्नवी तेन कीर्त्तिता" ॥ इति ]. तस्य तादृशस्य, धूर्भारभूता जटिः जटा यस्य सः, धुरः त्रैलोक्यचिन्तायाः जटिः सङ्घातोऽत्र इति वा धूर्जटिः, [ जटधातोरिन् ] तस्य धूर्जटेः शिवस्य, प्रसादात् अनुग्रहात्, सतां साधूनां, साध्ये साधनाऽभिप्रायविषयीभूते कार्य्ये, सिद्धिः सफलता, अस्तु भवतु । पथ्यावक्त्रं वृत्तम् ।

(२) ग्रन्थस्य प्रयोजनमाह, श्रुत इति ।—अयं हितोपदेशः हितः अनुकूल उपकारक इति यावत्, उपदेशः शिक्षा, तमधिकृत्य कृतः ग्रन्थ इत्यण् तस्य लुक् च, हितोपदेशः, यद्वा,—हितः हितकारः उपदेशः शिक्षा यत्र सः, तन्नामग्रन्थः, श्रुतः आकर्णितः अधीतः वा सन्, संस्कृतोक्तिषु संस्कृतभाषाकथनेषु व्याकरणालङ्कार-भावादिविशुद्धवाक्यप्रयोगेषु वा, पाटवं पटुत्वं, तथा सर्वत्र सर्वस्मिन् विषये, वाचां

विद्याप्रशंसा।—

अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत्।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत्॥ ३॥

सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम्।
अहार्य्यत्वादनर्घत्वादक्षयत्वाच्च सर्वदा॥ ४॥

सङ्गमयति विद्यैव नीचगापि नरं सरित्।
समुद्रमिव दुर्द्धर्षं नृपं भाग्यमतः परम्॥ ५॥

---

वाक्यानां वैचित्र्यं विचित्रतां विविधविषयकवाक्प्रयोगनैपुण्यमिति भावः, नीतिविधः साम्मादिराजनीतौ अभिज्ञताञ्च ददाति यच्छति।

(३) अजरामरवदिति।—प्रज्ञ एव प्राज्ञः [प्रज्ञादित्वादण्] पण्डितः जनः, अजरः वार्द्धक्यहीनः, अमरः मृत्युरहितः तौ इव, जरामृत्यू मे कदापि नाक्रमिष्यतः इति विविच्य, विद्यां शास्त्रज्ञानम्, अर्थं धनञ्च, चिन्तयेत् उपार्जयेदित्यर्थः। मृत्युना कालेन, केशेषु [अवच्छेदे सप्तमी] गृहीतः धृत इव, आकृष्टकेश इव, आसन्नमृत्युकाल इवेत्यर्थः, धर्मम् आचरेत् उपार्जयेत्।

(४) विद्याया उत्तमत्वमाह, सर्वेति।—सर्वदा सर्वस्मिन् काले, अहार्य्यत्वात् चौरादिभिरपहर्त्तुमशक्यत्वात्, अनर्घत्वात् अमूल्यत्वात्, अक्षयत्वात् दानादिना अपरिक्षीयमाणत्वाच्च, सर्वाणि द्रव्याणि तेषु सर्ववस्तुषु [निर्द्धारणे सप्तमी] विद्यैव अनुत्तमं नास्ति उत्तमं यस्मात् तत् सर्वोत्कृष्टं द्रव्यम्, आहुः ब्रुवन्ति, विद्वांस इति शेषः।

(५) विद्यायाः फलमाह द्वाभ्यां, सङ्गमयतीति।—सरित् नदी, नीचगा निम्नगापि सती, नरं तृणादिकं वा दुर्द्धर्षं दुर्गमं, समुद्रं जलनिधिमिव, नीचगापि नीचपुरुषाश्रयापि, विद्यैव एका विद्या एव, नान्यत् किमपीति भावः; नरं दुर्द्धर्षं नृपं राजानम्, अतः परं राजसदनप्रापणानन्तरं, भाग्य सौभाग्यं, सङ्गमयति प्रापयति; "संयोजयति" इति पाठेऽपि स एवार्थः। नदी यथा तदाश्रयं तृणादिकं सागरं नयति, तद्वदेका विद्यैव स्वाश्रितं पुरुषं नीचवंशीयमपि प्रथमं राजसकाशं ततः सौभाग्यं प्रापयतीत्यर्थः। नीचवंशीयोऽपि यदि विद्यावान् भवति तदा सोऽपि राजभवने सम्मानं लभते सौभाग्यवांश्च भवति। नदी हि तृणादेः समुद्रप्रापणादधिकं किमपि नोपकर्त्तुं शक्नोति, विद्या तु दुर्द्धर्षराजसकाशप्रापणानन्तरं सौभाग्यमपि सूचयति इति व्यतिरेकालङ्कारेण विद्याया उत्तमत्वं व्यज्यते। अतः नीचवंशीयानाम् उन्नतवंशीयानां वा सर्वेषामेव विद्योपार्ज्जनं कर्त्तव्यमिति भावः।

विद्या ददाति विनयं, विनयाद् याति पात्रताम् ।
पात्रत्वाद् धनमाप्नोति, धनाद् धर्मं, ततः सुखम् ॥ ६ ॥
विद्या शस्त्रञ्च शास्त्रञ्च, द्वे विद्ये प्रतिपत्तये ।
आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥ ७ ॥

ग्रन्थाभिधेयम् ।—

यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत् ।
कथाच्छलेन बालानां नीतिस्तदिह कथ्यते ॥ ८ ॥
मित्रलाभः, सुहृद्भेदो, विग्रहः, सन्धिरेव च ।
पञ्चतन्त्रात् तथाऽन्यस्माद् ग्रन्थादाकृष्य लिख्यते ॥ ९ ॥

(६) विद्येति ।—विद्या शास्त्रज्ञानं, विनयं सौजन्यं, ददाति, जनाय इति शेषः ; विनयात् नम्रतालाभानन्तरं, पात्रतां गुणशालित्वं सकलकार्य्यकरणयोग्यताम् इत्यर्थः, याति प्राप्नोति, [ विद्वानिति कर्तृपदं सर्वत्राध्याहार्य्यम् ]। पात्रत्वात् धनम् आप्नोति, धनात् धर्मं, ततः तस्मात् धर्मात्, सुखम् आप्नोतीत्यनेनान्वयः, अतो विद्यैव सर्व्वमूलमिति भावः ।

(७) विद्येति ।—शस्त्रञ्च शास्त्रञ्च विद्या विद्याशब्दप्रतिपाद्यमित्यर्थः । एते द्वे विद्ये प्रतिपत्तये यशोलाभाय, [ तादर्थ्ये चतुर्थी ] भवतः इति शेषः । आद्या विद्या अत्र श्लोके प्रथमोक्ता विद्या शस्त्रविद्येत्यर्थः, वृद्धत्वे वार्द्धके उपस्थिते सति, सामर्थ्यापगमे इति भावः, हास्याय उपहासाय, शस्त्रव्यवहारे अपारकत्वात् । द्वितीया शास्त्रविद्या, सर्व्वसाधकतया सदा सर्वस्मिन् बाल्ये यौवने प्रौढ़े वार्द्धकेऽपि च चतसृषु अवस्थास्वित्यर्थः, आद्रियते लोकैः पूज्यते, आदृता भवतीति भावः ।

(८) यदिति ।—यत् यस्मात्, नवे नूतने, आर्द्रे, भाजने पात्रे मृत्पात्रादौ, लग्नः अङ्कितः, संस्कारः कारुचिह्नादिकं, न अन्यथा अन्यप्रकारः विलीन इत्यर्थः, भवेत् । तत् तस्मात्, बालानां बालकानां सम्बन्धे, इह हितोपदेशग्रन्थे, कथाच्छलेन काककूर्मादीनाम् उपाख्यानव्याजेन, नीतिः कथ्यते उपदिश्यते, मयेति शेषः ।

(९) मित्रलाभ इति ।—पञ्चतन्त्रात् तदाख्यग्रन्थात्, तथा अन्यस्मात् महाभारत-कामन्दकीयादेः ग्रन्थादाकृष्य समाहृत्य, मित्रलाभः सुहृद्भेदः विग्रहः सन्धिरेव चेति भागचतुष्टयेन विभज्य लिख्यते, मयेति शेषः ।

# कथामुखम् ।

अस्ति भागीरथीतीरे पाटलिपुत्रनामधेयं नगरं, तत्र (क) सर्वस्वामिगुणोपेतः सुदर्शनो नाम नरपतिरासीत्। स भूपतिरेकदा केनापि पठ्यमानं श्लोकद्वयं शुश्राव ।—

"अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं, यस्य नास्त्यन्ध एव सः ॥ १० ॥
यौवनं, धनसम्पत्तिः, प्रभुत्वमविवेकिता ।
एकैकमप्यनर्थाय, किमु यत्र चतुष्टयम् ?" ॥ ११ ॥

इत्याकर्ण्यात्मनः पुत्राणाम् (ख) अनधिगतशास्त्राणां नित्यमुन्मार्गगामिनां शास्त्राननुष्ठानेनोद्विग्नमनाः स राजा चिन्तयामास ।—

---

(क) सर्वस्वामिगुणोपेतः—सर्वैः स्वामिनः गुणैः शौर्यवीर्यादिभिर्दयादाक्षिण्यादिभिश्च उपेतः युक्तः, निखिलप्रभुलक्षणसम्पन्न इति यावत् ।

(१०) अनेकेति ।—अनेकेषु विषयेषु संशयस्तम् उच्छिनत्तीति तथोक्तं बहुविषयकसंशयनिरासकम्, अनेकेषां संशयानामुच्छेदीति वा । अक्ष्णाम् इन्द्रियाणां परः परोक्षः [ अः समासान्तः ] स चासौ अर्थश्चेति तस्य अतीन्द्रियस्य, यद्वा,—अक्ष्णः परः परोक्षः [टच् समासान्तः निपातनात् परस्यौकारादेशः ] तथाविधस्यार्थस्य प्रत्यक्षाविषयीभूतस्य, विषयस्य दर्शकं प्रत्यक्षकारकं, सर्वस्य जनस्य लोचनं चक्षुर्भूतं, शास्त्रं विद्या इत्यर्थः, यस्य जनस्य नास्ति सः अन्धः दृष्टिहीनः एव, तदभावेन हिताहितविवेचनाऽसमर्थत्वादिति भावः ।

(११) यौवनमिति ।—यौवनं यौवनावस्था, धनसम्पत्तिः धनशालिता, प्रभुत्वं प्रभुता, आधिपत्यमिति यावत्, अविवेकिता विवेकशून्यता, एतेषां चतुर्णां मध्ये एकैकं प्रत्येकम् अपि, अनर्थाय अमङ्गलाय, भवतीति शेषः, यत्र [ तत्रेति पाठान्तरम् ] यस्मिन् पुरुषे, चतुष्टयं यौवनादीनां चतुर्णां समवायः, तत्र तस्मिन् पुरुषे, किमु ? किं वक्तव्यम् ? तस्य अनर्थोत्पत्तिरवश्यम्भाविनीति भावः ।

(ख) अनधिगतशास्त्राणां—न अधिगतं लब्धं पठितमित्यर्थः, शास्त्रं यैः

"कोऽर्थः पुत्रेण जातेन, यो न विद्वान् न धार्मिकः ?।
काणेन चक्षुषा किं वा चक्षुः पीडैव केवलम् ॥ १२ ॥
अजातमृतमूर्खाणां वरमाद्यौ, न चान्तिमः।
सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥ १३ ॥
किञ्च—वरं गर्भस्रावो वरमपि च नैवाभिगमनं,
वरं जातः प्रेतो, वरमपि च कन्याऽवजनिता।
वरं वन्ध्या भार्य्या, वरमपि च गर्भेषु वसतिः,
न वाऽविद्वान् रूपद्रविणगुणयुक्तोऽपि तनयः ॥ १४ ॥

---

तेषां, शास्त्रज्ञानरहितानाम्। नित्यमुन्मार्गगामिनां—सदा कुपथप्रवृत्तानां क्रीड़ादिव्यसनासक्तानामिति यावत्।

(१२) कोऽर्थ इति।—यः पुत्रः न विद्वान् शास्त्रज्ञानवान्, न धार्म्मिकः धर्म्मज्ञः धर्म्मानुशीलनरतः इत्यर्थः, तेन पुत्रेण जातेन उत्पन्नेन [साध्यते इत्यस्य करणे तृतीया।] कः अर्थः ? किं प्रयोजनम् ? अपि तु तस्य जन्म क्लेशायैवेत्याह, काणेनेति।— काणेन दर्शनशक्तिविहीनेन, चक्षुषा [अत्रापि करणे तृतीया, न तु येनाङ्गेनाङ्गिनो विकार इति तृतीया] वा किं ? किं प्रयोजनमित्यर्थः, चक्षुः तादृशं चक्षुः, केवलं पीडा एव पीडादायकमेवेत्यर्थः, भवतीति शेषः, न तु तस्मात् किमपि फलं भवतीति भावः। काणचक्षुरिव मूर्खः पुत्रः केवलं पित्रोः क्लेशायेत्यर्थः।

(१३) मृतपुत्रादपि मूर्खपुत्रस्य शोकहेतुत्वमाह, अजातेति।—अजातः अनुत्पन्नः, मृतः उत्पद्य कालवशं गतः, मूर्खः विद्याहीनस्तेषां मध्ये [निर्द्धारणे षष्ठी, क्वचित् तत्रैव पञ्चमीबहुवचनं दृश्यते] आद्यौ प्रथमनिर्द्दिष्टौ अजातमृतौ, वरं श्रेष्ठौ, अन्तिमः मूर्खस्तु, न, वरमिति शेषः। कुतः न वरम् ? इत्याह, सकृदिति।—आद्यौ अजातमृतौ हि, सकृद्दुःखकरौ वारमेकमेव क्लेशावहौ, अन्तिमः शेषः मूर्खस्तु, पदे पदे प्रतिपदं [वीप्सायां द्वित्वम्] नियतमेव, क्लेशकरः इति शेषः।

(१४) वरमिति।—गर्भस्रावः कुक्षिस्थभ्रूणस्य पातः, वरम् ईषत्प्रीतिकरः। ["देवाद्वृते वरः श्रेष्ठे त्रिषु, क्लीवं मनाक्प्रिये" इत्यमरः] नैवाभिगमनम् ऋतुमत्या भार्य्यया सह सम्भोगाभावोऽपि च वरं, ऋतौ पत्न्युपेक्षाजनितपापमपि मनाक्प्रियम् इत्यर्थः। जातः प्रेतः उत्पद्य मृतः पुत्रश्च वरम्। अवजनिता उत्पादिता कन्याऽपि च वरम्। वन्ध्या अप्रसूतसन्ताना, भार्य्यापि वरम्। गर्भेषु कुक्षिषु, वसतिः स्थितिरपि,

स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्त्तिनि संसारे मृतः को वा न जायते ? ॥ १५ ॥

अन्यच्च—गुणिगणगणनारम्भे न पतति कठिनी ससम्भ्रमाद् यस्य ।
तेनाम्बा यदि सुतिनी, वद वन्ध्या कीदृशी भवति ? ॥१६॥

अपिच,—दाने तपसि शौर्य्ये च यस्य न प्रथितं मनः ।
विद्यायामर्थलाभे च, मातुरुच्चार एव सः ॥ १७ ॥

अपरञ्च,—वरमेको गुणी पुत्रो, न च मूर्खशतैरपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणैरपि ॥ १८ ॥

---

अप्रसवोऽपि च, वरं, पुत्रस्येति शेषः। किन्तु रूपद्रविणगणयुक्तः रूपराशिधनरा[शि]युक्तोऽपि, अविद्वान् मूर्खः, तनयः न वा वरं नैव काङ्क्षितव्य इत्यर्थः। शिखरि[णी] वृत्तम् ।—"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात् ।

(१५) स इति ।—येन पुत्रेण जातेन उत्पन्नेन, वंशः समुन्नतिम् उत्कर्षं, याति प्राप्नोति, यो हि कुलदीपकः, स जातः प्रशस्तजन्मा सफलजन्मेति यावत् ; परिवर्त्ति[नि] पुनरावृत्तिधर्म्मिणि, संसारे जगति, को वा जनः मृतः सन् न जायते ? पुनः [न] उत्पद्यते ? अपि तु सर्व एव जायते, परन्तु यः कुलोज्ज्वलकारी स एव पुत्र इत्यर्थः।

(१६) गुणिगणेति ।—गुणिगणस्य गुणवतां जनानां समूहस्य, गणनायाः "[इमे] गुणिनः" इति संख्याकरणस्य, आरम्भे प्रथमे, यस्य पुत्रस्य सम्बन्धे कठिनी (खड़ी[इति] भाषा) तया कृता रेखेत्यर्थः, ससम्भ्रमात् सगौरवात, सर्वाग्रे इत्यर्थः, न पतति, ते[न] पुत्रेण यदि अम्बा माता, सुतिनी पुत्रवती, तदा वन्ध्या अपुत्रा, कीदृशी भवति व[द] कथय; सैव वन्ध्येति भावः, गुणवज्जनन्येव पुत्रवती न तु निर्गुणजननीति। "ससम्[भ्र]मात्" इत्यत्र क्वचित् "ससम्भ्रमं" क्वचिच्च "सुसम्भ्रमात्" इति पाठान्तरं दृश्यते [आ]र्य्या जातिः ।

(१७) दाने इति ।—दाने सत्पात्रे धनवितरणे, तपसि तपस्यायां, शौर्य्ये शूरता[-] प्रकटने, विद्यायां विद्योपार्जने, अर्थलाभे धनोपार्जने च [ सर्वत्र विषयाधिकरणे सप्तमी ] यस्य पुत्रस्य मनः [ पाठान्तरे यशः ] न प्रथितं प्रख्यातं सोत्सुकमिति याव[त्,] स तादृशः यशोरहितः पुत्रः, मातुर्जनन्याः, उच्चारः मलसदृश एव, [ "उच्चारावस्करौ शमलं शकृत्" इत्यमरः ] तादृशस्य पुत्रस्य जन्म निरर्थकमित्यर्थः।

(१८) वरमिति ।—गुणी गुणवान्, एकः एकमात्रः, पुत्रस्तनयोऽपि, वरं श्रेयान्

पुण्यतीर्थे कृतं येन तपः क्वाप्यतिदुष्करम्।
तस्य पुत्रो भवेद् वश्यः, समृद्धो धार्मिकः सुधीः ॥ १९ ॥

तथा चोक्तम्—अर्थागमो नित्यमरोगिता च,
प्रिया च भार्य्या प्रियवादिनी च।
वश्यश्च पुत्रोऽर्थकरी च विद्या,
षड् जीवलोकेषु सुखानि राजन्! ॥ २० ॥

को धन्यो बहुभिः पुत्रैः, कुशूलापूरणाढ़कैः?।
वरमेकः कुलालम्बी, यत्र विश्रूयते पिता ॥ २१ ॥

---

गुणत्वात् वाञ्छनीयः, मूर्खशतैः शतसङ्ख्यकैः मूर्खैः पुत्रैः अपि [ "भूयते" इत्यध्याहार्य्यक्रियायाः अनुक्ते कर्त्तरि तृतीया ] न च, वरैर्भूयते इति शेषः, तैः न किमपि प्रयोजनमित्यर्थः। "मूर्खशतान्यपि" इति पाठान्तरम्। तथाहि एकः एकाकी अपि, चन्द्रः तमः निखिलं ध्वान्तं, हन्ति नाशयति दूरीकरोतीति यावत्, ताराणां नक्षत्राणां, गणाः समूहास्तैरपि मिलितैः [ अत्रापि "हन्यते" इत्यूह्यक्रियापदस्य अनुक्ते कर्त्तरि तृतीया ] न च, तमः हन्यते इति शेषः। "तारागणोऽपि च" इति पाठान्तरम्।

(१९) पुण्येति।—येन पुरुषेण, क्वापि कुत्रचिदपि, पुण्यतीर्थे पवित्रे वाराणस्यादौ क्षेत्रे, [ तरति अनेन गर्भवासात् इति तॄ+थक् तीर्थं ] अतिदुष्करम् अतिकठोरं, तपः यागादिनियमविशेषः, कृतम् अनुष्ठितम् आचरितमिति यावत्, तस्य पुत्रः सुतः, वश्यः आज्ञावहः, समृद्धः धनसम्पन्नः, धार्म्मिकः धर्म्मपरायणः, सुधीः पण्डितश्च भवेत्। "पुत्रे यशसि तोये च नराणां पुण्यलक्षणम्" इति स्मरणात् चान्द्रायणादिव्रतपरायणानां पुण्यवतामेव सत्पुत्रलाभो भवेदित्यर्थः।

(२०) अर्थागम इति।—हे राजन्! जीवलोकेषु मर्त्ये जगति, "जीवलोकस्य" इति पाठान्तरम्; षट् वक्ष्यमाणानि षट्प्रकाराणि सुखानि, भवन्तीति शेषः। कानि तानीत्याह, अर्थागम इति।—नित्यं प्रतिदिनम्, अर्थस्य आगमः आयः, प्रत्यहं धनलाभः, अरोगिता च नीरोगित्वं स्वास्थ्ययुक्ततेति यावत्, प्रिया सर्वथा प्रीतिप्रदा, प्रियवादिनी च प्रियं मधुरं वदतीति तथोक्ता मधुरभाषिणी, भार्य्या स्त्री, वश्यः आज्ञावहः, पुत्रः सुतश्च, अर्थकरी अर्थागमहेतुभूता विद्या च इति। वृत्तमुपजातिः।—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" "उपेन्द्रवज्रा प्रथमे लघौ सा" इति च लक्षणात्।

(२१) क इति।—कुशूलैः आपूरणं येषां ते कुशूलापूरणाः ते च आढ़काः

ऋणकर्त्ता पिता शत्रुर्माता च व्यभिचारिणी ।
भार्य्या रूपवती शत्रुः पुत्रः शत्रुरपण्डितः ॥ २२ ॥
यस्य तस्य प्रसूतोऽपि गुणवान् पूज्यते नरः ।
धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति ? ॥ २३ ॥
हा हा पुत्रक ! नाधीतं गतास्वेतासु रात्रिषु ।
तेन त्वं विदुषां मध्ये पङ्के गौरिव सीदसि ॥ २४ ॥

---

र्थात तैः तुषपूर्णपरिमाणपात्रसदृशैः, बहुभिः पुत्रैः असारतुषपूर्णपात्रवत् विद्यादिगुण-शून्यत्वादकिञ्चित्करैरिति भावः ; को जनः धन्यः श्लाघनीयः ? न कोऽपीत्यर्थः। किन्तु यत्र यस्मिन् पुत्रे जाते सति, पिता विश्रूयते परिकीर्त्त्यते इत्यर्थः, लोकैरिति शेषः, लोकेषु विख्यातो भवति तादृशः, कुलं वंशम् आलम्बते श्रयति, सत्कार्य्यादिना प्रतिष्ठामापादय-तीत्यर्थः, यः स कुलालम्बी कुलधुरन्धरः कुलप्रदीप इति यावत्, एकः पुत्रः, वरं श्रेयान्।

(२२) ऋणकर्त्तेति।—ऋणस्य कर्त्ता गृहीता, पिता तातः, शत्रुः शत्रुसदृशः, भवेदिति शेषः। तथा व्यभिचारिणी परपुरुषगामिनी, माता च शत्रुः शत्रुसदृशी। रूपवती अत्यन्तसुरूपा, भार्य्या पत्नी, शत्रुः शत्रुसदृशी, एवम् अपण्डितः मूर्खः, पुत्रः शत्रुः शत्रुसदृशः, शत्रुवत् कष्टदाता इत्यर्थः।

(२३) यस्येति।—गुणाः विद्यन्ते अस्य इति गुणवान् नरः, यस्य तस्य, "कस्य" इति पाठान्तरम् ; अनिर्द्दिष्टस्य वंशस्य इत्यर्थः, [ सम्बन्धविवक्षायां षष्ठी ] प्रसूतोऽपि जातोऽपि सन्, पूज्यते सम्मान्यते, लोकैरिति शेषः। तत्र दृष्टान्तः,—वंशः वेणुः विशुद्धः यस्य सः उत्तमवेणुसञ्जातोऽपि, ("वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च" इति मेदिनी) धनुः चापः, [ उसन्तधनुस्-शब्दस्य रूपमिदम्। उणा० पा० २।११४—११६ सू० ] निर्गुणः ज्याहीनः चेत्, ("गुणो ज्यासूत्रतन्तुषु। रूपादावप्रधाने च दोषान्यस्मिन् विशेषणे॥" इति हैमः) किं करिष्यति ? न किमपि इत्यर्थः। उत्तमवंशनिर्म्मितमपि धनुर्यथा गुणहीनं किमपि स्वकार्य्यं साधयितुं न शक्नोति, तथा उत्तमकुले सञ्जातोऽपि नरः यदि गुणहीनो भवति, तदा सोऽपि कार्य्यकरणे नालं भवतीति भावः।

(२४) हा हेति।—हा हेति खेदे। हे पुत्रक ! एतासु गतासु रात्रिषु याः रात्रयः गताः तासु, अतीतेषु एतेषु दिनेषु इत्यर्थः, त्वया न अधीतम् इति यत् तेन कारणेन त्वं विदुषां मध्ये उपस्थितः इत्यर्थः, पङ्के गौरिव सीदसि अवसन्नो भविष्यसि इत्यर्थः। यथा हि पङ्के पतितः गौः बुद्ध्यभावात् उत्थातुं नालं भवति तथा त्वमपि पण्डितसभायां गतः विद्याबुद्धिविहीनत्वात् अवसन्नो भविष्यसि इति।

तत् कथमिदानीमिति मम पुत्रा गुणवन्तः क्रियन्ताम् ? यतः,—

आहारनिद्राभयमैथुनञ्च
सामान्यमेतत् पशुभिर्नराणाम्।
धर्मो हि तेषामधिको विशेषो,
धर्मेण हीनाः पशुभिः समानाः॥ २५॥

यतः,—धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते।
अजागलस्तनस्येव तस्य जन्म निरर्थकम्॥ २६॥

यच्चोच्यते,—आयुः कर्म च वित्तञ्च विद्या निधनमेव च।
पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः॥ २७॥

किञ्च,—अवश्यम्भाविनो भावा भवन्ति महतामपि।
नग्नत्वं नीलकण्ठस्य, महाहिशयनं हरेः॥ २८॥

---

(२५) आहारेति।—आहारश्च निद्रा च भयञ्च मैथुनञ्च तेषां समाहारः, नराणाम् एतत् आहारादिकं पशुभिः सामान्यं तुल्यम्। किन्तु तेषां नराणां, धर्मः हि धर्म एव, अधिकः विशेषः पशुभ्यो व्यवच्छेदकः। तथा सति धर्मेण हीनाः वर्जिताः नराः, पशुभिः समानास्तुल्याः, धर्मविवर्जितानां नराणां पशुभ्यो नास्ति कश्चिद्विशेष इत्यर्थः। इन्द्रवज्रा वृत्तम्।

(२६) धर्मार्थेति।—यस्य जनस्य धर्मश्च अर्थश्च कामश्च मोक्षश्च तेषां, चतुर्वर्गस्येत्यर्थः, मध्ये एकोऽपि न विद्यते नास्ति, अजा छागी तस्याः गलस्तनस्य गलदेशजातस्तनस्येव तस्य धर्मादिपुरुषार्थचतुष्टयविहीनस्य, जन्म उत्पत्तिः, निरर्थकं विफलम्।

(२७) आयुरिति।—आयुर्जीवितकालः, कर्म जीवदवस्थायां कार्य्यकलापश्च, वित्तं सम्पच्च, विद्या शास्त्रज्ञानं, निधनं मरणञ्च, एतानि आयुरादीनि पञ्चापि, गर्भस्थस्य मातृगर्भे स्थितस्यैव, प्रसवात् प्रागेव, देहिनः शरीरिणः सम्बन्धे, सृज्यन्ते निर्णीयन्ते, स्रष्ट्रेति शेषः। भूमिष्ठीभवनात् प्रागेव देहिनाम् आयुरादीनि पञ्च निर्दिष्टानीत्यर्थः।

(२८) अवश्यमिति।—महताम् अलौकिकशक्तिसम्पन्नानामपि देवानामपीति भावः, अवश्यम्भाविनः अवश्यमेव भवितव्याः, भावाः विषयाः, भवन्ति सम्पद्यन्ते, "नियतिः केन बाध्यते ?" इति भावः। तदेवोदाहरन्नाह—नीलः कण्ठे यस्य तस्य हरस्य, नग्नत्वं दिगम्बरत्वं, हरेः विष्णोः, महान् अहिः सर्पः महाहिरनन्तः तस्मिन् शयनम्, अथवा "महाहिः" इति पाठे महाहिः शयनं शय्या [ शेतेऽस्मिन्निति आध-

अन्यच्च,—यदभावि न तद्भावि, भावि चेन्न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ? ॥ २९ ॥

एतत् (ग) कार्य्याक्षमाणां केषाञ्चिदालस्यनिबन्धनं वचनम् ।

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिध्यति ॥ ३० ॥

तथाच,—पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते ।
तस्मात् पुरुषकारेण यत्नं कुर्य्यादतन्द्रितः ॥ ३१ ॥

न दैवमपि सञ्चिन्त्य त्यजेदुद्योगमात्मनः ।
अनुद्योगेन तैलानि तिलेभ्यो नाप्तुमर्हति ॥ ३२ ॥

---

करणे ल्युट् ]। महादेवोऽपि यदा वस्त्राभावेन नग्नः तथा त्रैलोक्यनाथो विष्णुरपि यदा शय्याभावेन नागशायी वर्त्तते तदा नियतिरपरिहार्य्यैव ।

(२९) यदिति ।—यत् अभावि असम्भवं, तत् न भावि न भविष्यत्येव । भावि अवश्य सम्भवं चेत्, तत् अन्यथा विपरीतं न, भविष्यतीति शेषः । इति इत्थम्, अयम् ईदृशः, न कोऽपि भवितव्यद्वाराणि पिधातुमीष्टे इत्येवंरूपः, चिन्तैव विषं तत् हन्तीति चिन्ताविषनाशकः, नास्ति गदो यस्मात् स अगदः औषधं, किं कथं, न पीयते ? न सेव्यते ? एवं सति सर्वथा सेवनीय एवेत्यर्थः ।

(ग) कार्य्याक्षमाणां—कार्य्यसम्पादने अशक्तानाम्, अलसानामिति यावत् ।

(३०) पुरुषकारौत्कर्ष्यमाह, यथेत्यादिभिः ।—एकेन चक्रेण यथा रथस्य स्यन्दनस्य, गतिः चलनं, न हि भवेत्, एवं पुरुषकारेण पुरुषस्य चेष्टया विना, दैवं भाग्यं, [ "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः ] न सिध्यति न फलति । पौरुषेण विना केवलेन दैवेन किमपि कार्य्यं न सम्पद्यते इत्यर्थः ।

(३१) पूर्वश्लोके दैवं न सिध्यतीत्युक्तं, किं तद्दैवमित्याह, पूर्वजन्मेति ।—पूर्वस्मिन् जन्मनि कृतं सम्पादितं कर्म पुरुषकारः, प्राग्भवीयं यत् पौरुषमित्यर्थः, तत् दैवमिति कथ्यते उच्यते, बुधैरिति शेषः । तस्मात् कारणात् दैवस्यापि पूर्वजन्मकृतकर्म्मविशेषत्वेन पौरुषेणाविशेषत्वात्, जन्मान्तरेऽपि पौरुषाश्रयणादित्यर्थः तन्द्रा अस्य जाता तन्द्रितः, स न भवति इत्यतन्द्रितः अनलसः सन्, पुरुषकारेण करणेन पौरुषमवलम्ब्य इत्यर्थः, यत्नं कार्य्यसाधनाय उद्योगं, कुर्य्यात् ।

(३२) अलसानां किमपि न सिध्यति अतः आलस्यपरिवर्ज्जनं सर्व्वथा कर्त्तव्य-

अन्यच्च,—उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवेन देयमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या,
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः॥ २३॥

यथा मृत्पिण्डतः कर्त्ता कुरुते यद् यदिच्छति।
एवमात्मकृतं कर्म मानवः प्रतिपद्यते॥ २४॥

अपरञ्च,—काकतालीयवत् प्राप्तं दृष्ट्वापि निधिमग्रतः।
न स्वयं दैवमादत्ते, पुरुषार्थमपेक्षते॥ २५॥

---

मित्याह, नेति।—दैवमपि सञ्चिन्त्य आत्मनः उद्योगं न त्यजेत् "अहं किं करवाणि? यथा ममादृष्टं विद्यते तथैव भविष्यति" इति मत्वा चेष्टां न परिहरेत्; यतः,—अनुद्योगेन अचेष्टया इति भावः, तिलेभ्यः तैलानि तिलेषु वर्त्तमानान्यपि, आप्तुं लब्धुं कर्त्तुमित्यर्थः, न अर्हति न योग्यो भवति, जन इति शेषः।

(२३) पुरुषव्यापारमन्तरेण न किमपि सिध्यति इति वक्तुं दैववादिनां निन्दनीयत्वमाह, उद्योगिनमित्यादिभिश्चतुर्भिः।—लक्ष्मीः सम्पदधिष्ठात्री देवी, उद्योगिनं कार्य्यसम्पादनार्थं यतमानं, पुरुषः सिंह इव पुरुषसिंहः तम् ["उपमितं व्याघ्रादिभिः" इत्यनेन उपमितकर्मधारयः।] पुरुषश्रेष्ठम्, उपैति प्राप्नोति आश्रयति। दैवेन भाग्येन, देयं सम्पादनीयमिति, कापुरुषाः कुत्सिताः पुरुषाः ["वा पुरुषे" इति वैकल्पिकः कादेशः] अशक्ताः पौरुषहीना एव पुरुषाः, वदन्ति कथयन्ति। अतः दैवं निहत्य निराकृत्य अवज्ञया दूरीकृत्येत्यर्थः, आत्मशक्त्या स्वसामर्थ्येन, पौरुषं कुरु आश्रयस्व। यत्ने उद्योगे, कृते सति यदि न सिध्यति कार्य्यं न सम्पद्यते, तदा अत्र यत्ने, कः कश्चिदपि, दोषः यतमानस्य त्रुटिः, विद्यते इति शेषः, अन्यथा कथं कार्य्यसिद्धिर्न भवेत्? सम्यक् यत्नश्चेत् कर्त्तुं शक्यते, तदा नूनमेव कार्य्यसिद्धिरिति मन्तव्यम्। वसन्ततिलकं वृत्तम्—"ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति लक्षणात्।

(२४) यथेति।—यथा यद्वत्, कर्त्ता कुम्भकारः, मृत्पिण्डतः मृत्तिकास्तूपात्, यत् यत् शरावादिकम्, इच्छति निर्मातुमभिलषति, तत् तत् कुरुते निर्माति; एवं तथा, मानवः आत्मकृतं स्वकृतं स्वप्रयत्नानुरूपं, कर्म कर्मफलमित्यर्थः, प्रतिपद्यते लभते। प्रयत्नतारतम्येन स्वानुष्ठितं कार्य्यं विभिन्नरूपेण परिणमतीत्यर्थः।

(२५) काकेति।—काकतालीयवत् काकतालीयन्यायेन काकगमनकाले अवि-

उद्यमेन हि सिध्यन्ति कार्य्याणि, न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ ३६ ॥

तथा चोक्तम्,—माता शत्रुः पिता वैरी, येन बालो न पाठितः ।
न शोभते सभामध्ये, हंसमध्ये वको यथा ॥ ३७ ॥

रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ३८ ॥

अपरञ्च,—पुस्तकेषु च नाधीतं, नाधीतं गुरुसन्निधौ ।
न शोभते सभामध्ये, जारगर्भ इव स्त्रियाः" ॥ ३९ ॥

---

काकतालपतनवदित्यर्थः, प्राप्तम् उपस्थितं, निधिं धनविशेषम्, अग्रतः पुरतः, दृष्ट्वा दैव तत् स्वयं न आदत्ते गृह्णाति, अपि तु पुरुषार्थम् अभीष्टप्रापकं हस्तेन ग्रहणादिप्रयत्नम्, अपेक्षते आश्रयति अवलम्बते इति यावत्। अतः पौरुषमेवाश्रयणीयमिति भावः।

(३६) उद्यमेनेति।—कार्य्याणि साधयितुमभिप्रेतानि कर्माणि, उद्यमेन उद्योगेन, सिध्यन्ति सम्पद्यन्ते सफलानि भवन्ति इति भावः, मनोरथैः केवलं सम्पादनवासनाभिः न, सिध्यन्तीति शेषः। हि तथाहि सुप्तस्य निद्रितस्य अचेष्टमानस्येति यावत्, सिंहस्य मुखे मृगाः पशवः, न प्रविशन्ति, स्वयमिति भावः।

(३७) मातेति।—येन माता-पित्रोरन्यतमेन, बालः न पाठितः न शिक्षितः, सा माता, तस्य बालकस्येति शेषः, शत्रुः अहितकारिणी, स पिता जनकः, वैरी शत्रुः भवतीति शेषः। स बालकः हंसमध्ये वको यथा वक इव [ अत्र यथाशब्द इवार्थे ] सभामध्ये न शोभते न आदृतो भवति।

(३८) रूपयौवनेति।—रूपं शरीरकान्तिः, यौवनं तरुणत्वं, ताभ्यां सम्पन्नाः युक्ताः रूपवन्तः युवानश्चेत्यर्थः। तथा विशालं महत् कुलं तस्मिन् सम्भवः उत्पत्तिर्येषां ते तथोक्ताः महाकुलसम्भूताः, अपीति शेषः, विद्यया हीनाः विद्याहीना निर्गुणाः पुरुषाः, निर्गन्धाः सौरभहीनाः, किंशुकाः पलाशकुसुमानीव, न शोभन्ते न राजन्ते, न समादृता भवन्तीत्यर्थः। विद्याहीनस्य रूपयौवनादिकं सर्व्वमेव विफलमिति भावः।

(३९) पुस्तकेष्विति।—येन बालेन पुस्तकेषु ग्रन्थेषु च, न अधीतं पठितं, गुरुसन्निधौ शिक्षागुरोः सकाशेऽपि, न अधीतं पठितम्, उभयत्रापि किमपि शास्त्रमिति शेषः, तादृशो बालकः स्त्रियाः रमण्याः, जारगर्भः उपपतिसम्भोगजनितः बालक इव, सभामध्ये लोकसमाजे, न शोभते न उत्कर्षेण राजते।

एतच्चिन्तयित्वा स राजा (घ) पण्डितसभां कारितवान्। राजोवाच,—"भो भोः पण्डिताः! श्रूयतां मम वचनम्—अस्ति कश्चिद् (ङ) एवम्भूतो विद्वान्, यो मम पुत्राणां नित्यम् उन्मार्गगामिनाम् (च) अनधिगतशास्त्राणाम् इदानीं (छ) नीतिशास्त्रोपदेशेन पुनर्जन्म कारयितुं समर्थः? यतः,—

काचः काञ्चनसंसर्गाद्धत्ते मारकतीर्द्युतीः।
तथा सत्सन्निधानेन मूर्खो याति प्रवीणताम्॥ ४०॥

उक्तञ्च,—हीयते हि मतिस्तात! हीनैः सह समागमात्।
समैश्च समतामेति, विशिष्टैश्च विशिष्टताम्"॥ ४१॥

---

(घ) पण्डितानां सभा पण्डितसभा ताम्।

(ङ) एवम्भूतः,—ईदृशः। उन्मार्गगामिनाम्—उत् उद्गतः, कुत्सित इत्यर्थः, मार्गः पन्थाः, तस्मिन् गच्छन्ति ये तेषां, सदा कुकर्मप्रवृत्तानाम् इत्यर्थः। ["प्रात् स्थोऽयगामिनि" इति सूत्रे दन्त्यनकारनिर्देशात् "गामिन्" शब्दस्य णत्वाभावो बोध्यः]।

(च) अनधिगतशास्त्राणाम्—अनधिगतम् अविदितम्, अपठितम् इत्यर्थः, शास्त्रं यैस्तेषां, शास्त्रज्ञानविहीनानाम्।

(छ) नीतिशास्त्रोपदेशेन—नीतिशास्त्रशिक्षया।

(४०) काच इति।—काचः तदाख्यः अनायासभेद्यः मणिविशेषः, काञ्चनसंसर्गात् सुवर्णसङ्गेन, सुवर्णसान्निध्यादित्यर्थः, (अत्र यथेति पदम् अध्याहार्य्यम्) मारकतीः मरकतो हरिद्वर्णमणिविशेषः तत्सम्बन्धिनीः, द्युतीः कान्तीः, धत्ते धारयति, प्राप्नोतीति यावत्। तथा तद्वत्, सतां सन्निधानं संसर्गः तेन साधुसङ्गेन, मूर्खः प्रवीणताम् अभिज्ञतां, याति लभते।

(४१) हीयते इति।—हे तात वत्स! ["स्निग्धे पितरि पूज्ये च तातशब्दः प्रयुज्यते"] हीनैः स्वापेक्षया अल्पबुद्धिभिः, सह समागमात् संसर्गात्, मतिः बुद्धिः, हीयते हीना भवति, [कर्म्मकर्त्तरि लट्]। समैः समानैः, तुल्यज्ञानैरिति यावत्, सह समागमादिति सर्व्वत्र सम्बन्धः; मतिः समतां समानत्वम्, एति च प्राप्नोति च, न उन्नतिं नावनतिञ्च लभते इत्यर्थः। विशिष्टैः स्वापेक्षया प्रकृष्टबुद्धिभिः, विशिष्टताम् उत्कृष्टताञ्च, एतीति शेषः। "संसर्गजा दोषगुणा भवन्ति" इति स्मरणात् सदा सत्सङ्ग एव स्वोत्कर्षसाधनस्य प्रकृष्टोपाय इति भावः।

अत्रान्तरे विष्णुशर्म्मनामा महापण्डितः (ज) सकलनीति-शास्त्रतत्त्वज्ञो बृहस्पतिरिवाब्रवीत्,—"देव ! (झ) महाकुल-सम्भूता एते राजपुत्राः, तन्मया नीतिं (ञ) ग्राहयितुं शक्यन्ते।

यतः,—नाद्रव्ये निहिता काचित् क्रिया फलवती भवेत्।
न व्यापारशतेनापि शुकवत् पाठ्यते वकः ॥ ४२ ॥

अन्यच्च—अस्मिंस्तु निर्गुणं गोत्रे नापत्यमुपजायते।
आकरे पद्मरागाणां जन्म काचमणेः कुतः ? ॥ ४३ ॥

अतोऽहं षण्मासाभ्यन्तरे भवत्पुत्रान् (ट) नीतिशास्त्रा-भिज्ञान् करिष्यामि"। राजा सविनयं पुनरुवाच,—

---

(ज) सकलनीतिशास्त्रतत्त्वज्ञः,—सकलानां समस्तानां, नीतिशास्त्राणां राज-नीतिधर्म्मनीतिप्रभृतीनां, तत्त्वस्य रहस्यस्य, ज्ञः, सकलनीतिशास्त्रपारदर्शी।

(झ) महाकुलसम्भूताः,—महत् कुलं महाकुलं, तस्मिन् सम्भूताः उत्पन्नाः।

(ञ) ग्राहयितुं—प्रापयितुं, शिक्षयितुम् इत्यर्थः।

(४२) नाद्रव्ये इति।—अद्रव्ये अयथाभूते विषये, अयोग्यपात्रे इत्यर्थः, निहिता प्रयुक्ता, काचिदपि क्रिया शिक्षादानादिरूपा, फलवती सफला, न भवेत्। तदेव दृष्टान्तेन द्रढयति,—व्यापारशतेनापि बहुशश्चेष्टयापि, वकः शुकवत् शुकेन तुल्यं, ["तेन तुल्यं क्रिया चेद्वतिः" (५।१।११५ पा०) इति वतिः] न पाठ्यते न अध्याप्यते, पाठयितुं न शक्यते इत्यर्थः।

(४३) अस्मिन्निति।—अस्मिन् गोत्रे राज्ञः महति वंशे, तु निर्गुणं गुणहीनम् अपत्यं सन्ततिः, न उपजायते न उत्पद्यते, [अत्र "उपजायते" इति क्रियायाः हेतुत्वाभावात् "गोत्रे" इति पदस्य नापादानत्वम्; "जनिकर्त्तुः प्रकृतिः" (१।४।३० पा०) इति सूत्रे "जायमानस्य हेतुरपादानं स्यात्" इति भट्टोजिदीक्षितवचनात्]। तथा हि पद्मरागाणां पद्मरागाख्यबहुमूल्यमणिविशेषाणाम्, आकरे उत्पत्तिस्थाने, काचमणेः क्षणभङ्गुरत्वात् अल्पमूल्यत्वाच्च अतिनिकृष्टस्य मणिविशेषस्य, जन्म उत्पत्तिः, कुतः ? कस्मात्, सम्भवतीति शेषः; महावंशसम्भूतत्वात् विनाप्यध्ययनादिकं वंशसुलभः नैसर्गिकः धीमत्त्वादिगुणसमूहः एषामस्त्येव, अतः स्वल्पायासेनैव एतान् शिक्षयितुं शक्नोमीति भावः।

(ट) नीतिशास्त्राभिज्ञान्—नीतेः शास्त्रं नीत्यै नीतिज्ञानाय शास्त्रमिति वा, तस्मिन् अभिज्ञाः पण्डितास्तान्, नीतिशास्त्रकुशलान्।

"कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः॥ ४४॥
अन्यच्च—यथोदयगिरेर्द्रव्यं सन्निकर्षेण दीप्यते।
तथा सत्सन्निधानेन हीनवर्णोऽपि दीप्यते॥ ४५॥
गुणा गुणज्ञेषु गुणा भवन्ति
ते निर्गुणं प्राप्य भवन्ति दोषाः।
आस्वाद्यतोयाः प्रवहन्ति नद्यः
समुद्रमासाद्य भवन्त्यपेयाः॥ ४६॥

(४४) कीट इति।—सुमनसः पुष्पस्य सुमनसां वा, सङ्गात् संसर्गात्, पुष्पेण सह सम्पर्कात् इत्यर्थः, पुष्पमध्ये अवस्थानादिति यावत्, कीटोऽपि सतां महतां, शिरः आरोहति, महतां शिरसि स्थानं लभते इत्यर्थः। तथा अश्मा प्रस्तरोऽपि, महद्भिः साधुभिः, सुप्रतिष्ठितः यथाविधि स्थापितः सन्, देवत्वं याति प्राप्नोति। मत्पुत्रा मूर्खा अपि अधुना भवत्सन्निधानेन गुणवत्तां प्राप्य सर्वपूज्या भविष्यन्तीति निष्कर्षः।

(४५) यथेति।—यथा यद्वत्, उदयगिरेः उदयाचलस्य, सन्निकर्षेण सान्निध्येन, सूर्यकिरणसंयोगेनेत्यर्थः, द्रव्यं वस्तुजातम्, उदयाचलसमीपस्थमिति यावत्, दीप्यते प्रकाशते, दीप्तिमद्भवतीत्यर्थः, तथा सतः महतः, सन्निधानं सन्निकर्षः, संसर्ग इति यावत्, तेन, हीनवर्णः नीचवर्णशाण्डालादिरपि, अथवा हीना वर्णाः अक्षराणि यस्य सः, अक्षरज्ञानशून्यशापि, दीप्यते शोभते, औत्कर्ष्यं लभते इत्यर्थः, हीनत्वापगमात् लोकैः समाद्रियते इति यावत्।

(४६) गुणा इति।—गुणा दयादाक्षिण्यादयः, गुणज्ञेषु गुणिषु आश्रित्येत्यर्थः, गुणा एव भवन्ति प्रकृतगुणत्वेन परिणमन्ति, ते पूर्वोक्ता दयादयो गुणाः, निर्गुणं गुणहीनं पुरुषं, प्राप्य आसाद्य, निर्गुणाविष्ठिताः सन्त इत्यर्थः, दोषाः दोषरूपेण परिणताः, भवन्ति। तथाहि नद्यः सरितः, प्रवहन्ति यावत्कालं समुद्रेणासङ्गत्य स्वयं प्रवहन्त्यः विद्यन्ते इत्यर्थः, तावत् आस्वाद्यतोयाः आस्वाद्यं सुपेयं, तोयं जलं यासु ताहृश्यो भवन्ति, "प्रभवन्ति" इति पाठे—प्रभाववत्यः भवन्ति, स्वादुतोयत्वात् लोकैः समादरणीया भवन्तीत्यर्थः। ता एव समुद्रं लवणोदसागरम्, आसाद्य प्राप्य, अपेयाः लवणसंसर्गेण पानायोग्याः, भवन्ति। यथा हि स्वादूदका नद्यः लवणसंसर्गेण अपेया भवन्ति, तथा स्वभावत एव पूतचरिताः सज्जना अपि दुर्ज्जनसंसर्गेण दुश्चरिता भवन्तीति भावः। वृत्तमुपजातिर्नाम।

तदेतेषामस्मत्पुत्राणां नीतिशास्त्रोपदेशाय (ठ) भवन्तः प्रमाणम्" इत्युक्त्वा तस्य विष्णुशर्म्मणो बहुमानपुरःसरं पुत्रान् समर्पितवान्।

[ इति कथामुखम् ]।

---

## मित्रलाभः।

अथ (ड) प्रासादपृष्ठे सुखोपविष्टानां राजपुत्राणां पुरस्तात् प्रस्तावक्रमेण स पण्डितोऽब्रवीत्,—"भो राजपुत्राः! शृणुत,—

काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा॥ ४७॥

तद्भवतां (ढ) विनोदाय काककूर्मादीनां (ण) विचित्रां

---

(ठ) भवन्तः प्रमाणं—भवन्तः एव प्रमातारः, स्वाधीनवृत्तयः इत्यर्थः, भवानेव समर्थः, अतो यथा भवते रोचते तथैव नीतिमुपदिशतु इति भावः। ["प्रमाणं नित्यमर्य्यादाशास्त्रेषु सत्यवादिनि। इयत्तायाञ्च हेतौ च क्लीवैकत्वे प्रमातरि"॥ इति मेदिनीवचनात् "प्रमाणम्" इत्यत्र एकवचनं क्लीवत्वञ्च]।

---

(ड) प्रासादपृष्ठे—हर्म्योपरि। [प्रासाद इति प्रसीदतेर्घञि उपसर्गदीर्घत्वम्]।

(४७) काव्येति।—प्रशस्ता धीः येषां तेषां धीमतां पण्डितानां, ["भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः"॥ इति नियमात् प्रशंसायां मतुप्] काव्यशास्त्रविनोदेन काव्यशास्त्रालोचनाजनितेन आमोदेन, मूर्खाणां विद्याहीनानाञ्च, व्यसनेन द्यूतपानाद्यासक्त्या, विविधगर्हितकर्म्मानुष्ठानेनेत्यर्थः, निद्रया वा अथवा, कलहेन, कालः समयः, गच्छति याति ; पण्डिताः शास्त्रालोचनयैव मूर्खाश्च व्यसनादिभिरेव कालम् अतिवाहयन्तीत्यर्थः। दिवानिद्राया एव व्यसनान्तर्गतत्वात् अत्र सामान्येन निद्रापदोपन्यासात् न पुनरुक्तिः।

(ढ) विनोदाय—प्रीत्यर्थम्।

(ण) विचित्रां—रमणीयां, विविधाम् इत्यर्थः।

कथां कथयामि"। राजपुत्रैरुक्तम्,—"आर्य्य ! कथ्यताम्"।

विष्णुशर्मोवाच,—"यूयं शृणुत, सम्प्रति (त) मित्रलाभः प्रस्तूयते। यस्यायमाद्यः श्लोकः,—

असाधना वित्तहीना बुद्धिमन्तः सुहृत्तमाः।
साधयन्त्याशु कार्य्याणि काककूर्म्ममृगाखुवत्" ॥ ४८ ॥

राजपुत्रा ऊचुः,—"कथमेतत् ?" सोऽब्रवीत्,—

काक-कूर्म्म-मृग-मूषिककथा।—

"अस्ति गोदावरीतीरे विशालः शाल्मलीतरुः। तत्र (थ) नानादिग्देशादागत्य रात्रौ पक्षिणो निवसन्ति। अथ कदाचित् (द) अवसन्नायां रात्रौ अस्ताचलचूड़ावलम्बिनि भगवति (ध) कुमुदिनीनायके चन्द्रमसि, लघुपतनकनामा वायसः (न) प्रबुद्धः (प) कृतान्तमिव द्वितीयमटन्तं पाशहस्तं व्याधम-

---

(त) मित्रस्य लाभः प्राप्तिः, मित्रलाभाख्यो विषय इत्यर्थः। प्रस्तूयते—प्रस्तावक्रमेण कथ्यते, आरभ्यते इत्यर्थः।

(४८) असाधना इति।—न सन्ति साधनानि अस्त्रशस्त्राद्युपायाः येषां ते असाधनाः उपायहीनाः, वित्तेन धनेन हीनाः निर्धनाः, सुहृत्तमाः परस्परम् अतिशयेन सौहार्द्दमापन्नाः, बुद्धिमन्तः बुद्धिशालिनः, जनाः इति शेषः, काककूर्म्ममृगाखुवत् वायसकच्छपहरिणमूषिकवत्, आशु शीघ्रं, कार्य्याणि साधयन्ति सम्पादयन्ति। वृत्तमिदं विपुलावक्त्रम्।

(थ) नानादिग्देशात्—दिक् च देशश्च तयोः समाहारः दिग्देशं, ततो नानाशब्देन कर्म्मधारयः, तस्मात्, विभिन्नदिशः विभिन्नदेशाच्च इत्यर्थः।

(द) अवसन्नायां—क्षीणायां, प्रभातायाम् इत्यर्थः।

(ध) कुमुदिनीनायके—कुमुद्वतीपतौ।

(न) प्रबुद्धः,—जागरितः।

(प) कृतान्तं—कृतं स्वष्टम् अन्तयति यः, कृतः अन्तः विनाशो येन इति वा सः तं, यमम्।

पश्यत्। तमवलोक्याचिन्तयत्,—"अद्य प्रातरेव (फ) अनिष्ट-दर्शनं जातं, न जाने किम् (ब) अनभिमतं दर्शयिष्यति ?" इत्युक्त्वा तदनुसरणक्रमेण व्याकुलश्चलितः। यतः,—

शोकस्थानसहस्राणि, भयस्थानशतानि च।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम्॥ ४९॥

अन्यच्च—(भ) विषयिणामिदमवश्यं कर्त्तव्यम्,—

उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम्।
मरणव्याधिशोकानां किमद्य निपतिष्यति ?॥ ५०॥

अथ तेन व्याधेन तण्डुलकणान् विकीर्य्य जालं विस्तीर्णम्। स च तत्र प्रच्छन्नो भूत्वा स्थितः। अस्मिन्नेव काले चित्रग्रीव-नामा कपोतराजः सपरिवारो (म) वियति विसर्पंस्तांस्तण्डुल-

---

(फ) अनिष्टदर्शनं—व्याधमुखदर्शनरूपामङ्गलालोकनम्।

(ब) अनभिमतम्—अप्रियम्, अमङ्गलमित्यर्थः। दर्शयिष्यति—घटयिष्यति इत्यर्थः, अनिष्टदर्शनमिति शेषः।

(४९) शोकस्थानेति।—शोकस्थानानां सहस्राणि सहस्रशः शोककारणानि, भयस्थानानां शतानि शतशो भयहेतवश्च, दिवसे दिवसे प्रतिदिनं, मूढं मन्दमतिं पुरुषम्, आविशन्ति प्रविशन्ति, आश्रयन्तीत्यर्थः, पण्डितं पण्डा वेदोज्ज्वला बुद्धिः अस्य जाता इति [इतच्] तं, न, आविशन्ति इत्यन्वयः; पण्डिताः सदैव शोकादीनामवशी-भूताः सानन्दा एव वर्त्तन्ते इति भावः।

(भ) विषयिणां—विषयानुरक्तानां, रागिणामित्यर्थः।

(५०) उत्थायेति।—उत्थाय उत्थाय प्रतिदिनं शय्याया उत्थितो भूत्वेत्यर्थः, [ "नित्यवीप्सयोः" (८।१।४ पा०) इति द्विर्भावः ] महत् अतिदारुणमित्यर्थः, भयं भय-कारणम्, उपस्थितम् आगतम्, इति बोद्धव्यं ज्ञातव्यम्, अनुपस्थितमपि उपस्थितव-न्मन्तव्यम् इत्यर्थः, विषयिभिरिति शेषः। किन्तद्भयमित्याह—अद्य मरणव्याधिशोकानां मध्ये किं निपतिष्यति ? समेष्यति ? इति। भयहेतौ उपस्थिते यथा तत्प्रतीकाराय यत्नः क्रियते, तथा तदनुपस्थितावपि तदागमननिवारणाय यत्नः करणीय इति भावः। प्रति-दिनमेव अनिष्टापातशङ्कां कृत्वा तत्प्रतीकाराय सावधानेन भवितव्यमिति फलितम्।

(म) वियति—आकाशे।

कणान् अवलोकयामास। ततः कपोतराजस्तण्डुलकणलुब्धान् कपोतान् प्रत्याह,—"कुतोऽत्र निर्जने वने तण्डुलकणानां सम्भवः, तन्निरूप्यतां तावत्, भद्रमिदं न पश्यामि; (य) प्रायेणानेन तण्डुलकणलोभेनास्माभिरपि तथा भवितव्यम्;—

कङ्कणस्य तु लोभेन मग्नः पङ्के सुदुस्तरे।
वृद्धव्याघ्रेण सम्प्राप्तः पथिकः संमृतो यथा" ॥ ५१ ॥

कपोता ऊचुः,—"कथमेतत्?" सोऽब्रवीत्,—

वृद्धव्याघ्र-पथिककथा।—

"अहमेकदा दक्षिणारण्ये चरन्नपश्यम्,—एको वृद्धो व्याघ्रः स्नातः कुशहस्तः सरस्तीरे ब्रूते,—"भो भोः पान्थाः! इदं सुवर्णकङ्कणं गृह्यताम्"। ततो लोभाकृष्टेन केनचित् पान्थेन आलोचितं,—"भाग्येनैतत् सम्भवति, किन्तु अस्मिन् (र) आत्मसन्देहे प्रवृत्तिर्न विधेया। यतः,—

अनिष्टादिष्टलाभेऽपि न गतिर्जायते शुभा।
यत्रास्ते विषसंसर्गोऽमृतं तदपि मृत्यवे ॥ ५२ ॥

---

(य) प्रायेण—बाहुल्येन [ प्रकृत्यादित्वात् सर्वविभक्त्यपवादेन तृतीया ]।

(५१) कङ्कणस्येति।—कङ्कणस्य सुवर्णमयकरभूषणविशेषस्य, लोभेन लिप्सया, सुदुस्तरे अतिदुःखेनापि उत्तर्तुमशक्ये, अतिगाढे इत्यर्थः, पङ्के कर्दमे, मग्नः पतितः; पथिकः वृद्धव्याघ्रेण केनचित् वृद्धशार्दूलेन, सम्प्राप्तः आक्रान्तः सन्, यथा येन प्रकारेण, संमृतः मृत्युं प्राप्तः, अस्माभिरपि प्रायेण तथा भवितव्यमित्यनेनान्वयः।

(र) आत्मसन्देहे—आत्मनः सन्देहः यस्मिन् तस्मिन्, स्वशरीरनाशशङ्कायुक्ते कार्य्ये। प्रवृत्तिः,—मतिः, चेष्टा इति यावत्।

(५२) अनिष्टादिति।—अनिष्टात् अप्रियात्, अहितकरात् इत्यर्थः, इष्टलाभेऽपि अभीष्टप्राप्तौ अपि, शुभा श्रेयसी, गतिः दशा, परिणाम इत्यर्थः, न जायते न भवति इत्यर्थः। यत्र यस्मिन् अमृते इत्यर्थः, विषसंसर्गः विषसंयोगः, आस्ते वर्त्तते, तत् अमृतमपि मृत्यवे मरणाय, भवतीति शेषः। विषमिश्रितम् अमृतमिव अनिष्टादिष्टलाभोऽपि न श्रेयसे भवतीति फलितार्थः।

किन्तु सर्वत्रार्थार्जनप्रवृत्तौ सन्देह एव। तथा चोक्तम्,—

न संशयमनारुह्य नरो भद्राणि पश्यति।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ५३ ॥

तन्निरूपयामि तावत्"। प्रकाशं ब्रूते,—"कुत्र तव कङ्कणम्?" व्याघ्रो हस्तं प्रसार्य्य दर्शयति। पान्थोऽवदत्,—"कथं (ल) मारात्मके त्वयि विश्वासः?"

व्याघ्र उवाच,—"शृणु रे पान्थ! प्रागेव यौवनदशायामहम् अतिदुर्वृत्त आसम्। अनेकगोमानुषाणां बधात् मे पुत्रा मृता दाराश्च, वंशहीनश्चाहम्। ततः केनचिद्धार्मिकेणाहमुपदिष्टः,—'दानधर्मादिकमाचरतु भवान्' इति। तदुपदेशादिदानीमहं स्नानशीलो दाता वृद्धो (व) गलितनखदन्तः न कथं (श) विश्वासभूमिः? उक्तञ्च,—

इज्याध्ययनदानानि तपः सत्यं धृतिः क्षमा।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ५४ ॥

---

(५३) न संशयमिति।—नरः संशयमनारुह्य कर्म्मण्यस्मिन् प्रवृत्तोऽहं जीविष्यामि मरिष्यामि वा इत्येवं जीवनसन्देहविषयम् अननुप्रविश्य, अप्राप्येत्यर्थः, भद्राणि शुभानि, सम्पदः इति यावत्, न पश्यति न लभते इत्यर्थः। संशयं जीवनशङ्काम्, आरुह्य प्राप्य, पुनः किन्तु, यदि जीवति प्राणिति, तदा पश्यति, भद्राणीति शेषः। मन्त्रं वा साधयामि शरीरं वा पातयामि इत्येवमध्यवस्य कर्म्मप्रवृत्तो नरः एव श्रेयोभाग् भवतीति भावः।

(ल) मारात्मके—मारः हिंसात्मकः, आत्मा स्वभावो यस्य तस्मिन्, हिंस्रे।

(व) गलितनखदन्तः,—नखाश्च दन्ताश्च नखदन्तं, गलितं पतितं, नखदन्तं यस्य सः।

(श) विश्वासभूमिः,—विश्वासपात्रम्।

(५४) इज्येति।—इज्या यागः, अध्ययनं वेदपाठः, दानं सत्पात्रे विनियोगः, तपः धर्मानुष्ठानार्थं सान्तपनादि व्रतं, सत्यम् ऋतं, धृतिः सन्तोषः, निर्विकल्पचित्ततेति यावत्, क्षमा तितिक्षा, अलोभः वीतस्पृहता, इति अयम् अष्टविधः अष्टप्रकारः, धर्मस्य धर्म्माचरणस्य, मार्गः पन्थाः, स्मृतः कथितः।

तत्र पूर्वश्चतुर्वर्गो दम्भार्थमपि सेव्यते ।
उत्तरस्तु चतुर्वर्गो महात्मन्येव तिष्ठति ॥ ५५ ॥

मम चैतावान् लोभविरहः, येन स्वहस्तस्थमपि सुवर्णकङ्कणं यस्मै कस्मैचिद्दातुमिच्छामि। तथाऽपि 'व्याघ्रो मानुषं खादति' इति (ष) लोकापवादो दुर्निवारः। यतः,—

गतानुगतिको लोकः कुट्टनीमुपदेशिनीम् ।
प्रमाणयति नो धर्मे, यथा गोघ्नमपि द्विजम् ॥ ५६ ॥

मया च धर्मशास्त्राणि अधीतानि, शृणु,—

मरुस्थल्यां यथा वृष्टिः क्षुधार्त्ते भोजनं तथा ।
दरिद्रे दीयते दानं सफलं पाण्डुनन्दन ! ॥ ५७ ॥

---

(५५) तत्रेति।—तत्र तेषु अष्टविधेषु मध्ये, पूर्वः प्रथमनिर्दिष्टः, चतुर्वर्गः यागाध्ययनदानतपोरूपाः चत्वार इत्यर्थः, दम्भार्थं प्रभुत्वख्यापनार्थमपि, यागाध्ययनादिना अहं सर्वत्र विख्यातो भवामि, सर्वे मां मानयिष्यन्ति इत्येवं गर्वप्रकाशार्थमित्यर्थः, सेव्यते अनुष्ठीयते इत्यर्थः, केनापि इति शेषः, उत्तरः पश्चान्निर्दिष्टः, चतुर्वर्गः सत्यधृतिक्षमाऽलोभरूपस्तु, महात्मनि उदारचरिते नैष्ठिकधार्मिके एव, न तु दुरात्मनि इति भावः, तिष्ठति।

(ष) लोकापवादः,—लोकेषु अपवादः निन्दा। दुर्निवारः,—दुष्परिहार्यः।

(५६) गतेति।—गतस्य अतीतस्य, पूर्वैरवलम्बितस्य मार्गस्य इत्यर्थः, अनुगतिः अनुसरणं यत्र स गतानुगतिकः प्राचीनाचरितमार्गानुसारी, लोकः धर्मे धर्मनिर्णये, गोघ्नं द्विजं यथा गोहत्याकारिब्राह्मणमिव, उपदेशिनीम् उपदेशदानपरामपि, कुट्टनीं शम्भलीं, परपुरुषेण परनारीं संयोजयित्रीमित्यर्थः, नो प्रमाणयति प्रमाणं न करोति। लोकानामयं स्वभावो यत् ते परम्पराचरितेन अपकृष्टेनापि पथा व्यवहरन्ति, न पुनः उत्कृष्टेनापि केनचिदनाचरितेन पथा, एवञ्च भ्रष्टचारित्रेषु कुट्टनीजनेषु गोहत्यादिपातकान्वितेषु द्विजेषु वा धर्ममुपदिशत्स्वपि लोकानां तत्र अनादरो जायते, इति समुदितार्थः। स्वभावतो हिंस्रतया परिचितेष्वपि व्याघ्रेषु किम् एकेनापि व्याघ्रेण हिंसाद्वेषादिपरिशून्येन धर्मज्ञानरतेन न भवितव्यम् ? यत् मां न प्रमाणयसि ? इति भावः।

(५७) मरुस्थल्यामिति।—हे पाण्डुनन्दन ! मरुस्थल्यां मरुभूमौ, जलशून्य-

प्राणा यथात्मनोऽभीष्टाः भूतानामपि ते तथा ।
आत्मौपम्येन भूतानां दयां कुर्वन्ति साधवः ॥ ५८ ॥

अपरञ्च—प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये ।
आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ॥ ५९ ॥

अन्यच्च—मातृवत् परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः ॥ ६० ॥

---

प्रदेशे इत्यर्थः, वृष्टिः वर्षणं, जलदानमिति भावः, यथा, सफला भवति इति शे क्षुधया आर्त्ते पीड़िते, बुभुक्षिते इत्यर्थः, भोजनं भोजनदानमपि, तथा तद् सफलं भवति इत्यर्थः, एवञ्च दरिद्रे यत् दानं दीयते तदेव सफलम् ।

(५८) प्राणा इति ।—आत्मनः स्वस्य, प्राणाः [ नित्यबहुवचनान्तः । "प्राणे हृन्मारुते बोले काव्यजीवेऽनिले बले । पुंलिङ्गः पूरिते वाच्यलिङ्गः पुं भूम्नि चात्मसु"। इति मेदिनी ] यथा अभीष्टाः प्रियाः अभिलषिताः वा, सर्वप्रयत्नेन रक्षणीयाः इत्यर्थः भूतानाम् आत्मभिन्नप्राणिनामपि, ते प्राणाः, तथा अभीष्टा इत्यर्थः, इति विविच्य साधवः सज्जनाः, आत्मौपम्येन आत्मतुलनया, भूतानां प्राणिनां सम्बन्धे, [ सम्बन्धे षष्ठी, न तु "अधीगर्थदयेशां कर्म्मणि" (२।३।५२ पा०) इति कर्म्मणि षष्ठी, दयधातोरयोगात् ; "भूतेषु" इति पाठान्तरम् ; ] दयां कुर्व्वन्ति । यदेवात्मनः क्लेशावहं परेषामपि तत्तथेति विविच्य साधवः सर्वभूतेषु आत्मवत् आचरन्तीति भावः ।

(५९) प्रत्येति ।—प्रत्याख्याने अन्यकर्तृकवैमुख्यसम्पादने, प्रार्थितस्याप्र इत्यर्थः, दाने स्वस्मै अर्थादेरर्पणे च, सुखदुःखे सुखदुःखाद्यवस्थायामित्यर्थः, प्रियाप्रि शुभाशुभे च विषये, पुरुषः आत्मौपम्येन आत्मतुलनया, प्रमाणं दृष्टान्तम् अधिगच्छति प्राप्नोति । आत्मनः प्रत्याख्यानादौ यथा आत्मना कष्टमनुभूयते तथा परैरपि इ विविच्य जनान्तरं प्रति व्यवहर्त्तव्यम् इति भावः ।

(६०) मातृवदिति ।—यो जनः परदारेषु [ दारशब्दः नित्यबहुवचनान्तः परकलत्रेषु, परदारानित्यर्थः, मातृवत् मातरीव, परद्रव्येषु परेषां वस्तुषु, परद्रव्याणीत्यर्थः, लोष्टवत् मृत्खण्डवत्, सर्वभूतेषु सर्वप्राणिषु, सर्वप्राणिनः इत्यर्थः, [ सर्वं अधिकरणविवक्षया ७मी ] आत्मवत् आत्मतुल्यं, सर्व्वभूतानि निजजीवनोपमप्रिया णीत्यर्थः, [ सर्वत्र "तेन तुल्यं क्रिया चेद्वतिः" (५।१।११५ पा०) इति वतिः ] पश्यति, स जनः पण्डितः ज्ञानवान् । जितेन्द्रियो निर्लोभः दयावानेव पण्डितः इति निर्गलितार्थः।

त्वञ्च अतीव (ख) दुर्गतः, तेन (छ) तत् तुभ्यं दातुं सयत्नोऽहम्। तथा चोक्तम्,—

दरिद्रान् भर कौन्तेय! मा प्रयच्छेश्वरे धनम्।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः? ॥ ६१ ॥

अन्यच्च—दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं विदुः ॥ ६२ ॥

तदत्र सरसि स्नात्वा सुवर्णकङ्कणमिदं गृहाण"।

ततो यावदसौ (क) तद्वचःप्रतीतो लोभात् सरः स्नातुं

---

(ख) दुर्गतः,—दुरवस्थापन्नः, निर्धन इति यावत्।

(छ) तत्—सुवर्णकङ्कणम्।

(६१) दरिद्रानिति।—हे कौन्तेय! कुन्तीतनय! युधिष्ठिर!, दरिद्रान् निर्धनान्, भर अन्नवस्त्रादिना प्रतिपालय, ईश्वरे धनवति जने, [अपात्रत्वद्योतनात् विवक्षावशाद् वा सप्तमी] धनं मा प्रयच्छ न देहि। कुतः? इत्याशङ्कायामाह,—व्याधिरस्य जातः [तारकादित्वादितच्] व्याधितः रुग्णः तस्य पीड़ितस्य, औषधं पथ्यं हितकरं, ["धर्मपथ्यर्थन्यायादनपेते" (४।४।९२ पा०) इति यत्]। नीरुजस्य, रुजा रोगः यस्य तस्य रोगहीनस्य, औषधैः भेषजैः, किम्? न किमपि प्रयोजनमित्यर्थः। व्याधिरहिते पुरुषे औषधप्रयोग इव धनवति धनदानं विफलमिति भावः।

(६२) दातव्यमिति।—दातव्यं दानं कर्त्तव्यम्, इति एवं निश्चयेन, निःस्वार्थभावेनेति यावत्, यद्दानम् अनुपकारिणे प्रत्युपकारासमर्थाय, दुर्गतायेति शेषः, तथा देशे कुरुक्षेत्रादौ पवित्रे तीर्थे, काले ग्रहणादौ पूर्णिमादिपर्वणि च, पात्रे च पात्रभूताय तपःश्रुतादिसम्पन्नाय ब्राह्मणायेत्यर्थः, [देशकालसाहचर्य्यात् पात्रे इति सप्तमी] यद्वा,—पातीति पाता तस्मै रक्षकायेत्यर्थः, स हि सर्वस्मादापद्गणात् दातारं पाति; दीयते, तत् दानं सात्त्विकं सात्त्विकभावानुगतं, विदुः जानन्ति, विद्वांस इति शेषः।

(क) तद्वचःप्रतीतः,—तस्य व्याघ्रस्य, वचः वाक्यं, तस्मिन् तेन वा प्रतीतः हृष्टः, व्याघ्रवाक्येन सञ्जातानन्द इत्यर्थः, व्याघ्रवचने जातप्रत्ययः इति भावः, ("ख्याते हृष्टे प्रतीतः स्यात्" इत्यमरः)। अत्र "जातविश्वासः" इति पाठान्तरम्।

प्रविष्टः, तावत् महापङ्के (ख) निमग्नः पलायितुमक्षमः। पङ्के पतितं दृष्ट्वा व्याघ्रोऽवदत्,—"अहह !!! महापङ्के पतितोऽसि ? अतस्त्वामहमुत्थापयामि" इत्युक्त्वा (ग) शनैः शनैरुपगम्य तेन व्याघ्रेण धृतः स पान्थोऽचिन्तयत्,—

"न धर्मशास्त्रं पठतीति कारणं
न चापि वेदाध्ययनं दुरात्मनः।
स्वभाव एवात्र तथाऽतिरिच्यते
यथा प्रकृत्या मधुरं गवां पयः॥ ६३॥

किञ्च—अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया।
दुर्भगाऽऽभरणप्रायो ज्ञानं भारः क्रियां विना॥ ६४॥

---

(ख) निमग्नः,—अवगाढं प्रविष्टः, निपतितः इत्यर्थः, [ नि + मस्ज् + क्तः ]

(ग) शनैः शनैः,—मन्दं मन्दम् [ उपगम्येति क्रियाया विशेषणम् ]।

(६३) नेति।—अयमित्यध्याहर्त्तव्यम्। धर्मशास्त्रं मन्वादिप्रणीतं धर्मोपदेशकं शास्त्रं, पठति अधीते, इति एतत् धर्मशास्त्रपठनं, न, च तथा, वेदाध्ययनं वेदपाठोऽपि, दुरात्मनः स्वभावतो दुराचारस्य, कारणं धर्मप्रवृत्तिहेतुः, न, भवतीति शेषः; अत्र साधुत्वासाधुत्वविषये इत्यर्थः, स्वभावः प्रकृतिरेव, तथा तद्वत्, अतिरिच्यते सर्वमतीत्य वर्त्तते, प्रबलहेतुः भवति इत्यर्थः। [ अति + रिच + कर्मकर्त्तरि लट्-ते ] यथा गवां कटुतिक्तादिद्रव्यभक्षिणीनामपीति भावः, पयः दुग्धं, प्रकृत्या स्वभावेन, मधुरं सुस्वादु, न पुनः खाद्यादिगुणेन कदाचित् कटु तिक्तं वा इति भावः, भवति इति शेषः, गोपयसो माधुर्य्ये दुग्धस्वभाव एव यथा हेतुः, साधुत्वासाधुत्वविषयेऽपि स्वभाव एव तथा हेतुर्भवति, न तु धर्मशास्त्रादिपाठः इति समुदितार्थः। यस्य यादृशः स्वभावः न केनापि तद्वैपरीत्यं जायते इति भावः। वंशस्थविलं वृत्तम्।

(६४) अवशेति।—इन्द्रियाणि चक्षुरादीनि, चित्तं मनः, अवशानि अवशीभूतानि, इन्द्रियाणि चित्तञ्च येषां तेषाम् अजितेन्द्रियाणामित्यर्थः, क्रिया सन्ध्यावन्दनादिव्यापारः, हस्तिस्नानमिव निष्फला इत्यर्थः। यथा हि हस्ती स्नानानन्तरमेव पांशुविकीरणेन स्वदेहं मलिनीकरोति, तथा अजितेन्द्रियाः प्राज्ञा अपि इन्द्रियपारवश्येन आत्मानं संदूष्य क्रियां विफलीकुर्व्वन्तीति भावः। तथा क्रियां विना इन्द्रियजयरूपं शास्त्रोक्तं वा अनुष्ठानमन्तरेण, ज्ञानं धर्मशास्त्राद्यध्ययनजनितप्रज्ञा, दुर्भगायाः

तन्मया भद्रं न कृतं, यदत्र (घ) मारात्मके विश्वासः कृतः।

तथा चोक्तम्—शृङ्गिणाञ्च नदीनाञ्च नखिनां शस्त्रपाणिनाम्।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च ॥ ६५ ॥

अपरञ्च—सर्वस्य हि परीक्ष्यन्ते स्वभावा: नेतरे गुणाः।
अतीत्य हि गुणान् सर्वान् स्वभावो मूर्द्ध्नि वर्त्तते ॥६६॥

अन्यच्च—स हि गगनविहारी कल्मषध्वंसकारी
दशशतकरधारी ज्योतिषां मध्यचारी।

---

पतिसौभाग्यहीनायाः नार्य्याः, आभरणप्रायः अलङ्कारतुल्यः, भारः भारभूत एव; यथा हि दुर्भगायाः भूषणधारणं न पतिमनोरञ्जकम्, अपि तु शरीरभारभूतं भवति, तद्वत् सदनुष्ठानं विना केवलं ज्ञानमपीति भावः। केचित्तु एवं व्याख्यानयन्ति, यथा,—दुर्भगा वन्ध्या नारी, तस्याः भरणप्रायः अन्नवस्त्रादिना पोषणतुल्यः, भारः विफलमपि अवश्यकर्त्तव्यतया क्लेशावहं कर्म्म। वन्ध्याकामिनीनां यावज्जीवं पोषणवत् क्रियां विना कार्य्यकलापपरिज्ञानं वृथैवेत्यर्थः।

(घ) मारात्मके—मारे हिंसायाम्, आत्मा स्वभावो यस्य तस्मिन् हिंस्रप्रकृतिके।

(६५) शृङ्गिणामिति।—शृङ्गाणि एषां सन्तीति शृङ्गिणः विषाणवन्तः तेषां शृङ्गायुधानां गोमहिषादीनां, नदीनां स्रोतस्वतीनां, नखिनां नखायुधानां व्याघ्रादीनाम्, अत्र नखिनामित्युपलक्षणं, तेन दन्तिनामपीति बोध्यं, दन्तायुधानां वराहादीनामित्यर्थः, शस्त्राणि पाणौ येषां तेषां शस्त्रपाणिनां शस्त्रधारिणां, [ सर्व्वत्र सम्बन्धे षष्ठी। शस्त्रपाणिनामित्यत्र संज्ञापूर्व्वकत्वात् दीर्घस्य अनित्यता, महाकविप्रयोगवशात् इनिर्वा ; शस्त्रेण पणायन्ते व्यवहरन्ति इति आयङ्-अभावपक्षे ग्रहादित्वात् णिनिः वा ] स्त्रीषु नारीषु, राजकुलेषु च राजवंशोद्भवेषु च, [ अधिकरणे सप्तमी ] विश्वासः प्रत्ययः, नैव कर्त्तव्यः विधेयः, एतेषु न कथमपि विश्वसितव्यमित्यर्थः।

(६६) सर्वस्येति।— सर्व्वस्य जनस्य, स्वभावाः हि प्रकृतय एव, परीक्ष्यन्ते सम्यक् विचार्य्यन्ते, इतरे गुणाः विद्यावत्तादिधर्म्माः, न, परीक्ष्यन्ते लोकैरिति शेषः, अन्यान् गुणानपेक्ष्य प्रथमं स्वभावपरीक्षणमेव श्रेयः इत्यर्थः, हि यतः, स्वभावः सर्वान् गुणान् अतीत्य अतिक्रम्य, मूर्द्ध्नि शिरसि, सर्वोपरि इत्यर्थः, वर्त्तते तिष्ठति ; प्रकृतिः दुरतिक्रमेति भावः। अस्य प्रकृतिमनालोचयता मया सम्यक् न कृतमिति तात्पर्य्यम्।

(६७) स हीति।—गगने विहरतीति गगनविहारी आकाशे विचरणशीलः,

विधुरपि विधियोगाद् ग्रस्यते राहुणाऽसौ
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ?" ॥६७॥

इति चिन्तयन्नेवासौ व्याघ्रेण धृत्वा व्यापादितः खादितश्च।
अतोऽहं ब्रवीमि—"कङ्कणस्य तु लोभेन" इत्यादि।

[ इति वृद्धव्याघ्रपथिककथा ]।

अतः सर्वथा (ङ) अविचारितं कर्म न कर्त्तव्यमिति।

यतः,—सुजीर्णमन्नं सुविचक्षणः सुतः
सुशासिता स्त्री नृपतिः सुसेवितः।
सुचिन्त्य चोक्तं सुविचार्य्य यत् कृतं
सुदीर्घकालेऽपि न याति विक्रियाम्" ॥ ६८ ॥

एतद्वचनं श्रुत्वा कश्चित् कपोतः सदर्पमाह,—"आः!
किमेवमुच्यते ?—

---

कल्मषं पापं, तस्य ध्वंसं नाशं करोतीति तथोक्तः सर्व्वपापघ्नः, दशावृत्तं शतं दशश सहस्रमित्यर्थः, कराः मयूखास्तान् धरतीति सहस्रकिरणमाली, सः प्रसिद्धः सूर्यः, तथ ज्योतिषां नक्षत्राणां, मध्यचारी मध्ये विराजमानः, असौ प्रसिद्धः, विधुश्चन्द्रोऽपि विधियोगात् दैवनियमनात्, राहुणा विधुन्तुदेन, ग्रस्यते कवलीक्रियते, सूक्ष्मं इति भावः ; अपि निश्चितं प्रश्ने वा, "अपि" इत्यत्र "इह" इति पाठान्तरम् ; ललाटे भाले, लिखितं, विधात्रा इति शेषः, प्रोज्झितुम् अन्यथाकर्त्तुं, को जनः, समर्थः ? कोऽपि।—"ललाटे लिखितं यत्तु षष्ठीजागरवासरे। न हरिः शङ्करो ब्रह्मा चान्यथ कर्त्तुमर्हति ॥" इति भावः। मालिनी वृत्तम्।

(ङ) अविचारितं—पूर्वं सम्यगनालोचितं, प्रागवितर्कितम् इति यावत्।

(६८) सुजीर्णमिति।—सुजीर्णं परिपाकमापन्नम्, अन्नं भुक्तं वस्तु, सुविचक्षणः सुष्ठु शिक्षितः, सुतः पुत्रः, सुशासिता शिक्षया वशं गमिता, स्त्री भार्य्या, प्रतिच्छन्दोऽनुवर्त्तिनी नारीत्यर्थः, सुसेवितः सर्व्वप्रयत्नेन चाराधितः, नृपतिः राजा, सुचिन्त्य सविशेषं विविच्य, उक्तं कथितं, सुविचार्य्य सम्यक् समालोच्य, यत् कृतम् अनुष्ठितम्, एतत् सर्वं सुदीर्घकालेऽपि बहुतिथे काले गतेऽपि, चिरेणापीति यावत्, विक्रियां विकारम् अन्यथात्वमिति यावत्, न याति प्राप्नोति, कदापि नानिष्टमुत्पादयतीति भावः। वंशस्थविलं वृत्तम्।

वृद्धस्य वचनं ग्राह्यमापत्काले ह्युपस्थिते ।
सर्वत्रैवं विचारे न भोजनेऽपि प्रवर्त्तनम् ॥ ६९ ॥

यतः,—शङ्काभिः सर्वमाक्रान्तमन्नं पानञ्च भूतले ।
प्रवृत्तिः कुत्र कर्त्तव्या जीवितव्यं कथं नु वा ? ॥ ७० ॥

तथा चोक्तम्,—"ईर्ष्यी घृणी त्वसन्तुष्टः क्रोधनो नित्यशङ्कितः ।
परभाग्योपजीवी च षडेते दुःखभागिनः" ॥ ७१ ॥

एतच्छ्रुत्वा सर्वे कपोतास्तत्रोपविष्टाः । यतः,—

(६९) वृद्धस्येति।—आ सम्यक्, सर्वतो व्याप्येत्यर्थः, ("आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे" इत्यमरः) पद्यते आगच्छतीति आपत्, तस्याः काले आपत्काले विपत्समये, उपस्थिते हि आगते सत्येव, न सर्वदा इति भावः; वृद्धस्य वयोवृद्धत्वेन लब्धप्राचीण्यस्य, वचनं वाक्यम्, उपदेश इति यावत्, ग्राह्यं ग्रहणयोग्यं, परन्तु सर्व्वत्र सर्व्वस्मिन् विषये, अनपेक्षितवृद्धोपदेशविषये इत्यर्थः, एवं वृद्धवचनं ग्राह्यमिति, विचारे सिद्धान्ते कृते सति, भोजनेऽपि आहारेऽपि, आस्तां तावत् विषयान्तरं, जीवनधारणस्य प्रधानसाधनभूतेऽपीति अपिशब्दार्थः, प्रवर्त्तनं न प्रवृत्त्यभावः, स्यादिति शेषः, वृद्धा हि "खाद्यमिदं गुरुपाकं चिरेण पच्यते अतो मा भुङ्क्ष्व" इत्येवम् उपदिशन्तीति न सर्व्वत्र तेषां वचनमनुसरणीयमित्यर्थः ।

(७०) शङ्काभिरिति।—भूतले पृथिव्यां, सर्व्वम् अन्नं भोज्यं, पानञ्च नीर-क्षीरादिकञ्च, [पीयते यत् तत् पानं कर्म्मणि ल्युट्] शङ्काभिः शुभमशुभं वेति संशयैः, आक्रान्तं युक्तम्, एवं सति कुत्र कस्मिन् वस्तुनि, प्रवृत्तिः अभिलाषः, पान-भोजनेच्छा इत्यर्थः, कर्त्तव्या विधेया ? नु भोः ! (चित्रग्रीवसम्बोधनमेतत्) नु इति प्रश्नार्थकमव्ययं वा, पृच्छामीत्यर्थः, कथं केन प्रकारेण वा, पानभोजने प्रवृत्तिमन्तरेण वेत्यर्थः, जीवितव्यं प्राणितव्यम् ?

(७१) ईर्ष्यीति।—ईर्ष्या परश्रीकातरता सा विद्यतेऽस्य इति ईर्ष्यी परश्री-कातरः, घृणी अत्यन्तदयालुः, सर्व्वदा सर्वस्मिन् विषये जुगुप्साशीलो वा, असन्तुष्टः सन्तोषहीनः, क्रोधनः कोपनस्वभावः, नित्यं शङ्कितः नित्यशङ्कितः सर्वदा सर्वत्र शङ्कायुक्तः, [शङ्का अस्य जातेति इतच्] परस्य भाग्यं तेन उपजीवतीति पर-भाग्योपजीवी परसम्पदा जीविकानिर्वाहकश्च, एते षट् षड्विधा लोकाः, तु दुःख-भागिनः दुःखभाजः, भवन्तीति शेषः ।

सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः।
छेत्तारः संशयानाञ्च क्लिश्यन्ते लोभमोहिताः ॥ ७२ ॥

अन्यच्च,—लोभात् क्रोधः प्रभवति लोभात् कामः प्रजायते।
लोभात् मोहश्च नाशश्च लोभः पापस्य कारणम् ॥७३॥

अन्यच्च,—असम्भवं हेममृगस्य जन्म
तथापि रामो लुलुभे मृगाय।
प्रायः समापन्नविपत्तिकाले
धियोऽपि पुंसां मलिना भवन्ति ॥ ७४ ॥

---

(७२) सुमहान्तीति।—सुमहान्ति महार्थप्रतिपादकानि, शास्त्राणि वेद वेदान्तादिग्रन्थान्, ["न लोका—" (२।३।६९ पा०) इत्यादिना षष्ठीनिषेधः] धारयन्तः पठन्तः, बहु श्रुतं शास्त्रं, तज्जन्यज्ञानमिति यावत, येषां ते बहुश्रुता बहुदर्शिनः, अत एव संशयानां बहुषु विषयेषु जातानां सन्देहानाञ्च, [ कृद्योगात् कर्म्मणि षष्ठी ] छेत्तारः निराकर्त्तारः पण्डिताः अपि, लोभमोहिताः लोभपरवशाः सन्तः, क्लिश्यन्ते क्लेशमापद्यन्ते, क्लेशमनुभवन्तीत्यर्थः, [ दैवादिकक्लिश्यतेः रूपमिदम्। कर्म्मकर्त्तरि रूपं वा ] स्वयमेव क्लेशमनुभवन्तीत्यर्थः। विविधसंशयनिराकर्त्ताः अधीतवेदवेदान्तादिशास्त्रसमूहाः विद्वांसोऽपि यदा लोभपरवशाः सन्तः विपद्यन्ते तदा जड़बुद्धीनां स्वभावत एव लुब्धानां तिर्य्यग्योनीनामेषां तण्डुलकणलोभेन विपत्तिसङ्घटने कथैव नास्तीति निष्कर्षः।

(७३) लोभादिति।—लोभात् धनतृष्णायाः लाभे उत्कटेच्छायाः वा, क्रोधः कोपः, प्रभवति जायते। लोभात् कामः विषयभोगवासना, प्रजायते उत्पद्यते। लोभात् मोहश्च अज्ञानञ्च, विवेकराहित्यमिति यावत्, तथा नाशश्च मृत्युश्च, प्रजायते इति पूर्वेणान्वयः। अत एव लोभः पापस्य सर्वानिष्टस्य, कारणं मूलं, लोभः सर्वानर्थनिदानमित्यर्थः।

(७४) लोभस्य विपत्तिनिदानत्वं द्रढ़यति, असम्भवमिति।—हेममृगस्य सुवर्णनिर्मितहरिणस्य, जन्म उत्पत्तिः, असम्भवं सम्भावनारहितम् इति प्रसिद्धमेवेत्यर्थः, मूर्खा अपि जानन्ति यत् रक्तमांसादिनिर्मितशरीरधारी एव मातृगर्भान्निःसृत्य जीवति गमनादिकञ्च करोति, न तु कदापि सुवर्णादिधातुनिर्मितः प्राणी इति। तथापि तज्ज्ञानसत्त्वेऽपि, रामः दाशरथिः, विष्णोरंशभूत इति यावत्, मृगाय हेममृगलाभाय,

अनन्तरं ते सर्वे (च) जालनिबद्धा बभूवुः, ततो यस्य वचनात् (छ) तत्र अवलम्बितास्तं सर्वे तिरस्कुर्वन्ति।

यतः,—न गणस्याग्रतो गच्छेत् सिद्धे कार्य्ये समं फलम्।
यदि कार्य्यविपत्तिः स्यात् मुखरस्तत्र हन्यते ॥ ७५ ॥

तथा चोक्तम्,—आपदां कथितः पन्था इन्द्रियाणामसंयमः।
तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ॥७६॥

तस्य तिरस्कारं श्रुत्वा चित्रग्रीव उवाच, (ज)—"नायमस्य दोषः। यतः,—

---

लुलुभे लोभवशं गतः, तद्ग्रहणार्थमियेषेत्यर्थः। तथाहि समापन्नायाः निकटवर्त्तिन्याः, विपत्तेः आपदः, काले समये, पुंसां नृणां, धियोऽपि बुद्धयोऽपि, प्रायः बाहुल्येन, मलिनाः कलुषतराः, मोहाच्छन्ना इत्यर्थः, भवन्ति जायन्ते। "मलिनीभवन्ति" इति पाठान्तरम्। वृत्तमुपजातिः।

(च) जालनिबद्धाः,—जालेन पाशेन, निबद्धाः संरुद्धाः, पाशनियमिताः इत्यर्थः।

(छ) तत्र अवलम्बिताः,—तत्र भूमौ, अवलम्बिताः अवरूढ़ाः इत्यर्थः।

(७५) नेति।—गणस्य समूहस्य, बहूनामित्यर्थः, अग्रतः अग्रे, न गच्छेत् न यायात्, बहुभिः साध्ये कार्य्ये न एकेन पुरः प्रवर्त्तितव्यमित्यर्थः। कुतः ? कार्य्ये सिद्धे सम्पन्ने सति, फलं लाभः, समं तुल्यं, प्रवर्त्तयिता प्रवर्त्तिताश्च सर्वे एव समांशेन फलभागिनः भवन्तीत्यर्थः, यदि कार्य्यविपत्तिः कार्य्यध्वंसः, स्यात् भवेत्, तदा तत्र तस्मिन् विषये, तेषु मध्ये वा, [ निर्द्धारे सप्तमी ] मुखरः अग्रयायी, अग्रे प्रवर्त्तयिता वा, हन्यते व्यापाद्यते, तिरष्क्रियते वा इत्यर्थः।

(७६) आपदामिति।—इन्द्रियाणां वाङ्मनश्चक्षुरादीनां, [ कर्म्मणि षष्ठी ] असंयमः अनिग्रहः, आपदाम् अनिष्टानां, पन्थाः मार्गः, कथितः स्मृतः, पण्डितैरिति शेषः, अजितेन्द्रिया एव विविधासु आपत्सु निमज्जन्तीत्यर्थः, तेषाम् इन्द्रियाणां, जयः दमनं, निग्रह इति यावत्, सम्पदां श्रेयसां, मार्गः पन्थाः, येन एवमुभयो-र्मार्गयोर्मध्ये येन मार्गेण गमने कृते इत्यर्थः, इष्टं शुभं, जायते इति शेषः, यद्वा—येन इष्टं येन पथा गमनमभिलषितं, भवतीति शेषः, तेन पथा, गम्यतां, भवद्भिरिति शेषः।

(ज) नायमस्य दोषः,—अयं जालबन्धनरूपोऽपायः, न अस्य प्रवर्त्तयितुः कपोतस्य, दोषः अपराधः, अस्य दोषेण न घटित इत्यर्थः।

आपदामापतन्तीनां हितोऽप्यायाति हेतुताम् ।
मातृजङ्घा हि वत्सस्य स्तम्भीभवति बन्धने ॥ ७७ ॥

अन्यच्च,—स बन्धुर्यो विपन्नानामापदुद्धरणक्षमः ।
न तु भीतपरित्राणवस्तूपालम्भपण्डितः ॥ ७८ ॥

विपत्काले (झ) विस्मय एव कापुरुषलक्षणं, तदत्र धैर्यमवलम्ब्य प्रतीकारश्चिन्त्यताम् । यतः,—

विपदि धैर्य्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।

(७७) नायमस्य दोष इति यदुक्तं, तत्र दोषाभावं समर्थयितुमाह, आपदामिति ।—हितोऽपि हितकरोऽपि विषयः, आपतन्तीनाम् आगच्छन्तीनाम्, भवि[ष्य]भाविनीनामिति यावत्, आपदां विपदां, हेतुतां कारणत्वम्, आयाति प्राप्नोति: विपत्तिरियमस्माकं नियतिनिर्द्दिष्टैव, कपोतस्वयं तत्र उपलक्षणमात्रमेव, अतो नाय[मस्य] दोष इति निष्कर्षः । हि तथाहि, मातृजङ्घा परमहितैषिण्याः मातुरूरुदेशः, विप[दि] आश्रयणीयस्थानमिति भावः, सापि, वत्सस्य गोशावकस्य, बन्धने बन्धनार्थं, स्त[म्भी]भवति, [ अस्तम्भः स्तम्भो भवतीति अभूततद्भावार्थे च्विः ] बन्धनस्तम्भान्तराभावे याः हितैषिण्या मातुर्जङ्घायामेव वत्सं बद्ध्वा गां दुहन्तीत्यर्थः ।

(७८) स इति ।—यः विपन्नानाम् आपद्गतानाम्, आपदः उद्धरणं परित्राणं तस्मिन् क्षमः विपत्प्रतीकारसमर्थः, भवति इति शेषः, स बन्धुः स्वजनः, भीताना[म्] आर्त्तानां, परित्राणमेव रक्षणमेव, वस्तु विषयः, कार्य्यम् इति यावत, तत्र उपाल[म्भः] तिरस्कारः, "अनेनैव उपायेन कथं विपदो नातिक्रान्तवान् ?" इत्येवं तिरस्कार इत्यर्थः, तस्मिन् पण्डितः कुशलः, तु पुनः, न, बन्धुरिति शेषः, प्रकृते आपदुद्धर[णे] विमुखः सन केवलं तत्प्रतीकारार्थमुपायप्रदर्शको विपदागमनजन्यतिरस्कारमात्र[स्य] कारको वा न बन्धुरित्यर्थः ।

(झ) विस्मयः,—आश्चर्य्यभावः, प्रतिकारप्रयत्नमकृत्वा केवलं विस्मयविमूढभावेनावस्थानमित्यर्थः । कापुरुषलक्षणं—कुत्सितः पुरुषः कापुरुषः कुपुरुषः तस्य लक्षणं चिह्न, पौरुषाभावसूचकमित्यर्थः ।

(७९) विपदीति ।—विपदि आपत्समये, धैर्य्यं स्थैर्य्यम, अव्याकुलता इत्यर्थः, अथ इति वाक्यारम्भे, अभ्युदये उन्नतौ, क्षमा सहिष्णुता, अनौद्धत्यमिति यावत्, सदसि पण्डितसभायां, वाक्पटुता वाक्यनपुण्यं, वाग्मित्वमिति यावत्, युधि युद्धे, विक्रमः

यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ७९ ॥

सम्पदि यस्य न हर्षो विपदि विषादो रणे च भीरुत्वम्।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ ८० ॥

अन्यच्च,—षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ८१ ॥

इदानीमपि एवं क्रियताम्;—सर्वैः (ञ) एकचित्तीभूय जालमादाय उड्डीयताम्।

---

प्रतापः, साहसप्रदर्शनमिति यावत्, यशसि कीर्त्तिलाभे च, अभिरुचिः लिप्सा, श्रुतौ शास्त्रे, व्यसनम् आसक्तिः, अत्यन्तानुरागः इति यावत्, इदम् एतत् सर्वं, हि निश्चितं, महात्मनां महानुभावानां, प्रकृत्या सिद्धं प्रकृतिसिद्धं स्वभावसिद्धं, स्वत एव सम्पन्नमित्यर्थः। महात्मानो हि स्वभावत एव एवं गुणवन्तो भवन्तीति भावः। द्रुतविलम्बितं वृत्तम्।

(८०) सम्पदीति।—सम्पदि सम्पत्समये, यस्य हर्षः न, विपदि विपत्काले च, विषादः विषण्णता, न, रणे युद्धे च, भीरुत्वं भयशीलता, न, भवेदिति सर्वत्र शेषः, तम् एवम्भूतगुणसम्पन्नम्, अत एव भुवनत्रयतिलकं त्रिलोकश्रेष्ठं, सुतं पुत्रं, जननी प्रसूः, विरलं स्तोकं, कदाचित्, न तु सर्वदा इत्यर्थः, जनयति प्रसूते। आर्य्या वृत्तम्।

(८१) षडिति।—इह जगति, भूतिं सम्पदम्, उन्नतिमित्यर्थः, इच्छता अभिलषता, उन्नतिकामिनेत्यर्थः, पुरुषेण जनेन, षट् दोषाः हातव्याः त्यक्तव्याः। के ते दोषा इत्याह, निद्रेति।—निद्रा स्वापः, तन्द्रा प्रमीला, निद्रार्त्तस्येव जाड्यम् इत्यर्थः, भयं भीरुस्वभावता, क्रोधः कोपः, आलस्यम् अलसता, कर्म्मणि अनुत्साह इत्यर्थः, ("समर्थस्याप्यनुत्साहः कर्म्मस्वालस्यमुच्यते" इति लक्षणात्) दीर्घेण चिरकालेन, सूत्रम् ईप्सितकर्म यस्य, दीर्घं चिरकालं व्याप्य, सूत्रं व्यवस्था यस्य इति वा ("सूत्रं तन्तुव्यवस्थयोः" इति विश्वः) स तस्य भावः दीर्घसूत्रता चिरक्रियता इति। ["दीर्घसूत्रश्चिरक्रियः" इत्यमरः। हाधातोः लोटः मध्यमैकवचने जहिहि जहीहि जहाहीति पदत्रयं भवति]। एभिर्दोषषट्कैर्दुष्टो जनः न कदापि ऐश्वर्य्यवान् भवितुमर्हतीति भावः।

(ञ) एकचित्तीभूय—एकम् अनन्यं, चित्तं येषां ते एकचित्ताः, न एकचित्ताः एकचित्ताः भूत्वेति एकचित्तीभूय ऐकमत्यमाश्रित्य, [अभूततद्भावार्थे च्विः ततः ल्यप्]।

यतः,—अल्पानामपि वस्तूनां संहतिः कार्य्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥ ८२ ॥
संहतिः श्रेयसी पुंसां स्वकुलैरल्पकैरपि ।
तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः” ॥ ८३ ॥

इति विचिन्त्य पक्षिणः सर्वे जालमादाय उत्पतिताः। अनन्तरं स व्याधः सुदूरात् (ट) जालापहारकांस्तानवलो[क्य] पश्चात् धावितोऽचिन्तयत्,—

“संहतास्तु हरन्तीमे जालं मम विहङ्गमाः ।
यदा तु निपतिष्यन्ति वशमेष्यन्ति मे तदा” ॥ ८४ ॥

---

(८२) अल्पानामिति ।—अल्पानाम् अल्पसाराणां, क्षुद्राणामपीत्यर्थः, [का] कथा महतामित्यपिशब्दार्थः, वस्तूनां संहतिः समूहः, मेलनम् इति यावत्, कार्य्य-साधिका कार्य्यसम्पादिका, भवतीति शेषः, क्षुद्रा अपि सङ्गतां समेत्य महत् का[र्य्यं] साधयितुं क्षमा इत्यर्थः । तत्र दृष्टान्तमाह—गुणत्वं रज्जुत्वम्, आपन्नैः प्राप्तैः रज्जुरूपेण परिणतैरित्यर्थः, तृणैः कुशादिभिः, अकिञ्चित्करैः इति भावः, मत्तदन्ति[नः] मदस्राविणः हस्तिनः, बध्यन्ते नियम्यन्ते, नियमनेन वशीकर्त्तुं शक्यन्ते इति सरलार्थः अल्पसाराणि अनायासच्छेद्यानि तृणान्यपि परस्परं संहतानि भवन्ति चेत् महाबलं गजानपि बद्धुं समर्थानि भवन्तीति निष्कर्षः ।

(८३) संहतेः गुणान्तरमाह, संहतिरिति ।—अल्पकैरपि अत्यल्पसंख्यकैरपि [अल्पार्थे कः] का कथा बहुभिरित्यपिशब्दार्थः, स्वकुलैः सजातीयैः, स्ववंशीयैः सह इत्यर्थः, पुंसां नराणां, संहतिर्मेलनं, परस्परं सम्भूय अवस्थानमित्यर्थः, श्रेयसी प्रशंसनीया । तदेव दृष्टान्तेन द्रढ़यति—तुषेणापि अतितुच्छेन स्वकुलेन धान्य-वरणेनापि, न तु केनापि सारवत्पदार्थेनेत्यपिशब्दार्थः, परित्यक्ताः विहीनाः तण्डुलाः न प्ररोहन्ति नाङ्कुरिता भवन्ति, अङ्कुरान् न उत्पादयितुं समर्था भवन्तीत्यर्थः, तुषहीनात् तण्डुलान्न कदाचिदङ्कुरो जायते इति लोकप्रसिद्धमेव ।

(ट) जालापहारकान्—जालस्य अपहारकास्तान् पाशापहारिणः इत्यर्थः ।

(८४) संहता इति ।—इमे विहायसा आकाशेन गच्छन्तीति विहङ्गमाः पक्षिणस्तु, संहताः मिलिताः सन्तः, मम जालं पाशं, हरन्ति गृहीत्वा पलायन्ते तु किन्तु, यदा यस्मिन् काले, निपतिष्यन्ति भूमौ अवतरिष्यन्ति, तदा मे मम

ततस्तेषु (ठ) चक्षुर्विषयमतिक्रान्तेषु पक्षिषु स व्याधो निवृत्तः। अथ (ड) लुब्धकं निवृत्तं दृष्ट्वा कपोता ऊचुः,—"स्वामिन्! किमिदानीं कर्त्तुमुचितम्?" चित्रग्रीव उवाच,—

"माता मित्रं पिता चेति स्वभावात् त्रितयं हितम्।
कार्य्यकारणतश्चान्ये भवन्ति हितबुद्धयः॥ ८५॥

(ढ) तन्मे मित्रं हिरण्यको नाम मूषिकराजो गण्डकीतीरे चित्रवने निवसति, सोऽस्माकं पाशांश्छेत्स्यति"। इत्यालोच्य सर्वे हिरण्यकविवरसमीपं गताः। हिरण्यकश्च सर्वदा (ण) अपायशङ्कया (त) शतद्वारं विवरं कृत्वा निवसति।—

अनागतभयं दृष्ट्वा नीतिशास्त्रविशारदः।
अवसन्मूषिकस्तत्र वृद्धः शतमुखे विले॥ ८६॥

---

वशम् आयत्तताम्, एष्यन्ति प्राप्स्यन्ति, मम वशीभूता भविष्यन्ति, तदा न मया दुरासदा भविष्यन्तीत्यर्थः।

(ठ) चक्षुर्विषयमतिक्रान्तेषु—दृष्टिपथवहिर्भूतेषु, अदर्शनं गतेषु इत्यर्थः।

(ड) लुब्धकं—व्याधम्।

(८५) मातेति।—माता जननी, मित्रं सुहृत्, पिता जनकश्च, इति एतत्, त्रितयं त्र्यवयवं, मात्रादयस्त्रय इत्यर्थः, स्वभावात् स्वभावतः एव, कार्य्यकारणभावमन्तरेणापि इति यावत्, हितं हितकरम्; अन्ये एभ्यस्त्रिभ्यः इतरे च, कार्य्यकारणतः केचित् कार्य्यात् केचित् कारणात् वा, हितबुद्धयः हिता हितकरी बुद्धिर्येषां ते तथोक्ताः, हिते कल्याणसाधने, बुद्धिः मतिर्येषां ते तथोक्ता इति वा, हितैषिणः, भवन्ति।

(ढ) तत्—तस्मात्, मित्रस्य स्वभावत एव हितकरत्वात् इत्यर्थः।

(ण) अपायशङ्कया—अपायो विनाशः, तस्मात् शङ्का त्रासः तया, अनिष्टापातभयेन इत्यर्थः।

(त) शतद्वारं—शतं द्वाराणि यस्य तत्, समन्तात् बहुभिर्द्वारैर्युक्तम्।

(८६) अनागतमिति।—नीतेः नयस्य, शास्त्रं वृहस्पत्यादिप्रणीतं, तस्मिन् विशारदः विशेषेण ज्ञानवान्, वृद्धः वार्द्धकमापन्नः, (एतेन अस्य बहुदर्शित्वं नीतिपाटव्यञ्च सूच्यते) मूषिकः उन्दुरुः, हिरण्यक इति यावत्, अनागतम् अनुपस्थितं,

ततो हिरण्यकः (थ) कपोतावपातभयाच्चकितः (द) तूष्णीं स्थितः। चित्रग्रीव उवाच,—"सखे हिरण्यक ! कथमस्मान् न सम्भाषसे ?" ततो हिरण्यकस्तद्वचनं (ध) प्रत्यभिज्ञाय ससम्भ्रमं बहिर्निःसृत्य अब्रवीत्—"आः ! पुण्यवानस्मि, प्रियसुहृन्मे चित्रग्रीवः समायातः,—

यस्य मित्रेण सम्भाषो यस्य मित्रेण संस्थितिः।
यस्य मित्रेण संलापस्ततो नास्तीह पुण्यवान्" ॥ ८७॥

अथ (न) पाशबद्धांश्चैतान् दृष्ट्वा सविस्मयः क्षणं स्थित्वा उवाच,—"सखे ! किमेतत् ?" चित्रग्रीव उवाच,—"सखे ! अस्माकं (प) प्राक्तनजन्मकर्मणः फलम् (फ) एतत्,—

---

भविष्यदित्यर्थः, भयं त्रासं, दृष्ट्वा विवेकनयनेन निरूप्य इत्यर्थः, तत्र तस्मिन् स्थाने, प्रतं सुखानि यस्य एवम्भूते बहुद्वारयुक्ते, विले गर्त्ते, अवसत् वसति स्म।

(थ) कपोतावपातभयात्—कपोतानाम् अवपातः अवरोहणं, तस्मात् यत् भयं तस्मात्, कपोतानामवरोहणे यः पक्षशब्दो जायते तस्मादुत्पन्नेन त्रासेनेत्यर्थः। चकितः,—सम्भ्रान्तः।

(द) तूष्णीं—निःशब्दम्, [अव्ययमेतत्, स्थित इति क्रियाया विशेषणम्]।

(ध) प्रत्यभिज्ञाय—स्वरसंयोगेन चित्रग्रीव एव माम् आह्वयति इति विदित्वेत्यर्थः।

(८७) मित्रप्राप्तौ आनन्दातिशय्यं प्रकटयति, यस्येति।—यस्य जनस्य, मित्रेण सुहृदा सह, सम्भाषः समालापः, यस्य जनस्य, मित्रेण सह संस्थितिः एकत्रावस्थानं सहवास इति यावत, यस्य जनस्य, मित्रेण सुहृदा सह, संलापः मिथोभाषणं, परस्पररहस्यकथनमिति यावत, भवतीति शेषः, इह जगति, ततः तस्मात् जनात्, तं जनमपेक्ष्येत्यर्थः, [ल्यब्लोपे पञ्चमी। "पञ्चमी विभक्ते" (२।३।४२ पा०) इति निर्द्धारे पञ्चमी वा] पुण्यवान् सुकृती, नास्ति, बहुपुण्येनैव एतत् सर्वं सङ्घटते इत्यर्थः।

(न) पाशबद्धान्—जालनियमितान्।

(प) प्राक्तनजन्मकर्मणः,—प्राग्भवं प्राक्तनं, तच्च जन्म चेति तस्मिन् यत् कर्म पापपुण्यात्मकं कार्य्यं तस्य, पूर्वजन्मकृतकार्य्यस्य।

(फ) एतत्—जालबन्धनरूपम्।

यस्माच्च येन च यथा च यदा च यच्च
याबच्च यत्र च शुभाशुभमात्मकर्म ।
तस्माच्च तेन च तथा च तदा च तच्च
तावच्च तत्र च विधातृवशादुपैति ॥ ८८ ॥
रोगशोकपरीतापबन्धनव्यसनानि च ।
आत्मापराधवृक्षाणां फलान्येतानि देहिनाम्" ॥ ८९ ॥

एतच्छ्रुत्वा हिरण्यकश्चित्रग्रीवस्य बन्धनं छेत्तुं सत्वरमुपसर्पति । तत्र चित्रग्रीव उवाच,—"मित्र ! मा मैवं कुरु, प्रथममस्मदाश्रितानामेतेषां तावत् पाशांश्छिन्धि, मम पाशं पश्चात् छेत्स्यसि" ।

हिरण्यकोऽप्याह,—"अहम् (व) अल्पशक्तिः, दन्ताश्च मे

(८८) यस्मादिति ।—यस्मात् यत्कारणाच्च, येन करणेन च, यथा येन प्रकारेण च, यदा यस्मिन् समये च, यत् यादृशञ्च, यावत् यत्परिमाणञ्च, यत्र यस्मिन् स्थाने च, शुभाशुभं मङ्गलामङ्गलोदर्कमित्यर्थः, आत्मनः स्वस्य, कर्म पुण्यपापादिकं, संघटते इति शेषः, तस्माच्च हेतोः, तेन करणेन च, तथा तेन प्रकारेण च, तदा तस्मिन् समये च, तत् तादृशञ्च, तावत् तत्परिमाणञ्च, तत्र तस्मिन् स्थाने च, विधातृवशात् विधिनियमात्, उपैति समागच्छति. फलतीत्यर्थः, कालान्तरे कर्मफलस्य अवश्यभोक्तव्यत्वात् शुभं वा अशुभं वा तदात्मकृतं कर्म फलरूपेण कर्त्तुः समीपमागच्छतीत्यर्थः । अत्र प्रकाराः प्रत्येकपदस्य प्राधान्यद्योतकाः । वसन्ततिलकं वृत्तम् ।

(८९) रोगेति ।—रोगः पीड़ा, शोकः पुत्रादिनाशजनितं दुःखं, परीतापः रोगशोकातिरिक्तं विविधं दुःखम, [ "उपसर्गस्य दीर्घत्वं क्विब्घञादौ क्वचिद्भवेत्" इति परेर्दीर्घता ] बन्धनं कारागारादौ संयमनं, व्यसनं विपत्, अत्र चकारः अनुक्तसमुच्चयार्थकः, तेन एतद्व्यतिरिक्ता अन्या अपि विपत्तयः इति चकारार्थो बोध्यः ; एतानि देहिनां शरीरिणाम्, आत्मनः स्वस्य, अपराधा एव वृक्षास्तेषां स्वकृतदोषतरूणां, फलानि परिणामभूतानि, वृक्षेभ्यः फलानीव स्वकृतदोषेभ्यः रोगादय उत्पद्यन्ते इत्यर्थः ।

(व) अल्पशक्तिः,—अल्पा शक्तिर्यस्य सः हीनबलः ।

कोमला:, तदेतेषां पाशांश्छेत्तुं कथमहं समर्थो भवामि ? यावन्मे दन्ता न (भ) त्रुट्यन्ति, तावत् तव पाशं छिनद्मि। तदनन्तरमप्येषां बन्धनं यावत् शक्यं छेत्स्यामि"।

चित्रग्रीव उवाच,—"अस्त्वेवं, तथापि यथाशक्ति बन्धमेतेषां खण्डय"। हिरण्यकेन उक्तम्, (म)—"आत्मपरित्यागेन यदाश्रितानां परिरक्षणं, तन्न (य) नीतिवेदिनां सम्मतम्।

यत:,—आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद् दारैरपि धनैरपि॥ ९०॥

अन्यच्च.—धर्मार्थकाममोक्षाणां प्राणा: संस्थितिहेतव:।
तान् निघ्नता किं न हतं ? रक्षता किं न रक्षितम् ?"॥

---

(भ) त्रुट्यन्ति—भज्यन्ति, भग्ना भवन्तीत्यर्थ:।

(म) आत्मपरित्यागेन—आत्मानमुपेक्ष्य, स्वदेहत्यागेनेत्यर्थ:।

(य) नीतिवेदिनां—नीतिं विदन्ति ये तेषां नीतिशास्त्राभिज्ञानाम्। ["सम्मतम्" इति "मतिबुद्धिपूजार्थेभ्यश्च" (३।२।१८८ पा०) इति वर्त्तमानप्रयुक्त-क्त-योगात् "क्तस्य च वर्त्तमाने" (२।३।६७ पा०) इति कर्त्तरि षष्ठी]।

(९०) सर्व्वत्यागेनापि स्वशरीरं रक्षणीयमिति यत् नीतिवेदिमतमुक्तं तद् द्रढयति, आपदर्थे इति।—आपदर्थे विपत्प्रतीकारार्थम्, आपदाम् अर्थ: निवृत्ति: तस्मिन्, समागतायामापदि तन्निवारणायेत्यर्थो वा, ("अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमर:) धनम् अर्थं, रक्षेत् पालयेत्, धनैरपि दारान् स्त्रियं, [दारशब्दो नित्यबहुवचनान्त: "अथ पुंभूम्नि दारा:" इत्यमर:] रक्षेत् त्रायेत, दारै: स्त्रिया अपि, तथा धनैरपि सततं सर्व्वदा, आत्मानं स्वजीवनं, रक्षेत् पालयेत्, पण्डित इति शेष:। यद्रक्षणार्थं धनानि दारा अपि त्यक्तुं युज्यते तस्यैव आत्मशरीरस्य रक्षणमपहाय त्वम् आश्रितरक्षणं कर्त्तुं वाञ्छसीति न युक्तमिति हिरण्यकस्याशय:।

(९१) तस्य गरीयस्त्वमाह, धर्मार्थेति।—प्राणा: जीवनं, धर्म: "यतोऽभ्युदयनि:श्रेयससिद्धि: स धर्म्म:" इत्युक्तलक्षण:, अहिंसादि: वा, अर्थ: अर्जनवर्द्धनसंरक्षणात्मकं धनं, काम: विषयभोगवासना, मोक्ष: अपवर्ग: तेषां, चतुर्वर्गस्य इत्यर्थ:, संस्थितिहेतव: रक्षाकारणानि, भवन्तीति शेष:, तान् प्राणान्, निघ्नता विनाशयता जनेन, किं न हतं न विनाशितम् ? रक्षता तान् प्राणान् पालयता जनेन च, किं

चित्रग्रीव उवाच,—"सखे! नीतिस्तावत् (र) ईदृशी एव, किन्त्वहमस्मदाश्रितानां दुःखं सोढुं सर्वथाऽसमर्थस्तेनेदं ब्रवीमि। यतः,—

धनानि जीवितञ्चैव परार्थे प्राज्ञ उत्सृजेत्।
सन्निमित्ते वरं त्यागो विनाशे नियते सति ॥ ९२ ॥

अयमपरश्चासाधारणो हेतुः,—

जातिद्रव्यबलानाञ्च साम्यमेषां मया सह।
मत्प्रभुत्वफलं ब्रूहि कदा किं तद्भविष्यति ? ॥ ९३ ॥

अन्यच्च,—विना वर्त्तनमेवैते न त्यजन्ति ममान्तिकम्।
तन्मे प्राणव्ययेनापि जीवयैतान् समाश्रितान् ॥ ९४ ॥

---

रक्षितम् ? चतुर्वर्गसाधनभूतेषु प्राणेषु विनष्टेषु सर्वमेव विनष्टं, रक्षितेषु सर्वमेव रक्षितं भवेदित्यर्थः।

(र) ईदृशी एव—आत्मानं सततं रक्षेदेवंभूतैव।

(९२) धनानीति।—प्राज्ञ एव प्राज्ञः बुद्धिमान् जनः, परार्थे परनिमित्ते एव, परेषामुपकारायैवेत्यर्थः, धनानि अर्थान्, जीवितं प्राणांश्च, उत्सृजेत् त्यजेत्। कुतः ? इत्याह,—विनाशे लब्धस्य धनस्य व्ययादिना नाशे जीवितस्य च मरणे च, नियते निश्चिते सति, सत् उत्तमं, निमित्तं कारणं तस्मिन् परोपकाररूपसदनुष्ठानार्थे, त्यागः विसर्जनं, धनजीवनयोरिति भावः, वरं मनाक्प्रियः।

(९३) जातीति।—मया सह एषां कपोतानां, [ सम्बन्धे षष्ठी ] जातिः कपोतत्वं, द्रव्यं पक्षचञ्च्वादिरूपा सम्पत्, उपादानसामग्री वा, बलं सामर्थ्यम्, उत्पतनादौ शक्तिरित्यर्थः, तेषां, चकारात् क्षणविध्वंसितादीनाम् इति यावत्, साम्यम् एकरूपता, अस्तीति शेषः, तत् तर्हि, एवं सतीत्यर्थः, ब्रूहि कथय, मयि मम वा यत् प्रभुत्वम् आधिपत्यं, तस्य फलं कदा कस्मिन् काले, नेदानीं चेदिति भावः, किं भविष्यति ? नैवेत्यर्थः ; यद्यहमीदृशे विपत्तिसमये स्वजीवनमुपेक्ष्य एतान् न त्राये, तदा एतावन्तं कालं मत्परिचर्य्यायाः किं फलमेतैर्लभ्येत ? अतः स्वामिः धर्म्मपालनमेवाश्रितरक्षणात्मकं मे गरीयः, न पुनरात्मरक्षणमिति निष्कर्षः।

(९४) प्रभुत्वरक्षणमेव श्रेयः न जीवितरक्षणमिति आह, विनेति।—एते कपोताः, वर्त्तनं जीविकां, जीविकाप्रेषणमित्यर्थः, तत् विना, आहारानुसन्धान-

किञ्च,—मांसमूत्रपुरीषास्थिनिर्मिते च कलेवरे ।
विनश्वरे विहायास्थां यशः पालय मित्र ! मे ॥ ९५ ॥

अपरञ्च पश्य,—यदि नित्यमनित्येन निर्मलं मलवाहिना ।
यशः कायेन लभ्येत तन्न लब्धं भवेन्नु किम् ? ॥ ९

यतः,—शरीरस्य गुणानाञ्च दूरमत्यन्तमन्तरम् ।
शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः" ॥ ९७

---

चेष्टान्तरेणेत्यर्थः, मम अन्तिकं सन्निधिं, नैव त्यजन्ति परिहरन्ति, यद्वा—वर्त्तनं विनैव तदलाभेऽपीत्यर्थः, ममान्तिकं न त्यजन्ति, परन्तु सेवन्ते इत्यर्थः, तत् तस्मात् सदनुरक्तत्वात् एव इत्यर्थः, मे मम, प्राणव्ययेनापि जीवनवित्तिमयेनापि, मम एतान् शरणागतान्, एतान् जीवय रक्ष ।

(९५) "स जीवति यशो यस्य कीर्त्तिर्यस्य स जीवति । अयशोऽकीर्त्तिस जीवन्नपि मृतोपमः ॥" इति स्मरन्नाह, मांसेति ।—हे मित्र ! मांसञ्च पि मूत्रञ्च पुरीषञ्च शकृच्च, अस्थि च तैः निर्मिते विरचिते, विनश्वरे च नियतविनाशि कलेवरे शरीरे, "मांसमूत्रपुरीषास्थिपूरितेऽत्र कलेवरे" इति पादान्तरम् ; आस्थां, विहाय त्यक्त्वा, मे मम, यशः कीर्त्तिं, शरणागतपालनरूपमित्यर्थः, पालय यशः अविनश्वरं कुरु इत्यर्थः ।

(९६) यदीति ।—अनित्येन अशाश्वतेन, मलं पुरीषं वहति यः स तेन शरीरेण, कायेन शरीरेण, यदि नित्यं ध्रुवम्, अनश्वरमित्यर्थः, निर्मलं विशुद्धं कीर्त्तिः, लभ्येत प्राप्येत, जनेनेति शेषः, तत् तदा, नु वितर्के सम्बोधने वा, किं वस्तु, लब्धं प्राप्तं, न भवेत् न स्यात् ? अपि तु सर्वमेव लब्धं भवेदित्यर्थः ; स्वल्प बहुमूल्यविनिमयो महान् लाभ इति भावः । अत्र अनित्येन नित्यस्य समलेन निर्म च विनिमयकथनात् अधिकपरिवृत्तिरलङ्कारः ; तदुक्तं—"परिवृत्तिर्विनिमयः समन्यू धिकैः भवेत्" इति ।

(९७) शरीरस्येति ।—शरीरस्य देहस्य, गुणानां दयादाक्षिण्यादीनाञ्च, प्रभेदः, अत्यन्तम् अतिशयेन, दूरम् अतिमहदित्यर्थः । तथाहि, शरीरं क्षणवि क्षणभङ्गुरं, गुणाः कल्पस्य प्रलयस्य, अन्तः शेषः, तं यावत्, आप्रलयमित्यर्थः, ति वे ते तथोक्ताः, महाप्रलयपर्यन्तं स्थितिमन्त इत्यर्थः ; अतः विनश्वरेण अविनश्वरं यशः अवश्यमेव अर्जनीयमिति भावः ।

इत्याकर्ण्य हिरण्यकः (ल) प्रहृष्टमनाः पुलकितः सन् अब्रवीत्—"साधु मित्र! साधु, अनेनाश्रितवात्सल्येन त्रैलोक्यस्यापि प्रभुत्वं त्वयि युज्यते" एवमुक्त्वा तेन सर्वेषां कपोतानां बन्धनानि छिन्नानि। ततो हिरण्यकः सर्वान् सादरं सम्पूज्याह, —"सखे चित्रग्रीव! सर्वथा अत्र (व) जालबन्धनविधौ (श) दोषमाशङ्क्य आत्मनि अवज्ञा न कर्त्तव्या। यतः,—

योऽधिकाद् योजनशतात् पश्यतीहामिषं खगः।
स एव प्राप्तकालस्तु पाशबन्धं न पश्यति॥ ९८॥

अपरञ्च,—शशिदिवाकरयोर्ग्रहपीड़नं
गजभुजङ्गमयोरपि बन्धनम्।

---

(ल) प्रहृष्टमनाः,—प्रहृष्टं पुलकितं, मनो यस्य सः, सन्तुष्टचित्तः इत्यर्थः। पुलकितः,—आनन्दाधिक्यात् सञ्जातरोमाञ्चः।

(व) जालबन्धनविधौ—जाले पाशे, जालेन वा, बन्धनं संरोधः, स एव विधिर्व्यापारः तस्मिन्, पाशबन्धनव्यापारे।

(श) दोषम्—अपराधं, स्वस्य निर्बुद्धितारूपमित्यर्थः।

(९८) य इति।—इह जगति, यः खगः पक्षी, श्येन इति भावः, तस्यैव दूरदृष्टिमत्त्वात्; योजनानां शतं तस्मात् अधिकात् शताधिकयोजनमपि दूरे अवस्थायेत्यर्थः, [अत्र ल्यब्लोपे पञ्चमी। मुग्धबोधमतेन तु—"निर्द्धारेऽधिकेन" इति सूत्रेण अधिकशब्दयोगात् पञ्चमी। अधिकादिति दूरार्थत्वात् पञ्चमी] बहुदूरादपीति यावत्, आमिषं भोग्यं वस्तु मांसं वा, ("आमिषं पुंनपुंसकम्। भोग्यवस्तुनि सम्भोगेऽप्युत्कोचे पललेऽपि च" इति मेदिनी) पश्यति लक्षयति, स एव तादृशः तीक्ष्णदूरदृष्टिसम्पन्नः खगोऽपीत्यर्थः, प्राप्तः उपस्थितः, कालः मृत्युसमयो यस्य स तथोक्तः, आसन्नमृत्युरित्यर्थः, तु पुनः, पाशबन्धं जालबन्धनं, विस्तीर्णं जालं समीपस्थमपीति भावः, न पश्यति न लक्षयति। नियतिः केन बाध्यते इति भावः।

(९९) सान्त्वयति, शशीति।—अहो! खेदे, शशिदिवाकरयोः सूर्य्याचन्द्रमसोः, ग्रहप्रधानयोरपीति भावः, ग्रहपीड़नं ग्रहेण राहुणा, ("ग्रहः—। सूर्य्यादौ पूतनादौ च सैंहिकेयोपरागयोः" इति मेदिनी) पीड़नम् आक्रमणं, राहुग्रास इति यावत्, गजभुजङ्गमयोः हस्तिसर्पयोः अपि, अवलीलया बहुप्राणि-

मतिमताञ्च विलोक्य दरिद्रतां
विधिरहो ! बलवानिति मे मतिः ॥ ९९ ॥

अन्यच्च,—व्योमैकान्तविहारिणोऽपि विहगाः सम्प्राप्नुवन्त्यापदं
बध्यन्ते निपुणैरगाधसलिलात् मत्स्याः समुद्रादपि ।
दुर्नीतं किमिहास्ति ? किं सुचरितं ? कः स्थानलाभे गु
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि" ॥१

इति प्रबोध्यातिथ्यं कृत्वा आलिङ्ग्य च तेन (ष) सम्प्रेषि

---

विनाशसमर्थयोरपीति भावः, बन्धनं शृङ्खलेन मन्त्रौषधिभ्याञ्च संरोधनं, मति विदुषाञ्च, दरिद्रताम् अकिञ्चनत्वं, विलोक्य दृष्ट्वा, स्थितस्य इति शेषः, मे विधिर्दैवं, बलवान् प्रबलः, सर्वनियन्ता इति यावत्, इति ईदृशी, मतिः नि निश्चय इति यावत्, भवतीति शेषः । द्रुतविलम्बितं वृत्तम् ।

(१००) व्योमेति ।—व्योम्नः आकाशस्य, एकान्ते एकदेशे, विहरन्ति तथोक्ताः, आकाशैकदेशचारिणः, (एतेन सर्वासु दिक्षु अस्य निरावरणत्वं सूचितम्) विहगाः पक्षिणः अपि, व्योमैकान्तविहारित्वात् कस्यचिदनिष्टमकुर्वा अपीति भावः, आपदं बन्धनादिरूपां विपदं, संप्राप्नुवन्ति अधिगच्छन्ति, नि कुशलैः, मत्स्यबन्धनदक्षैः धीवरैरिति भावः, अगाधसलिलात् अतलस्पर्शजला समुद्रादपि सागरादपि, मत्स्याः मीनाः, बध्यन्ते ध्रियन्ते, इह संसारे, किं दु दुश्चरितं, किं वा सुचरितं गुणः, अस्ति, स्थानलाभे निरुपद्रवस्थानप्राप्तौ वा, गुणः ? न कोऽपीत्यर्थः, सुनयेन दुर्नयेन वा केषाञ्चिदपि इष्टानिष्टाकारिणः निरपा स्थानविहारिणश्च खगमीनादयोऽपि यदा विपद्यन्ते, तदा सुनयस्य निरापत्स्थान च को गुणः ? को वा दुर्नयस्य विपत्सङ्कुलस्थानस्य च दोषः ? यदा नी नीतिसङ्गताचरणेनापि कदाचित् विपन्नः नीतिवहिर्भूताचारेणापि सम्पन्नो दृश्य तदा अत्र किमपि साद्गुण्यमसाद्गुण्यं वा नास्तीति भावः ; हि यस्मात्, व्यसने विपदि प्रसारितः विस्तारितः, करः हस्तो येन स तथोक्तः, अवश्यम्भाविन्यां विपदि क प्रसार्येत्यर्थः ; अथवा,—प्रसारितः व्यसनमेव करः यस्य स तादृशः, कालः कृतान्त नियतिर्वा, दूरादपि विप्रकृष्टस्थानादपि, किमुत अन्तिकात् ? गृह्णाति स्ववशता प्रापयति । "दैवशक्तिर्गरीयसी" इति भावः। शार्दूलविक्रीडितं वृत्तम् ।

(ष) सम्प्रेषितः,—विसर्जितः ।

चित्रग्रीवोऽपि सपरिवारो यथेष्टदेशान् ययौ। हिरण्यकोऽपि स्वविवरं प्रविष्टः। अतः,—

यानि कानि च मित्राणि कर्त्तव्यानि शतानि च।
पश्य मूषिकमित्रेण कपोता मुक्तबन्धनाः॥ १०१॥

अथ लघुपतनकनामा काकः (स) सर्ववृत्तान्तदर्शी साश्चर्य्यम् इदमाह,—"अहो हिरण्यक! श्लाघ्योऽसि, अतोऽहमपि त्वया सह मैत्रीं कर्त्तुमिच्छामि। अतो मां मैत्रेणानुग्रहीतुमर्हसि"। एतच्छ्रुत्वा हिरण्यकोऽपि विवराभ्यन्तरादाह,—"कस्त्वम्?" स ब्रूते,—"लघुपतनकनामा वायसोऽहम्"। हिरण्यको विहस्य आह,—"का त्वया सह मैत्री? यतः,—

यद् येन युज्यते लोके बुधस्तत् तेन योजयेत्।
अहमन्नं भवान् भोक्ता कथं प्रीतिर्भविष्यति? ॥१०२॥

अपरञ्च,—भक्ष्यभक्षकयोः प्रीतिर्विपत्तेरेव कारणम्।
शृगालात् पाशबद्धोऽसौ मृगः काकेन रक्षितः" ॥१०३॥

(१०१) यानीति।—यानि कानि च यादृशानि तादृशानि, नीचान्यनीचानि चेत्यर्थः, शतानि बहूनि च, मित्राणि सखायः, कर्त्तव्यानि कार्य्याणि, उत्तमाधममविचार्य्य बहुभिः सह मित्रता करणीयेत्यर्थः, कपोताः पारावताः, मूषिकमित्रेण उन्दुरसुहृदा, स्वल्पकायेनातितुच्छेन च इति भावः, मुक्तम् उन्मोचितं, छिन्नमिति यावत्, बन्धनं येषां ते तथोक्ताः छिन्नपाशबन्धनाः, बभूवुरिति शेषः, इति पश्य जानीहि।

(स) सर्ववृत्तान्तदर्शी—सर्वं वृत्तान्तं पश्यतीति सर्व्ववृत्तान्तदर्शी, चित्रग्रीवादीनां पाशमोचनादिकं सर्वं प्रत्यक्षीकुर्व्वन् इत्यर्थः।

(१०२) यदिति।—लोके जगति, येन वस्तुना सह, यत् वस्तु, युज्यते सङ्गच्छते, संयोगमर्हति इत्यर्थः, बुधः पण्डितः, तत् वस्तु, तेन सह, योजयेत् मेलयेत्; अहं मूषिकः, अन्नं वायसस्य ते भक्ष्यं वस्तु, भवान् वायसः, भोक्ता भक्षकः, ममेति शेषः, अत एव कथं केन प्रकारेण, प्रीतिः प्रणयः, आवयोरिति शेषः, भविष्यति सम्पत्स्यते? न कथमपीत्यर्थः, अयुक्तत्वात्। भारतशान्तिपर्वणि आपद्धर्मप्रकरणे एतदनुरूपश्लोको दृश्यते।

(१०३) तत्र का हानिरित्याह, भक्ष्यभक्षकयोरिति।—भक्ष्यः खाद्यः,

वायसोऽब्रवीत्,—"कथमेतत् ?" हिरण्यकः कथयति।—

मृग-वायस-शृगालकथा।—

"अस्ति मगधदेशे चम्पकावती नाम (ङ) अरण्यानी। तस्यां चिरात् महता स्नेहेन मृगकाकौ निवसतः। स च मृ स्वेच्छया भ्राम्यन् (क) हृष्टपुष्टाङ्गः केनचित् शृगालेना लोकितः। तं दृष्ट्वा शृगालोऽचिन्तयत्,—"आः! कथमेतन्मां (ख) सुललितं भक्षयामि ? भवतु विश्वासं तावदुत्पादयामि इत्यालोच्य उपसृत्याब्रवीत्,—"मित्र! कुशलं ते ?" मृगे उक्तं—"कस्त्वम् ?" जम्बुको ब्रूते—"क्षुद्रबुद्धिनामा जम्बुको ऽहम्, अत्रारण्ये बन्धुहीनो मृतवत् एकाकी निवसामि; इदानीं त्वां मित्रमासाद्य पुनः सबन्धुः (ग) जीवलोकं प्रविष्टोऽस्मि अधुना तव (घ) अनुचरेण मया सर्वथा भवितव्यम्" इति मृगेणोक्तम्,—"एवमस्तु"।

---

भक्षकः खादकः तयोः खाद्यखादकयोः, प्रीतिः प्रणयः, विपत्तेः आपदः एव, का हेतुः, भवतीति शेषः, "विपत्तेः कारणं मतम्" इति पाठान्तरम्; तथाहि शृगा शृगालमाश्रित्य अनुसृत्य वा, [अत्र ल्यब्लोपे पञ्चमी] पाशबद्धः जालनिर्या असौ अयोग्यमैत्रस्य दृष्टान्ततया स्मृतिविषयीभूतः कश्चित्, मृगः काकेन के बन्धुरूपेण वायसेन, रक्षितः पाशादुन्मोचितः, परित्रात इत्यर्थः; यद्वा—पाशबद्धः मृगः काकेन शृगालात् मांसलोलुपात् कपटमित्रात् कस्माच्चित् जम्बुकात्, रक्षि [अस्मिन् पक्षे "भीत्रार्थानां भयहेतुः" (१।४।२५ पा०) इति पञ्चमी]।

(ङ) अरण्यानी—महाऽरण्यम् [महत्त्वार्थे ङीष् आनुक् च]।

(क) हृष्टपुष्टाङ्गः,—हृष्टानि स्फूर्त्तिमापन्नानि, पुष्टानि मांसलानि अङ्गानि यस्य सः स्फूर्त्तियुक्तस्थूलकायः।

(ख) सुललितम्—अतिमनोज्ञं, सुकोमलं सुमधुरञ्चेति भावः।

(ग) जीवलोकं प्रविष्टः,—जीवानां प्राणवतां लोकं मर्त्यलोकं, प्रवि समागतः, पुनः जीवनं प्राप्तः इत्यर्थः।

(घ) अनुचरेण—सहचरेण इत्यर्थः।

ततस्तावदस्तङ्गते (ङ) सवितरि भगवति (च) मरीचिमालिनि तौ मृगस्य वासभूमिं गतौ। तत्र चम्पकवृक्षशाखायां सुबुद्धिनामा काको मृगस्य चिरमित्रं निवसति। तौ दृष्ट्वा काकोऽवदत्,—"सखे! कोऽयं द्वितीयः?" मृगो ब्रूते,—"जम्बुकोऽयम् (छ) अस्मत्सख्यम् इच्छन्नागतः"। काको ब्रूते,—"मित्र! अकस्मात् (ज) आगन्तुना सह मैत्री न युक्ता। तत्र भद्रमाचरितम्।

तथा चोक्तम्,—अज्ञातकुलशीलस्य वासो देयो न कस्यचित्।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः" ॥१०४॥

तावाहतुः,—"कथमेतत्?" काकः कथयति।—

वृद्धगृध्र-मार्जारकथा।—

"अस्ति (झ) भागीरथीतीरे गृध्रकूटनाम्नि पर्वते महान्

---

(ङ) सवितरि—सूर्य्ये।

(च) मरीचिमालिनि—मरीचीनां किरणानां, (किरणोऽस्रमयूखांशुगभस्तिघृणिघृष्णयः। भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्॥" इत्यमरः) माला विद्यतेऽस्य [इति इनिः], तस्मिन्, अंशुमालिनि।

(छ) अस्मत्सख्यम्—अस्माकं सख्यम्, [अविशेषणत्वात् द्वित्वेऽपि बहुवचनम्]।

(ज) आगन्तुना—नवागतेन, अज्ञातकुलशीलेनेति भावः।

(१०४) अज्ञातेति।—कुलं वंशः, शीलं स्वभावः, अज्ञाते अविदिते, कुलशीले वंशचरिते यस्य तस्य अपरिचितस्येत्यर्थः, कस्यचित् जनस्य, [सम्बन्धविवक्षायां षष्ठी] वासः आश्रयः, न देयः दातव्यः, हि यतः, मार्जारस्य कस्यचित् विडालस्य, अकस्मादागन्तोरिति भावः, दोषेण अपराधेन हेतुना, जरद्गवः जरद्गवनामा, यद्वा—जरन्तौ जीर्णतां गतौ, विनष्टौ इत्यर्थः, गावौ दृशौ यस्य सः, जरन्तः स्खलन्तः, वार्द्धकात् प्रच्यवन्तः इत्यर्थः, गावः लोमानि यस्य सः इति वा, ("गौर्नाऽऽदित्ये वलीवर्द्दे किरणक्रतुभेदयोः। स्त्री तु स्यादिशि भारत्यां भूमौ च सुरभावपि। नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु" इति केशवः) जरद्गवः तन्नामा कश्चित् अन्धः पतितरोमा वा, गृध्रः शकुनिः, हतः व्यापादितः, पक्षिभिरिति शेषः।

(झ) भगीरथस्य इयमिति भागीरथी (पुरा कपिलशापनिर्दग्धानां स्वपूर्व-

पर्कटीवृक्ष: । तस्य कोटरे (ञ) दैवदुर्विपाकात् (ट) गलितनख-
नयनो जरद्गवनामा गृध्रः प्रतिवसति । अथ कृपया (ठ) तज्जी-
वनाय तद्वृक्षवासिनः पक्षिणः स्वाहारात् किञ्चित् किञ्चिदुद्धृत्य
तस्मै ददति, तेनासौ जीवति, तेषां शावकरक्षाञ्च करोति।
अथ कदाचिद्दीर्घकर्णनामा मार्ज्जारः पक्षिशावकान् भक्षयितुं
तत्रागतः ।

ततस्तमायान्तं दृष्ट्वा पक्षिशावकैर्भयार्त्तैः (ड) कोलाहलः
कृतः । तच्छ्रुत्वा जरद्गवेनोक्तं,—"कोऽयमायाति ?" दीर्घकर्णो
गृध्रमवलोक्य सभयमाह—"हा ! हतोऽस्मि । यतोऽयं मां
(ढ) व्यापादयिष्यति । अथवा,—

तावद्भयस्य भेतव्यं यावद्भयमनागतम् ।
आगतन्तु भयं वीक्ष्य नरः कुर्य्याद् यथोचितम् ॥१०५॥

अधुनाऽतिसन्निधानेन पलायितुमशक्यम् । तद्यथा भवि-

---

पितामहानां सगरसन्ततीनां षष्टिसहस्राणाम् उद्धारकामः भगीरथनामा वैवस्वतः राजा तीव्रेण तपसा गङ्गां सुरलोकात् नृलोकमानयामासेति भगीरथानीतत्वात् गङ्गाया भागीरथीति संज्ञा ज्ञातव्या ।

(ञ) दैवदुर्विपाकात्—दुर्दैववशात् ।

(ट) गलितनखनयनः,—नखानि च नयने च नखनयनं [ प्राण्यङ्गत्वात् एकवद्भावः ] गलितं शीर्णं, विनष्टमित्यर्थः, नखनयनं यस्य सः, चयितनखः अन्धश्चेत्यर्थः।

(ठ) तज्जीवनाय—तस्य जरद्गवस्य जीवनं रक्षितुम् । उद्धृत्य—गृहीत्वेत्यर्थः

(ड) कोलाहलः,—कलरवः ।

(ढ) व्यापादयिष्यति—मारयिष्यति ।

(१०५) तावदिति ।—यावत् यावत्कालपर्य्यन्तं, भयं भयकारणम्, अनागतम् अनुपस्थितम्, [ अत्र प्रसज्यप्रतिषेधेऽपि नञः समासः ] तावत् तावत्कालं, भयस्य भयहेतोः, [ सम्बन्धविवक्षया षष्ठी ] भेतव्यं त्रसितव्यं, शङ्कितव्यमिति यावत्। तु किन्तु, नरः भयम् आगतम् उपस्थितं, वीक्ष्य दृष्ट्वा, यथोचितम् उचितमनतिक्रम्य, उपयुक्तमित्यर्थः, कुर्य्यात् अनुतिष्ठेत् । "प्रतिकुर्य्याद यथोचितम्" इति पाठान्तरम्। विपदि विस्मयः कापुरुषलक्षणमतस्तत्परो भूत्वा यथाशक्ति प्रतिकुर्य्यात् इति भावः।

तव्यं तद्भवतु तावत्, विश्वासमुत्पाद्यास्य समीपमुपगच्छामि" इत्यालोच्य तमुपसृत्याब्रवीत्,—(ण) "आर्य्य! त्वाम् (त) अभिवन्दे"। गृध्रोऽवदत्,—"कस्त्वम्?" सोऽवदत्,—"मार्जारोऽहम्"। गृध्रो ब्रूते,—"दूरमपसर, नो चेद्धन्तव्योऽसि मया"। मार्जारोऽवदत्—"श्रूयतां तावदस्मद्वचनं, ततो यद्यहं (थ) वध्यस्तदा हन्तव्यः। यतः,—

जातिमात्रेण किं कश्चिद्वध्यते पूज्यते क्वचित्।
व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत्" ॥ १०६ ॥

गृध्रो ब्रूते,—"ब्रूहि किमर्थमागतोऽसि?" सोऽवदत्—"अहमत्र गङ्गातीरे (द) नित्यस्नायी (ध) निरामिषाशी ब्रह्मचारी (न) चान्द्रायणव्रतमाचरंस्तिष्ठामि। यूयं धर्म्मज्ञान-

---

भारतीयशान्तिपर्व्वणि आपद्धर्म्मप्रकरणे वृद्धचाणक्ये च अस्य मूलं मृग्यम्। तत्र "नरः कुर्य्याद् यथोचितम्" इत्यत्र "प्रहर्त्तव्यमभीतवत्" "प्रहर्त्तव्यमशङ्कया" इति क्रमिकः पाठः।

(ण) आर्य्य!—पूज्य!, "कर्त्तव्यमाचरन् कार्य्यमकर्त्तव्यमनाचरन्। तिष्ठति प्रकृताचारे स वै आर्य्य इति स्मृतः" ॥ इति।

(त) अभिवन्दे—प्रणमामि।

(थ) वध्यः,—वधम् अर्हतीति वध्यः, [अर्हार्थे यत्। हन्तेर्थति च वध्यः स्यात्]।

(१०६) जातीति।—क्वचित् कुत्रचित् स्थाने, कश्चित् जनः, जातिमात्रेण केवल जातेस्तारतम्यानुसारेण, चण्डालजातिरयं क्रूरः अत एव वध्यः, ब्राह्मणजातिरयमुदारः अत एव पूज्यः इत्यादिरूपजातेरुच्चनीचताविचारणयैव इत्यर्थः, किं वध्यते, हन्यते, पूज्यते सम्मान्यते वा? अथवा व्यवहारम् आचरणं, परिज्ञाय विदित्वा, सम्यक् परीक्ष्येति यावत्, वध्यः वधार्हः, पूज्यः पूजनीयश्च, भवेत्?

(द) नित्यस्नायी—नित्यं स्नाति यः सः नित्यस्नानशीलः, त्रिसन्ध्यस्नाननिरत इत्यर्थः।

(ध) निरामिषाशी—निरामिषम् अश्नातीति निरामिषाशी मत्स्यमांसाहारविरतः इत्यर्थः। [अश्नातेर्णिनिः]।

(न) चान्द्रायणव्रतं—चन्द्रस्यायं चान्द्रः चन्द्रलोकः अयते गम्यते अनेनेति चान्द्रायणं तच्च व्रतञ्चेति, चन्द्रलोकप्रापकम्—"एकैकं ह्रासयेत् कृष्णे शुक्ले च परिवर्द्धयेत्" इत्युक्तलक्षणं व्रतम्। आचरन्—अनुतिष्ठन्।

रताः (प) प्रेमविश्वासभूमयः इति पक्षिणः सर्वे सर्वदा ममाग्रे (फ) प्रस्तुवन्ति। अतो भवद्भ्यो (ब) विद्यावयोवृद्धेभ्यो धर्मं श्रोतुमिहागतः, भवन्तश्चैतादृशा धर्मज्ञाः, यन्मामतिथिं हन्तुमुद्यताः ? गृहस्थधर्मश्चैषः,—

अरावप्युचितं कार्य्यमातिथ्यं गृहमागते।
छेत्तुः पार्श्वगतात् छायां नोपसंहरति द्रुमः॥ १०७॥

किञ्च यदि अन्नं नास्ति, तदा (भ) सुप्रीतेनापि वचसा तावदतिथिः पूज्यः एव। तथा चोक्तम्,—

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥ १०८॥

---

(प) प्रेमविश्वासभूमयः,—प्रणयविश्वासभाजनानि।

(फ) प्रस्तुवन्ति—प्रणुवन्ति, अत्यर्थं प्रशंसन्तीत्यर्थः।

(ब) विद्यावयोवृद्धेभ्यः,—विद्या च वयश्च विद्यावयसी ताभ्यां वृद्धाः तेभ्यः विद्यया वयसा च मत्तः प्रवीणेभ्यः।

(१०७) अराविति।—गृहं भवनम्, आगते उपस्थिते, अरौ शत्रावपि का कथा मित्रादौ इत्यपिशब्दार्थः, उचितं यथोपयुक्तम्, आतिथ्यम् अतिथिसत्कारः कार्य्यं करणीयं, गृहस्थेनेति शेषः। तथाहि द्रुमः वृक्षः, पार्श्वगतात् पार्श्ववर्त्तिनः विश्रामार्थमन्तिकोपविष्टादित्यर्थः, छेत्तुः छेदकात्, विश्रामानन्तरं यदि कश्चित् छेत्तुमिच्छेत् तस्मादपीत्यर्थः, छायाम् अनातपं, न उपसंहरति नाकर्षति, तथा छेदकस्य इव गृहस्थाः अतिथिभावेन आगतस्य शत्रोरपि आश्रयदाने न कातराः भवन्तीत्यर्थः। द्रुमाणामन्तश्चेतनावत्त्वात् छेत्तुरीप्सिताभिज्ञानं सम्भवत्येव, तथा चोक्तं मनुना,—"अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" इति।

(भ) सुप्रीतेन—प्रीतियुक्तेन, अतिमधुरेणेति यावत्।

(१०८) तृणानीति।—तृणानि कुशादिनिर्मितमासनं, भूमिः विश्रामलाभार्थं स्थानम्, उदकं पादप्रक्षालनार्थं जलं, चतुर्थी चतुर्णां पूरणी, सूनृता प्रियसत्या ("सूनृतं मङ्गलेऽपि स्यात् प्रियसत्यवचस्यपि" इति मेदिनी) वाक् वचनञ्च, एतानि तृणादीनि अपि, सतां साधूनां, गेहे गृहे, कदाचिदपि न उच्छिद्यन्ते न प्रमादिद्यन्ते, न दूरीक्रियन्ते इत्यर्थः, सज्जनावासे तृणादीनि सदैव विद्यन्ते इति निष्कर्षः।

अन्यच्च,—बालो वा यदि वा वृद्धो युवा वा गृहमागतः ।
तस्य पूजा विधातव्या सर्वस्याभ्यागतो गुरुः ॥ १०९ ॥
अपरञ्च,—निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ।
न हि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मनि ॥ ११० ॥
अन्यच्च,—अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ १११ ॥
अन्यच्च,—उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः ।
पूजनीयो यथायोग्यं सर्वदेवमयोऽतिथिः" ॥ ११२ ॥

---

अन्नाभावे उपवेशनार्थमासनप्रदानेन, तदभावे केवलं स्थानप्रदानेन, तस्याप्यभावे पादादिप्रक्षालनार्थं जलदानेन, सर्वाभावे प्रियवाक्येनापि अवश्यमेव अतिथिः सत्करणीयः इति तात्पर्य्यम् ।

(१०९) बाल इति ।—बालः बालकः वा, यदि वा अथवा, वृद्धः अथवा युवा तरुणः, यः कोऽपीत्यर्थः, गृहम् आगतः प्राप्तः, चेत् भवेत् इति शेषः, तर्हि तस्य पूजा सत्कारः, विधातव्या अवश्यं कर्त्तव्या, सर्वस्य जनस्य, अभ्यागतः अतिथिः, गुरुः गुरुवत् पूजनीय इत्यर्थः । अभ्यागतः यादृशस्तादृश एव भवतु, उत्तमाधमनिर्विशेष सर्व एव तुल्यसम्मानेन अभ्यर्हणीय इति भावः ।

(११०) निर्गुणेष्विति ।—साधवः सज्जनाः, निर्गुणेषु गुणहीनेषु अपि, सत्त्वेषु प्राणिषु, दयाम् अनुकम्पां, कुर्व्वन्ति । तत्र दृष्टान्तः,—चन्द्रः चाण्डालवेश्मनि अस्पृश्यचण्डालगृहे अपि, पतितामिति शेषः, ज्योत्स्नां कौमुदीं, न हि संहरते न हि आकर्षति ; महात्मानः सर्व्वत्र समदर्शिन इति भावः ।

(१११) अतिथिरिति ।—यस्य जनस्य, गृहात् अतिथिः भग्नाशः आतिथ्यलाभे वञ्चितः सन्, प्रतिनिवर्त्तते प्रत्यावर्त्तते, सः अतिथिः, तस्मै गृहस्वामिने, दुष्कृतं पापं, स्वकृतं दुरितम् इत्यर्थः, दत्त्वा, पुण्यम्, अतिथिसेवाविमुखस्येति शेषः, आदाय गृहीत्वा, तत्कृतपुण्य प्राप्य इत्यर्थः, गच्छति अन्यत्र याति । पराद्धेश्चास्य "पितृदा-स्तस्य हीयन्ते न च प्रीणाति वै पितृन्" इति अनुशासनपर्वोक्तः पाठः ।

(११२) उत्तमस्येति ।—उत्तमस्य अतिशयेन उत्कृष्टस्य, वर्णस्य ब्राह्मणादेः अपि, गृहम् आगतः समायातः, नीचोऽपि हीनजातिरपि, का कथा उच्चजाते-रित्यपिशब्दार्थः, यथायोग्यं यथोचितं, पूजनीयः आतिथ्येन सम्भावनीयः, यतः

गृध्रोऽवदत्—"मार्जारो हि (म) मांसरुचिः, पक्षिशावका अत्र निवसन्ति, तेनैवं ब्रवीमि"। तच्छ्रुत्वा मार्जारो (य) भूमिं स्पृष्ट्वा कर्णौ स्पृशति, ब्रूते च,—"मया (र) धर्मशास्त्रं श्रुत्वा (ल) वीतरागेण इदं दुष्करं व्रतं चान्द्रायणम् (व) अध्यवसितम्। यतः, परस्परं (श) विवदमानानामपि धर्मशास्त्राणाम् अहिंसा परमो धर्म इत्यत्र (ष) ऐकमत्यम्।

तथाचोक्तम्,—अहिंसा परमो धर्मस्तथाऽहिंसा परो दमः।
अहिंसा परमं दानमहिंसा परमं तपः ॥ ११३ ॥

अन्यदपि,—अहिंसा परमो यज्ञस्त्वहिंसा परमं बलम्।
अहिंसा परमं मित्रमहिंसा परमं श्रुतम् ॥ ११४ ॥

---

अतिथिरभ्यागतः, सर्वदेवमयः सर्वदेवस्वरूपः, [ ताद्रूप्ये मयट् ] भवतीति शेषः; सर्वेषां देवानां पूजनेन यत् फलं लभ्यते, अतिथिसेवयाऽपि तदिति भावः।

(म) मांसरुचिः,—मांसे रुचिर्यस्य सः, मांसप्रियः।

(य) भूमिं स्पृष्ट्वा कर्णौ स्पृशति—भूमिस्पर्शपूर्वकं शपथं कृत्वा पापकथाश्रवणभयात् कर्णौ आच्छादयतीत्यर्थः। "मांसरुचिः" इति हिंसासूचकवाक्यश्रवणेन पापसम्पृक्तं मन्यमानो विडालः तत्परिहाराय भूमिं कर्णौ च स्पृष्टवान्, अग्निदग्धापि दानप्रकरणे तादृशाचारस्य पापविध्वंसित्वेन निर्दिष्टत्वात् इति वा मन्तव्यम्।

(र) धर्मशास्त्रं—मन्वादिप्रणीतं धर्मोपदेशकं शास्त्रम्।

(ल) वीतरागेण—वीतः विगतः, रागः विषयवासना यस्य सः तेन, विषयभोगे वीतस्पृहेण।

(व) अध्यवसितम्—अनुष्ठितम् [ अधि + अव + सो + आदिकर्मणि क्तः ]।

(श) विवदमानानां—कलहायमानानां, त्वदुक्तिर्विरुद्धा, न मदुक्तिरित्यादि वैमत्यहेतुकं नानाविधं भाषमाणानामित्यर्थः, "भासन—" (१।३।४७ पा०) इत्यात्मनेपदम्।

(ष) ऐकमत्यम्—एकमतावलम्बित्वम्।

(११३।११४) महाभारतानुशासनपर्वणि दानधर्मोक्तश्लोकानालम्ब्य श्लोकद्वयमाह, अहिंसेति।—अहिंसा हिंसाराहित्यम्, (एवेत्यध्याहार्य्यम्;) परमः अतुल्यः, धर्मः, तथा अहिंसा परः श्रेष्ठः, दमः इन्द्रियजयः, अहिंसा एव परमं

यतः,—सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः॥ ११५॥

अन्यच्च,—एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति॥ ११६॥

किञ्च,—योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम्।
एकस्य क्षणिका प्रीतिरन्यः प्राणैर्विमुच्यते॥ ११७॥

प्रधानं, दानम्, अहिंसा एव परमं तपः तपस्या, तथा अहिंसा एव परमः यज्ञः याग:, अहिंसा एव परमं प्रधानं, बलम्, अहिंसा एव परमं प्रशस्तं, मित्रम्, अहिंसा एव परमं श्रेष्ठं श्रुतं शास्त्राध्ययनम्; धर्मेण दमेन दानेन तपसा यज्ञेन बलेन मित्रेण श्रुतेन वा यत् फलं लभ्यते, केवलम् अहिंसया एव तत्सर्वं लभ्यते, अतोऽहिंसा-समं किमपि नाप्नोति भावः।

(११५) सर्वेति।—ये नराः मनुष्याः, सर्वाः सर्वविधाः, हिंसाः प्राणिवधा-द्यः, सर्वेषां सर्वविधानां प्राणिनां, हिंसा इत्यर्थो वा, ताभ्यः निवृत्ताः विरताः, ये च नराः, सर्वं सहते इति सर्वंसहाः सर्वसहिष्णवः, सर्वस्य जनस्य, शरीरिणस्य च इत्यर्थः. आश्रयभूताः अवलम्बनस्थानानि च, यानाश्रित्य अनेके उपजीवन्तीत्यर्थः, ते नराः मनुष्याः, स्वर्गगामिनः स्वर्गं गच्छन्तीति तादृशाः, स्वर्गवासिन इत्यर्थः, भवन्तीति शेषः।

(११६) धर्म्माचरणस्य प्राशस्त्यप्रतिपादनार्थं मानवीयसंहितायाः अष्टमाध्या-योक्तसप्तदशश्लोकं प्रमाणत्वेन उपन्यस्यति, एक इति।—एकः केवलः, धर्मः एव सुहृत् अनन्यसाधारणं मित्रमित्यर्थः। कुतः? इत्याह,—यः धर्मः, निधनेऽपि मरणे-ऽपि, अनुयाति अनुसरति, अभीष्टफलप्रदानाय सततमप्यनुसरतीत्यर्थः. अन्यत् सर्वन्तु धर्म्मातिरिक्तं वस्तुजातं पुनः, शरीरेण कायेन. समं सह, नाशं गच्छति प्राप्नोति, देहेऽस्मिन् विध्वस्ते पुत्रकलत्रादिभिः सर्वैरपि सम्बन्धविनाशात् इति भावः। कस्माचिदपि कारणात् धर्मो न परित्यज्यः इत्याशयः।

(११७) य इति—यः प्राणी, यदा यस्मिन् काले, यस्य प्राणिनः, मांसम् अत्ति भक्षयति, तदा उभयोः खाद्यखादकयोः, अन्तरं प्रभेदं, पश्यत आलोकयत, यूयमिति शेषः; एकस्य भक्षकस्य प्राणिनः इत्यर्थः, क्षणिका क्षणस्थायिनी, प्रीतिः सन्तोषः, अन्यः भक्ष्यः, प्राणैः जीवितेन, विमुच्यते त्यज्यते, एकः क्षणं तृप्तिमनु-भवति अपरः म्रियते इत्यर्थः।

अपिच,—मर्त्तव्यमिति यद्दुःखं पुरुषस्योपजायते ।

शक्यस्तेनानुमानेन परोऽपि परिरक्षितुम् ॥ ११८ ॥

शृणु पुनः,—

स्वच्छन्दवनजातेन शाकेनापि प्रपूर्य्यते ।

अस्य दग्धोदरस्यार्थे कः कुर्य्यात् पातकं महत् ?" ॥

एवं विश्वास्य स मार्जारः तरुकोटरे स्थितः । ततो दि
गच्छत्सु असौ पक्षिशावकानाक्रम्य कोटरमानीय प्र
खादति । अथ येषामपत्यानि खादितानि, तैः शोका
(स) विलपद्भिः (ह) इतस्ततो जिज्ञासा समारब्धा । तत् परि

(११८) मर्त्तव्यमिति ।—पुरुषस्य पुंसः, मर्त्तव्यम् अवश्यमेव मृत्युर्भा
इति इत्थं चिन्तया, यत् यादृशं, दुःखं क्लेशः, उपजायते भवति, तेन अनु
आत्ममरणवदन्येषामपि मरणं दुःसहक्लेशकरम् इति अनुमित्या, परोऽपि अन्यः
स्वेतरः प्राणी अपीत्यर्थः, परिरक्षितुं हिंसाप्रवृत्तिभ्यस्त्रातुं, जीवितत्वेन स्थापयितुमि
शक्यः योग्यः, भवतीति शेषः ; [ अत्र "प्रधानशक्त्यभिधाने गौणशक्तिरविहि
प्रकाशते" इति न्यायात् शक्य इति प्रधानक्रियायोगे पर इति प्रथमाविभक्ति
मन्तव्यः ]। परेषामपि मृत्युदुःखं निजमृत्युदुःखवदनुमाय पुरुषैः हिंसातो उपर
मिति भावः। "शक्यते नानुमानेन परेण परिवर्धितुम्" इति पाठान्तरम् ।

(११९) स्वच्छन्देति ।—स्वस्य छन्दोऽभिप्रायो यस्मिन् तत् यथा तथा
जातेन, स्वच्छन्देन स्वेच्छया, स्वभावत एवेत्यर्थः, वनात् जातस्तेन इति वा, हल
णादिकमन्तरेण स्वत उत्पन्नेन इत्यर्थः, शाकेनापि पत्रपुष्पफलादिरूपेण अन्नोपक
नापि, प्रपूर्य्यते परिपूर्णं भवति, यत् उदरमिति शेषः, अक्लिष्टपच्येन वन्येन
मूलादिना अपि यस्य पोषणं भवेत् इत्यर्थः, [ दैवादिकस्यात्मनेपदिनः पूरय
कर्त्तरि प्रयोगोऽयम् ] यद्वा—प्रपूर्य्यते पूरयितुं शक्यते, लोकैरिति शेषः ; [ प्रचेर्य
कर्म्मणि प्रयोगोऽयम् ]; अस्य दग्धोदरस्य हतजठरस्य, अर्थे निमित्ते, को जनः, प्र
प्राणिवधरूपम् अतीव गर्हितं, पातयति यत् तत् पातकं पापं, कुर्य्यात् आचरे
न कोऽपीत्यर्थः ।

(स) विलपद्भिः,—रुदद्भिः ।

(ह) इतस्ततो जिज्ञासा समारब्धा—समन्तात् शावकान्वेषणकृते प्रश्नः कृतः इत्य

मार्जारः कोटरात् निःसृत्य बहिः पलायितः। पश्चात् पक्षिभिरितस्ततो (क) निरूपयद्भिस्तत्र तरुकोटरे शावकास्थीनि प्राप्तानि। अनन्तरम् "अनेनैव जरद्गवेन अस्माकं शावकाः खादिताः" इति निश्चित्य मिलित्वा सर्वैः पक्षिभिः स गृध्रो व्यापादितः। अतोऽहं ब्रवीमि,—"अज्ञातकुलशीलस्येत्यादि"।

(ख) [ इति जरद्गवगृध्रमार्ज्जारकथा ]।

इत्याकर्ण्य स जम्बुकः सकोपमाह,—"मृगस्य प्रथमदर्शनदिने भवानपि अज्ञातकुलशील एवासीत्; तत् कथं भवता सह एतस्य (ग) स्नेहानुवृत्तिः (घ) उत्तरोत्तरं वर्द्धते?—

यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥ १२० ॥

अन्यच्च,—अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥ १२१ ॥

---

(क) निरूपयद्भिः,—सावधानं निरीक्षमाणैः, अन्विष्यद्भिरित्यर्थः।

(ख) कथेयं भारतोद्योगपर्व्वोलूकदूताभिगमनपर्व्वणि कीर्त्तितस्य विड़ालतपस्विवृत्तस्यानुरूपा इत्यवगन्तव्यम्।

(ग) स्नेहानुवृत्तिः,—प्रणयानुवर्त्तनं, प्रीतिः इति यावत्।

(घ) उत्तरोत्तरं वर्द्धते—क्रमशः वृद्धिं प्राप्नोति।

(१२०) यत्रेति।—यत्र यस्मिन् देशे, विद्वज्जनः पण्डितो जनः, न अस्ति न विद्यते, तत्र तस्मिन् देशे, अल्पा धीर्बुद्धिर्यस्य स अल्पधीः मन्दबुद्धिः, विद्याहीनोऽपीत्यर्थः, श्लाघ्यः प्रशंसनीयः, सर्वेषामादरणीय इति यावत्, भवतीति शेषः। तथाहि निरस्तः पादपः यस्मात् तस्मिन् वृक्षहीने, देशे स्थाने, एरण्डः ("भेराण्डा" इति वङ्गभाषा,) तन्नामा कश्चित् असारवृक्षोऽपि, द्रुमायते अद्रुमः द्रुमो भवति, [ इति भृशादित्वात् क्यङ् ] द्रुमत्वेन परिगण्यते इत्यर्थः।

(१२१) अयमिति।—अयं निजः आत्मीयः, वा अथवा, परः अयम् अनात्मीयः, भवतीति शेषः, इति एषा, लघुचेतसां नीचाशयानां, गणना विचारणा, अनुदाराः कमपि आत्मीयं कमपि वा अनात्मीयं मन्यन्ते इत्यर्थः, तु किन्तु, उदारम् औदार्य्यगुणान्वितं, चरितं येषां तेषां, महानुभावानां, सर्व्वत्र समदर्शिनामित्यर्थः,

यथा च अयं मृगो मम बन्धुस्तथा भवानपि ।" शृ
ऽब्रवीत्,—(ङ) "किमनेन उत्तरोत्तरेण? सर्वै
(च) विश्रम्भालापैः सुखमनुभवद्भिः स्थीयताम्। यतः,—

न कश्चित् कस्यचित् मित्रं न कश्चित् कस्यचिद्रिपुः।
व्यवहारेण मित्राणि जायन्ते रिपवस्तथा" ॥ १२२॥

काकेन उक्तम्,—"एवमस्तु"। अथ प्रातः सर्वे (छ) य
ऽभिमतदेशं गताः ।

एकदा (ज) निभृतं शृगालो ब्रूते,—"सखे मृग! एत
न्नेव वनैकदेशे शस्यपूर्णं क्षेत्रमस्ति, तदहं त्वां तत्र नी
दर्शयामि"। तथा कृते सति मृगः प्रत्यहं तत्र गत्वा श

---

जनानामिति शेषः, वसूनि धनानि दधाति इति वसुधा सजगपृथिव्येव, वसु
पृथिवीस्थजीवनिचयः, कुटुम्बकम् आत्मीयसमूहः, भवतीति शेषः, उदारचरि
सर्वं एव वसुधावासिन आत्मीया मन्यन्ते इत्यर्थः ।

(ङ) किमनेन उत्तरोत्तरेण—अनेन ईदृशेन, उत्तरोत्तरेण उत्तरोत्तर
प्रपञ्चेन, किम् अलम् । ईदृशवादप्रतिवादेन किमपि प्रयोजनं न साध्यते इ
[ अत्र वारणार्थककिंशब्दयोगे करणे तृतीया ]।

(च) विश्रम्भालापैः,—विश्रम्भेन विश्वासेन प्रणयेन वा, पूर्णाः आल
सम्भाषाः तैः, [ मध्यपदलोपिकर्मधारयः ] प्रणयगर्भैर्विश्वासपूर्णैर्वा मिथो भाषणैः

(१२२) काकजम्बूकयोर्विरोधप्रशमनार्थं मृगः महाभारतशान्तिपर्वीयाप
प्रकरणोक्तश्लोकानवलम्ब्य शत्रुमित्रयोः छेदकत्वमाह, नेति ।—कश्चित् जनः, कस्य
जनस्य, मित्रं सुहृत्, [ मेद्यति स्निह्यति इति मित्रं ] न, कश्चित् जनः, कस्य
जनस्य, रिपुः शत्रुरपि, न, उभयञ्चापि भवतीति शेषः। कश्चित् कस्यचित्
शत्रुर्वा भूत्वा न जायते इत्यर्थः। व्यवहारेण हिताहिताचरणेन एव, मित्राणि सु
तथा रिपवः शत्रवश्च, जायन्ते। यो हि शत्रुवदाचरति स एव शत्रुः, यश्च
वदाचरति स एव मित्रमित्यर्थः; "उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः"
भावः। कामन्दकीयाष्टमसर्गेऽपि अस्यानुरूपश्लोको दृश्यते ।

(छ) यथाऽभिमतदेशं—यथाऽभीष्टप्रदेशम् । [ विभक्त्यर्थे अव्ययीभावः ]।

(ज) निभृतं—रहसि ।

खादति। ततो (झ) दिनकतिपयेन क्षेत्रपतिना तत् दृष्ट्वा पाशास्तत्र योजिताः। अनन्तरं पुनरागतो मृगस्तत्र चरन् पाशैर्बद्धोऽचिन्तयत्,—"को माम् (ञ) इतः (ट) कालपाशादिव व्याधपाशात् त्रातुं मित्रादन्यः समर्थः?" अत्रान्तरे जम्बूकस्तत्रागत्य उपस्थितोऽचिन्तयत्,—"फलितस्तावदस्माकं (ठ) कपटप्रबन्धः, मनोरथसिद्धिरपि बाहुल्यात् मे भविष्यति। यतः एतस्य (ड) उत्कृत्यमानस्य (ढ) मांसासृग्लिप्तानि अस्थीनि मया अवश्यं प्राप्तव्यानि"। स च मृगस्तं दृष्ट्वा (ण) उल्लासितो ब्रूते,—"सखे! छिन्धि तावत् मम बन्धनं, सत्वरं त्रायस्व माम्। यतः,—

आपत्सु मित्रं जानीयात्, युद्धे शूरमृणे शुचिम्।
भार्य्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान्॥ १२३॥

---

(झ) दिनकतिपयेन—कियद्दिनेषु गच्छत्सु इत्यर्थः।

(ञ) इतः,—अस्मात्। [इदमः पञ्चम्यास्तसिल्]।

(ट) कालपाशादिव—यमपाशादिव।

(ठ) कपटप्रबन्धः,—चातुर्य्यं, छलप्रयोगः इत्यर्थः।

(ड) उत्कृत्यमानस्य—छिद्यमानस्य, खण्डशः क्रियमाणस्येत्यर्थः।

(ढ) मांसासृग्लिप्तानि—मांसञ्च असृक् रक्तञ्च इति मांसासृक्, तेन लिप्तानि सम्पृक्तानि, रक्तमांससहितानि इत्यर्थः।

(ण) उल्लासितः,—आनन्दितः। उल्लासः सञ्जातोऽस्य इति [उल्लास+इतच्]।

(१२३) आपत्स्विति।—आपत्सु आपत्काले उपस्थिते सतीत्यर्थः, मित्रं सुहृदं, युद्धे समरे उपस्थिते, शूरं विक्रमशालिनम्, ऋणे उद्धारे सति, पुनर्देयत्वेनाभ्युपगम्य उत्तमर्णात् धने गृहीते सतीत्यर्थः, शुचिं निर्मलचरितं, वित्तेषु धनेषु, क्षीणेषु क्षयं प्राप्तेषु सत्सु, भार्य्यां, व्यसनेषु कामजकोपजदोषजनितदशाविपर्य्ययेषु च, उपस्थितेष्विति शेषः, बान्धवान् जानीयात् अवगच्छेत्, परीक्षेत इत्यर्थः, लोक इति शेषः। गरुड़नीतिसारे नवाधिकशततमाध्याये—"भार्य्याञ्च विभवे क्षीणे दुर्भिक्षे च प्रियातिथिम्" इत्युत्तरार्द्धस्य पाठान्तरम्।

अपरञ्च,—उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः" ॥ १२

जम्बूकः पाशं मुहुर्मुहुर्विलोक्य अचिन्तयत्,—"दृढ़
बद्धोऽस्ति तावदयं मृगः" ब्रूते च,—"सखे ! (त)
निर्मिताः पाशास्तदद्य भट्टारकवारे कथमेतान्
स्पृशामि ? मित्र ! यदि चित्ते न अन्यथा मन्यसे, तदा
यत्त्वया वक्तव्यं, तत् कर्त्तव्यम्" इति ।

अनन्तरं स काकः (थ) प्रदोषकाले मृगमनागतमव
इतस्ततोऽन्विष्य तथाविधं तं दृष्ट्वा उवाच,—"सखे ! किमेत
मृगेण उक्तम्,—(द) "अवधीरितसुहृद्वाक्यस्य (ध) फलमि
तथा चोक्तम्,—सुहृदां हितकामानां यः शृणोति न भाषितम्
विपत् सन्निहिता तस्य स नरः शत्रुनन्दनः" ॥

(१२४) काकस्य अकृत्रिममित्रत्वख्यापनार्थं चाणक्यवचनमाश्रित्य बन्धु माह, उत्सवे इति ।—यः यो जनः, उत्सवे विवाहादौ आनन्दजनकव्यापारे, आपदि, विपत्काले इत्यर्थः, दुर्भिक्षे दुष्प्रापा भिक्षा यस्मिन् तस्मिन् अन्नाभा इत्यर्थः, राष्ट्रस्य राज्यस्य, विप्लवे उपद्रवे, नृपान्तराक्रमणे इति यावत्। "व्यसने प्राप्ते दुर्भिक्षे शत्रुसङ्कटे" इति चाणक्यीयपाठः। राजद्वारे विचा वादिकृताभियोगे इति भावः, श्मशाने शवदाहस्थाने च, दाहाद्यन्त्येष्टि वा, तिष्ठति अनुकूलयति, स एव बान्धवः प्रकृतबन्धुः, भवतीति शेषः।

(त) स्नायुनिर्मिताः पाशाः,—स्नायुभिः देहान्तर्वर्त्तिसूक्ष्मनाड़ीविशेषैः, नि रचिताः, पाशाः जालानि, जालरज्जवः इत्यर्थः। भट्टारकवारे—रविवासरे धिपत्वात् सूर्यस्य भट्टारकत्वमवगन्तव्यम् ।

(थ) प्रदोषकाले—निशामुखे, सायंकाले इत्यर्थः।

(द) अवधीरितसुहृद्वाक्यस्य—अवधीरितम् अवज्ञातम्, अश्रुतमिति यत् सुहृदः मित्रस्य, वाक्यं वचनं तस्य, बान्धववचनावहेलनस्येत्यर्थः।

(ध) फलं—परिणामः।

(१२५) महाभारतीयोद्योगपर्वणि उक्तस्य श्लोकस्य छायामवलम्ब्य सुहृ वहेलनस्य दुरन्तत्वमाह, सुहृदामिति।—यः जनः, हितं कामयते ये तेषां

काको ब्रूते,—"स (न) वञ्चकः क्व आस्ते ?" मृगेण उक्तं,—"मन्मांसार्थी तिष्ठति अत्रैव"। काको ब्रूते,—"मित्र ! उक्तमेव मया पूर्वम्,—

अपराधो न मेऽस्तीति नैतद्विश्वासकारणम् ।
विद्यते हि नृशंसेभ्यो भयं गुणवतामपि ॥ १२६ ॥
दीपनिर्वाणगन्धञ्च सुहृद्वाक्यमरुन्धतीम् ।
न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः ॥ १२७ ॥
परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम्" ॥ १२८ ॥

---

कामानां हितैषिणां, सुहृदां मित्राणां, भाषितं वचनं, न शृणोति न आकर्णयति, तस्य जनस्य, विपत् सन्निहिता निकटवर्त्तिनी, अचिरेणैव आपतिष्यति इत्यर्थः, स नरः शत्रुनन्दनः नन्दयतीति नन्दनः, शत्रूणामानन्दकरः, प्रीतिवर्द्धनः इत्यर्थः, भवतीति शेषः। तम् आसन्नविपदं मत्वा शत्रवो हृष्यन्ति इति भावः।

(न) वञ्चकः,—वञ्चयतीति वञ्चकः प्रतारकः, धूर्त्त इति यावत्।

(१२६) अपराध इति।—मे मम, अपराधः दोषः, नास्ति न विद्यते, नाहमेभ्यः कथमपि अपराद्धवान्, कथमेते ममापकारं कुर्य्युः इत्यर्थः, इति एतत्, एतावच्चिन्तनमित्यर्थः. विश्वासकारणं निसर्गक्रूरे प्रत्ययहेतुः, न, भवति इति शेषः। एवं विश्वस्य न केनापि निर्भयेण भाव्यमित्यर्थः, हि यतः, गुणवतां गुणिनामपि, निरपराधानामपि इत्यर्थः, किमुत सदोषाणामिति भावः, नृशंसेभ्यः नॄन् शंसन्ति हिंसन्ति ये तेभ्यः, गुणदोषौ अविचार्य्य परद्वेषिभ्यः निसर्गक्रूरेभ्यः, भयं विद्यते अस्ति। निसर्गक्रूरा हि गुणदोषावविचार्य्यैव सर्वान् हिंसन्तीति भावः।

(१२७) दीपेति।—गतायुषः गतम् आयुर्जीवनकालो येषां ते तथोक्ताः आसन्नमृत्यवः जनाः, दीपस्य प्रदीपस्य, निर्वाणेन विनाशेन, यो गन्धः तं, न जिघ्रन्ति नानुभवितुं शक्नुवन्ति इत्यर्थः, सुहृदः वाक्यं बन्धुवचनं, न शृण्वन्ति न आकर्णयन्ति, तथा अरुन्धतीं सप्तर्षिमण्डलस्थं तदाख्यनक्षत्रविशेषञ्च, न पश्यन्ति नावलोकयन्ति, कालपक्वत्वात् सत्यपि इन्द्रियग्रामे अविकृते घ्रातुं श्रोतुं द्रष्टुञ्च न शक्नुवन्तीत्यर्थः। अतस्ते सुहृदो वाक्यहेलनं मे युक्तमेवेति भावः।

(१२८) परोक्षे इति।—अक्ष्णोः परं परोक्षं तस्मिन् परोक्षे असमक्षे, कार्य्यस्य

ततः काको दीर्घं निश्वस्य उवाच,—"अरे वञ्चक ! त्वया (प) पापकर्मणा कृतम् ? यतः,—

संलापितानां मधुरैर्वचोभि-
र्मिथ्योपचारैश्च वशीकृतानाम् ।
आशावतां श्रद्दधताञ्च लोके
किमर्थिनां वञ्चयितव्यमस्ति ? ॥ १२९ ॥

अन्यच्च,—उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम् ।
तं जनमसत्यसन्धं भगवति वसुधे ! कथं वहसि ? ॥१३०॥

---

हन्तारं व्याघातकं, प्रत्यक्षे समक्षे, प्रियं वदतीति तं मधुरमालपन्तम्, अत एव पयः दुग्धं, मुखे अग्रभागे यस्य तं पयोमुखं, विषस्य कुम्भं विषपूर्णकलशमिवेत्यर्थः, तादृशं कपटचारिणमिति भावः, मेद्यति स्निह्यतीति मित्रं बन्धुं, वर्जयेत् त्यजेत्, तादृशेन न कदापि मैत्री कर्त्तव्या इत्यर्थः । [ अत्र नपुंसकलिङ्गमित्रशब्दस्य विशेषणत्वेन उपन्यस्तयोः "हन्तारं वादिनम्" इति पदयोः पुंलिङ्गता "शब्दा गच्छन्ति शब्दस्य लिङ्गमर्थस्य कुत्रचित् । दैवं कलत्रं वा लोके दारान् पश्यति शोभनाः ॥" इति कातन्त्रानुशासनात् विशेष्यस्य पुंस्त्वार्थबोधकत्वेन न दूष्यतीति मन्तव्यम् । परन्तु "मित्रम्" इत्यत्र "बन्धुम्" इति पाठे कृते सर्वं समञ्जसं स्यादिति ] ।

(प) पापकर्मणा—पापं पापजनकं कर्म यस्य सः तेन, दुराचारेण ।

(१२९) संलापितानामिति ।—लोके जगति, मधुरैः प्रीतिगर्भैः, वचोभिः वचनैः, संलापितानां प्रियं मधुरञ्च सम्भाषितानां, मिथ्योपचारैः कपटाचरणैः, वशीकृतानां वशमानीतानाम्, आशावताम् उपकारादिलाभाशायुक्तानां, श्रद्दधताञ्च विश्वासमापन्नानाञ्च, अर्थिनां याचकानां, किं वञ्चयितव्यं प्रवञ्चनार्हं किमपि कार्यम् अस्ति ? नैते कथमपि वञ्चनीया इत्यर्थः । सद्भावप्रतिपन्नानां वञ्चने का विदग्धता ! इति भावः । उपजातिः वृत्तम् ।

(१३०) उपकारिणीति ।—उपकारिणि उपकारशीले, तथा विश्रब्धे विश्वस्ते, शुद्धा सरला, मतिर्यस्य तस्मिन् अकपटान्तःकरणे च, जने इति शेषः, यो जनः, पापम् अनिष्टं, समाचरति व्यवहरति, सङ्घटयति इत्यर्थः, हे भगवति वसुधे ! पृथ्वि ! सत्ये सत्यपालने, सन्धा प्रतिज्ञा, सत्या यथार्था, सन्धा यस्य सः इति वा सत्यसन्धः सत्यप्रतिज्ञः, स न भवतीति तम् असत्यसन्धं वञ्चनापरं, तं जनं, कथं केन प्रकारेण,

दुर्जनेन समं वैरं प्रीतिञ्चापि न कारयेत् ।
उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥ १३१ ॥

अथवा (फ) स्थितिरियं दुर्जनानाम्,—

प्राक् पादयोः पतति खादति पृष्ठमांसं
कर्णे कलं किमपि रौति शनैर्विचित्रम् ।
छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः
सर्वं खलस्य चरितं मशकः करोति ॥ १३२ ॥

---

वहसि धारयसि ? तादृशदुर्जनस्य भारधारणं कथमपि न युज्यते इत्यर्थः । अत्र तु वसूनि धनानि मणीन् वा दधातीति वसुधा रत्नधारिणी । त्वं तद्विधा सती ईदृशं दुर्वृत्तं धृत्वा आत्मनाम असार्थकं करोषि इति वसुधापदेन ध्वन्यते । किञ्च भगवतीतिपदेन समर्थाऽपि ईदृशं जनं कथं नाधो नयसि ? इति च ध्वन्यते । रत्नधाविशा दुर्वृत्तधारणं कलङ्ककरमिति भावः । आर्य्या जातिः ।

(१३१) दुर्जनेनेति ।—दुर्जनेन दुष्टप्रकृतिकेन जनेन, समं सह, वैरं शत्रुतां, "वैरम्" इत्यत्र "सख्यम्" इति पाठान्तरं न युज्यते, "प्रीतिम्" इत्यनेनैव तदर्थावगमात्, उष्णशीतावस्थाभेदेन अङ्गारस्य दाहकत्वकृष्णीकरणत्वरूपदृष्टान्तासङ्गतेश्च इत्यवगन्तव्यम् । प्रीतिञ्चापि प्रणयञ्चापि, मेलनञ्चापि इत्यर्थः, न कारयेत्, केनापि प्रकारेण दुर्जनसङ्गतिं नैव कुर्वीतेत्यर्थः । [ स्वार्थे णिजन्तोऽयम् ] । कथमित्याह,—उष्णः प्रदीप्तः, प्रज्वलन् इत्यर्थः, अङ्गारः करं हस्तं, सम्स्पृष्टुरिति शेषः, दहति भस्मीकरोति, शीतः शीतलः, निर्वाण इति यावत्, अङ्गारः कृष्णायते कृष्णं करोति, मलिनीकरोतीति यावत् । [ तत्करोतीति णिच् । केचित्तु—"कृष्णायते" इति पठन्ति, तन्न—कृष्णशब्दस्य भृशादिषु पाठाभावात् ] ।

(फ) स्थितिरियं दुर्जनानां—दुर्जनानां दुष्टप्रकृतिकानाम्, इयम् ईदृशी, वक्ष्यमाणरूपा इत्यर्थः, स्थितिर्मर्य्यादा, आचरणमिति यावत् ।

(१३२) प्रागिति ।—मशकः स्वनामख्यातकीटविशेषः, खलस्य क्रूरस्य, सर्वं चरितम् आचरणं, करोति विदधाति, अनुकरोति इत्यर्थः । किन्तदित्याह—प्राक् प्रथमं, पादयोः जनानां चरणयोः, पतति वसतीत्यर्थः ; खलपक्षे—कपटेन प्रतार्य्यस्य पदानतो भवति, ततः पृष्ठमांसं खादति, मशकपक्षे—पृष्ठे दशति ; अन्यत्र—परोक्षे महदनिष्टं घटयति, कर्णे कर्णान्तिके, किमपि अनिर्वचनीयं, विचित्रं बहुविधं, कलं

तथा च,—दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम्" ॥ १३३

अथ प्रभाते स क्षेत्रपतिर्लगुडहस्तस्तं प्रदेशम् आगच्छ काकेन अवलोकितः। तमालोक्य काकेन उक्तम्,—"सखे मृग ! त्वमात्मानं (ब) मृतवत् सन्दर्श्य वातेन उदरं पूरयित्वा पादान् (भ) स्तब्धीकृत्य तिष्ठ, अहं तव चक्षुषी चञ्च्वा विलिखामि। यदा अहं शब्दं करोमि, तदा त्वमुत्थाय सत्वरं पलायिष्यसि" मृगस्तथैव काकवचनेन स्थितः ।

ततः क्षेत्रपतिना (म) हर्षोत्फुल्ललोचनेन तथाविधो मृग आलोकितः। "आः ! स्वयं मृतोऽसि ?" इत्युक्त्वा मृगं बन्धना मोचयित्वा पाशान् (य) संवरीतुं सयत्नो बभूव। ततः कियद्

---

मधुरं, शनैर्मन्दं, रौति शब्दायते ; अन्यत्र—प्रतार्थ्यमायत्तीकर्त्तुं मधुरमालपं छिद्रम् एकत्र—दंशनावसरं, रोमकूपं वा, अन्यत्र—आपदादिरन्ध्रं, निरूप्य निर्णी प्राप्येत्यर्थः, अशङ्कः निर्भीकः सन्, सहसा हठात्, अतर्कितं यथा तथेत्यर्थः, प्रविश मशकपक्षे—शूकेन त्वचं निर्भिद्य दशति, अन्यत्र—अन्तरङ्गो भूत्वा प्रतिकूलं इत्यर्थः, दुष्टाभिप्रायं साधयति इति भावः। वसन्ततिलकं वृत्तम् ।

(१३३) दुर्जनस्य अविश्वस्तत्वे चाणक्यनीतिं प्रमाणयति, दुर्जनः इति।—दुर्जनः खलः, प्रियवादी मधुरभाषणशीलः, एतत् दुर्जनस्य प्रियवादित्वं, न च वै विश्वासकारणं प्रत्ययहेतुः। कुतः ? इत्याह,—अस्य जिह्वाग्रे रसनाग्रभागे, मुखे इति यावत्, मधु सुमिष्टं वचः इति यावत्, तिष्ठति, हृदि मनसि, हालाहलं वि सुतीव्रविषविशेषः, तिष्ठति इति पूर्वेणान्वयः।

(ब) मृतवत्—मृतमिव [ "तेन तुल्यं क्रिया चेद्वतिः" (५।१।११५ पा०) इति वतिः ]।

(भ) स्तब्धीकृत्य—स्थिरीकृत्य। विलिखामि—विकर्षामि, पाटयामीत्यर्थः

(म) हर्षोत्फुल्ललोचनेन—हर्षेण प्रीत्या, उत्फुल्ले विकसिते, लोचने यस्य तेन।

(य) संवरीतुं—संहर्त्तुं, सङ्क्षेप्तुमित्यर्थः। [ सम्+वृ+तुमुन्+इट्, "वृतो वा" (७।२।३८ पा०) इति इटो वैकल्पिकदीर्घः। "संवरितुम्" इत्यपि स्यात् ]।

(२) अन्तरिते च क्षेत्रपतौ स मृगः काकस्य शब्दं श्रुत्वा सत्वरमुत्थाय पलायितः। तमुद्दिश्य तेन क्षेत्रपतिना प्रकोपात् क्षिप्तेन लगुड़ेन शृगालो व्यापादितः। तथा चोक्तम्,—

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः।
अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते ॥ १३४ ॥

अतोऽहं ब्रवीमि,—"भक्ष्यभक्षकयोः प्रीतिः" इत्यादि।

[ इति मृग-वायस-शृगालकथा ]।

काकः पुनराह,—

"भक्षितेनापि भवता नाहारो मम पुष्कलः।
त्वयि जीवति जीवामि चित्रग्रीव इवानघ ! ॥१३५॥

अन्यच्च,—तिरश्चामपि विश्वासो दृष्टः पुण्यैककर्मणाम्।
सतां हि साधुशीलत्वात् स्वभावो न निवर्त्तते ॥१३६॥

---

(२) अन्तरिते—व्यवधानं गते अलक्षिते वा।

(१३४) त्रिभिरिति।—अत्युत्कटैः अत्यधिकैः, पापपुण्यैः अधर्मधर्माचरणैः कारणैः कृतं, तादृशपापपुण्यानुष्ठानजनितमित्यर्थः, फलं परिणामम्, इहैव अस्मिन्नेव जन्मनि भूतले वा, त्रिभिः वर्षैः वत्सरैः, वर्षत्रयेण इत्यर्थः, त्रिभिर्मासैः मासत्रयेण, त्रिभिः पक्षैः पञ्चचत्वारिंशद्दिनैः, त्रिभिर्दिनैः दिनत्रयेण वा, अश्नुते प्राप्नोति। [ वर्षैः इत्यादिषु "अपवर्गे तृतीया" ( २।३।६ पा० ) इति तृतीया ]। स्वानुष्ठितपापपरिणामेन सद्यो व्यापन्नः शृगालोऽत्र प्रमाणमिति श्लोकस्याशयः।

(१३५) भक्षितेनेति।—हे अनघ निष्पाप ! भवता भक्षितेनापि खादितेनापि, भवद्भक्षणेनापि इत्यर्थः, मम पुष्कलः प्रचुरः, आहारः न, भवतीति शेषः, किन्तु त्वयि जीवति प्राणान् धारयति सति, चित्रग्रीव इव चित्रग्रीववत् बन्धुसहवाससुखमनुभवन्नित्यर्थः, जीवामि प्राणिमि, अहमिति शेषः।

(१३६) तिरश्चामिति।—पुण्यैककर्मणां पुण्यं धर्मानुष्ठानम्, एकं मुख्यं, कर्म येषां तेषां पुण्यानुष्ठानपराणां, तिरश्चां तिर्य्यग्जातीयानां पश्वादीनामपि, विश्वासः प्रत्ययः, दृष्टः लक्षितः ; हि तथाहि, साधुशीलत्वात् सत्स्वभावत्वात्, सतां साधूनां, स्वभावः प्रकृतिः, न निवर्त्तते न विक्रियां याति। सत्स्वभावास्तिर्य्यञ्चोऽपि विश्वासभाजो भवन्ति, यथा गरुड़ादयः इति भावः।

किञ्च,—साधोः प्रकोपितस्यापि मनो नायाति विक्रियाम्।
न हि तापयितुं शक्यं सागराम्भस्तृणोल्कया" ॥१३७॥

हिरण्यको ब्रूते,—(ल) "चपलस्त्वं, चपलेन सह स्नेहः सर्वथा न कर्त्तव्यः। तथा चोक्तम्,—

मार्जारो महिषो मेषः काकः कापुरुषस्तथा।
विश्वासात् प्रभवन्त्येते विश्वासस्तत्र नोचितः ॥१३८॥

किञ्च अन्यत्, (व) शत्रुपक्षो भवान् अस्माकम्। शत्रुणा सन्धिर्न विधेयः। उक्तञ्चैतत्,—

शत्रुणा न हि सन्दध्यात् सुश्लिष्टेनापि सन्धिना।
सुतप्तमपि पानीयं शमयत्येव पावकम् ॥ १३९ ॥

---

(१३७) साधोरिति।—प्रकोपितस्यापि नितरां क्रोधितस्यापि, [ प्र+कुप+णिच्+क्तः+षष्ठी १व० ]। साधोः उदारचरितस्य, मनः हृदयं, समुद्रवत् गम्भीरमक्षोभ्यञ्चेति भावः, विक्रियां विकृतिं, न आयाति न प्राप्नोति, न विकृतं भवतीत्यर्थः। हि तथाहि, तृणोल्कया तृणजाग्निशिखया, सागराम्भः समुद्रजलं, तापयितुं उष्णत्वमापादयितुं, न शक्यं न साध्यम्। अत्र वैधर्म्येण दृष्टान्तालङ्कारः।

(ल) चपलः,—अव्यवस्थितचित्तः, चञ्चल इति यावत्।

(१३८) मार्जार इति।—मार्जारः विडालः, महिषः, मेषः, काकः वायसः तथा कापुरुषः निन्दनीयपुरुषः, लघुचित्तो जनः इति यावत्, एते अमी पञ्च प्राणिनः, विश्वासात् प्रत्ययात्, एतेषु विश्वासातिशयप्रदर्शनादिति यावत्, प्रभवन्ति कृतविश्वासास्तु एते अनर्थमुत्पादयितुं शक्नुवन्तीत्यर्थः, अतः तत्र तेषु, विश्वासः उचितः न युक्तः, एतेषु न कथमपि विश्वसितव्यमित्यर्थः।

(व) शत्रुपक्षः,—शत्रुजातीयः, स्वभाववैरीति यावत्।

(१३९) शत्रुणेति।—सुश्लिष्टेन सुघटितेन, सुदृढेनेति यावत्, सन्धिना मैत्र्या अपि कारणेन, शत्रुणा सह न हि सन्दध्यात् नैव संमिलेत्, शत्रुणा सह सुदृढं सन्धिं कृत्वापि नैव निर्वृतस्तिष्ठेत् इत्यर्थः। [ सम्+धा+विधिलिङ्-यात् ]। कथमित्याह—पानीयं जलं, सुतप्तमपि अग्निसम्पर्केण उष्णत्वादिवह्निगुणं लभमानमपि, पावकं वह्निम्, उष्णगुणविशिष्टमिति भावः, शमयत्येव उभयोः संयोगकाले स्वभावविरोधित्वात् निर्वापयत्येव। अतः स्वभाववैरिणा त्वया सह मैत्री न युज्यते इति निष्कर्षः।

दुर्जनः परिहर्त्तव्यो विद्ययाऽलङ्कृतोऽपि सन्।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ? ॥१४०॥
यदशक्यं न तच्छक्यं यच्छक्यं शक्यमेव तत्।
नोदके शकटं याति न च नौर्गच्छति स्थले ॥१४१॥
अपरञ्च,—महताऽप्यर्थसारेण यो विश्वसिति शत्रुषु।
भार्य्यासु च विरक्तासु तदन्तं तस्य जीवनम्" ॥१४२॥

लघुपतनको ब्रूते,—"श्रुतं मया सर्वं, तथाऽपि मम एतावान्

---

(१४०) चाणक्यवचनं प्रमाणत्वेनोपन्यस्य दुर्जनसंसर्गस्य सर्वथा परिहर्त्तव्यत्वमाह, दुर्जन इति।—दुर्जनः विद्यया शास्त्रज्ञानेन, अलङ्कृतः भूषितः, सन्नपि भवन्नपि, परिहर्त्तव्यः त्यक्तव्यः, तेन सह न सम्भाषितव्य इत्यर्थः, तथाहि, सर्पः मणिना शिरःस्थेन रत्नेन, भूषितः शिरसि अलङ्कृतः, भवति इति शेषः, सर्पविशेषमस्तके मणिः विद्यते इत्यर्थः, तथापि असौ मया दृष्टान्तत्वेन उल्लिखितः मणिभूषितसर्प इत्यर्थः, किं भयङ्करः भयावहः, न ? सर्वथा भयावह एवेत्यर्थः। मणिभूषितत्वात् बहिःसुदर्शनोऽपि सर्पः यथा स्वां खलतां कदाऽपि न विजहाति, एवं विद्यावत्त्वादिगुणसत्त्वे सत्यपि दुर्जनः नैसर्गिकदौर्जन्यं विहातुं न शक्नोति, अतः तत्सङ्गः सर्वथा परित्यज्यः इति विशदार्थः। दृष्टान्तालङ्कारः।

(१४१) यदिति।—यत् अशक्यं सर्व्वथा साधयितुं न पार्य्यं, तत् न शक्यमेव न केनापि साध्यमेव, यत् शक्यं साध्यं, तत् शक्यमेव सर्वैरपि साधयितुमर्हमेव ; एवकारः उभयत्रापि अन्वयनीय इति मन्तव्यम् ; तथाहि, उदके नद्यां, शकटं स्थलयानविशेषः, न याति, स्थले भूमौ च, नौर्नौका, न गच्छति न चलति, यतः असम्भवं कदापि न घटते, अतः त्वया सह मैत्र्यमशक्यमेवेति भावः। दृष्टान्तालङ्कारः।

(१४२) महताऽपीति।—यः जनः, महताऽपि गुरुणाऽपि, अर्थसारेण न्याय्यप्रयोजनेन हेतुना, गुरुप्रयोजनसाधनार्थमित्यर्थः, प्रभूतबहुमूल्यवस्तुदानेनापीत्यर्थो वा, भार्य्यासम्पादितेन शत्रुसम्पादितेन वा महार्थकप्रयोजनेन कारणेनापीत्यर्थो वा ; शत्रुषु, विरक्तासु प्रतिकूलचारिणीषु, असाध्वीष्विति यावत्, भार्य्यासु पत्नीषु च, विश्वसिति विश्वासं स्थापयति, तस्य जनस्य, जीवनं प्राणाः, तदन्तं स विश्वासः अन्तो यस्य तत् तादृशं, तस्मिन् विश्वासे एव अन्तः नाशो यस्य तादृशमिति वा, तद्गतविश्वासादेव तस्य जीवनशेषो भवेदित्यर्थः, शत्रुषु असाध्वीषु पत्नीषु च विश्वासः अवश्यमेव व्यापज्जनक इति फलितम्।

एव (अ) सङ्कल्पः, यत् त्वया सह सौहृद्यमवश्यं करणीयम्
नो चेत् अनाहारेण आत्मानं तव द्वारि (ब) व्यापादयिष्यामि

तथाहि,—मृद्घटवत् सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति।
सुजनस्तु कनकघटवत् दुर्भेद्यश्चाशु सन्धेयः ॥१४३॥

किञ्च,—द्रवत्वात् सर्वलोहानां निमित्तात् मृगपक्षिणाम्।
भयाल्लोभाच्च मूर्खाणां सङ्गतं दर्शनात् सताम् ॥१४४॥

किञ्च,—नारिकेलसमाकारा दृश्यन्तेऽपि हि सज्जनाः।
अन्ये बदरिकाकारा बहिरेव मनोहराः ॥१४५॥

---

(अ) सङ्कल्पः,—निश्चयः।

(ब) व्यापादयिष्यामि—घातयिष्यामि।

(१४३) मृद्घटवदिति।—दुर्जनः मृदा निर्मितो घटः मृद्घटः तद्वत् सुखेन सुखभेद्यः अनायासेन भेदयितुं शक्यः, दुः दुःखसाध्यं, सन्धानं सन्धिः दुःसन्धानश्च पुनः संयोजनायोग्यश्च, भवति, तु किन्तु, सुजनः कनकघटवत् निर्मितकुम्भवत्, दुर्भेद्यः दुःखेन भेदयितुं शक्यः, आशु शीघ्रं, सन्धेयः सन्धातुं संधातुं शक्यश्च, भवतीति पूर्वेणान्वयः। मृन्मयं कुम्भादिकं यथा सामान्याघातेनैव भेत्तुं शक्यते, अपि तु व्यापारशतैरपि भूयो योजयितुं न शक्यते, तथा दुर्जनः स्वल्पेनैव हेतुना विश्लिष्टीभवितुं शक्यते, न पुनरुपायशतैर्योजयितुम्; किन्तु कलसः यथा सहसा न चूर्णयितुं शक्यते अपि तु उत्तापेन द्रव्यान्तराणां सुखेन योजयितुं शक्यते, तद्वत् महानपि, अतः सर्वथा युष्माभिः महद्भिः सौहृद्यं कर्त्तव्यमिति भावः।

(१४४) द्रवत्वादिति।—सर्वलोहानां सर्वधातूनां, रजतकाञ्चना-मित्यर्थः, द्रवत्वात् द्रवीभावात्, मृगपक्षिणां पशुपक्षिणां, निमित्तात् परस्परं सहवासकारणात्, प्राक्तनसंस्कारविशेषात् वा, मूर्खाणां भयात् कस्माच्चिदाघातात्, तथा लोभात् किञ्चित्प्राप्तिप्रलोभनेन च, सतां साधूनां, दर्शनात् परस्परावलोकनमात्रादेव, सङ्गतं मेलनं, भवतीति शेषः। साधोर्भवतः दर्शनादेव त्वया मैत्रीं विधातुं मम चेतः अतीव उत्कण्ठते, अतो मां मित्रत्वेन गृहाणेति निष्कर्षः।

(१४५) नारिकेलेति।—सज्जनाः हि साधवो हि, नारिकेलसमाकाराः

अत एव सतां सङ्गतिरिष्यते। यतः,—

स्नेहच्छेदेऽपि साधूनां गुणा नायान्ति विक्रियाम्।
भङ्गेऽपि हि मृणालानामनुबध्नन्ति तन्तवः ॥१४६॥

अन्यच्च,—शुचित्वं, त्यागिता, शौर्य्यं, सामान्यं सुखदुःखयोः।
दाक्षिण्यञ्चानुरक्तिश्च सत्यता च सुहृद्गुणाः ॥१४७॥

एतैर्गुणैः (स) उपेतो भवदन्यो मया कः सुहृत् प्राप्तव्यः ?"
इत्यादि तद्वचनमाकर्ण्य हिरण्यको वहिर्निःसृत्य आह,—

नारिकेलफलसमानाः, अन्तर्मधुरकोमला वहिःकठिना इत्यर्थः, दृश्यन्ते, जनैरिति शेषः; अन्येऽपि असज्जनास्तु, वदरिकायाः कोलफलस्य, आकार इव आकारः येषां ते तथोक्ताः, अन्तःकठिना असाराश्च इति भावः, वहिरेव वाह्ये आकारे एव, मनोहराः शोभनाः, दृश्यन्ते इति पूर्वेणान्वयः। नारिकेलफलानि यथा अन्तर्द्रव-मधुराणि वहिःकठिनानि भवन्ति, तद्वत् सज्जना वहिःकठिनाः किन्तु अन्तःकोमला मधुरस्वभावाश्च भवन्ति; असज्जनास्तु कोलिफलवत् वहिःसुदृश्या अन्तःसारशून्या कठिनप्रकृतयश्च भवन्तीति निष्कर्षः।

(१४६) स्नेहेति।—स्नेहस्य प्रणयस्य, छेदेऽपि कदाचित् भङ्गेऽपि, साधूनां सज्जनानां, गुणाः दाक्षिण्यादयः, विक्रियां विकृतिं, न आयान्ति न प्राप्नुवन्ति, कारणवशात् प्रणयभङ्गेऽपि साधवः नासद्व्यवहारं कुर्वन्तीत्यर्थः; हि तथाहि, मृणालानां पद्मनालानां, तन्तवः सूत्राणि, भङ्गे मृणाले द्विधा खण्डिते अपि, ("भङ्गेनापि" इति पाठेऽपि स एवार्थः) अनुबध्नन्ति परस्परसंश्लिष्टा एव तिष्ठन्ति इत्यर्थः। भग्नमृणालान्तःस्थसूत्राणि यथा तेन सर्वथा न विच्छिन्नीभवन्ति, एवं प्रणयिनं प्रति विरक्ता अपि साधवः तस्मिन् सर्वथा न विमुखीभवन्तीति निष्कर्षः।

(१४७) शुचित्वमिति।—शुचित्वं पवित्रता, अकृत्रिमत्वमित्यर्थः, त्यागिता दानशीलता, शौर्य्यं साहसिकता, सुखदुःखयोः सम्पदि आपदि च, सामान्यं तुल्य-भावः, समसुखदुःखभागितेत्यर्थः, मित्रस्य सुखे सुखानुभवः दुःखे च दुःखानुभव इति यावत्, दाक्षिण्यम् अनुकूलता च, आनुरक्तिः आसङ्गश्च, सत्यता सत्यवादित्वञ्च, एते सप्तविधाः सुहृदः अकृत्रिममित्रस्य, गुणाः धर्म्माः; ईदृग्गुणवन्त एव मित्रार्हाः भवन्तीत्यर्थः। कामन्दकनीतौ एष एव श्लोकः किञ्चिदन्यथाकारतया दृश्यते।

(स) उपेतः,—अन्वितः। भवदन्यः,—भवतः अन्यः, [ पञ्चमीतत्पुरुषः ]।

(इ) "आप्यायितोऽहं भवतामनेन (क) वचनामृतेन। उक्तं चोक्तम्,—

घर्मार्त्तं न तथा सुशीतलजलैः स्नानं न मुक्तावली
न श्रीखण्डविलेपनं सुखयति प्रत्यङ्गमप्यर्पितम्।
प्रीत्यै सज्जनभाषितं प्रभवति प्रायो यथा चेतसः
सद्युक्त्या च परिष्कृतं सुकृतिनामाकृष्टिमन्त्रोपमम्॥१४८॥

अन्यच्च,—रहस्यभेदो याच्ञा च नैष्ठुर्यं चलचित्तता।
क्रोधो निःसत्यता द्यूतमेतन्मित्रस्य दूषणम्॥१४९॥

(ख) अनेन वचनक्रमेण तत् (ग) एकदूषणमपि त्वयि न लक्ष्यते।

---

(इ) आप्यायितः,—प्रीणितः इत्यर्थः, भवद्भिरिति शेषः।

(क) वचनामृतेन—अमृतवत् मधुरेण शीतलस्पर्शेन च वचनेन।

(१४८) घर्मार्त्तमिति।—सद्युक्त्या उत्तमदृष्टान्तेन, परिष्कृतं स्फुटार्थं पूतमिति वा, च तथा, सुकृतिनां पुण्यशीलानाम्, आकृष्टिराकर्षणं, तदर्थो मन्त्रः उपमा यस्य तत् वशीकरणमन्त्रसदृशं, सज्जनभाषितं महाजनोक्तिः, यथा शश्वत् चेतसः चित्तस्य, प्रीत्यै सन्तोषाय, प्रायः भूम्ना, प्रभवति समर्थो भवति, सन्तोषं जनयतीत्यर्थः, घर्मार्त्तं ग्रीष्मोपतापितं, जनं, सुशीतलजलैः नितरां शीतलवारिभिः, स्नानम् अभिषेकः, न, मुक्तावली मुक्तादाम, न, अङ्गे अङ्गे प्रत्यङ्गं [ वीप्सार्थेऽव्ययीभावः ] सर्वाङ्गे, अर्पितं प्रदत्तं, श्रीखण्डविलेपनं चन्दनानुलेपनमपि, [ कर्त्तृ ] तथा तादृशं सुखयति न शीतलयति। सद्युक्तिपूर्णं साधुवाक्यं यथा चेतसः सुखदं भवति, सुशीतलजलेन स्नानं, मणिमुक्तादिधारणं चन्दनादिशीतलद्रव्यानुलेपनञ्च घर्म-सन्तप्तं तथा सुखयितुं नालमिति विशदोऽर्थः। व्यतिरेकः। शार्दूलविक्रीडितं वृत्तम्।

(१४९) रहस्यभेद इति।—रहस्यस्य गुप्तमन्त्रणस्य, भेदः अन्यसन्निधौ प्रकाशनं, याच्ञा धनादीनां प्रार्थना, नैष्ठुर्यं निर्दयता, चलचित्तता अव्यवस्थितचित्तता, क्रोधः कोपः, निःसत्यता मिथ्यावादित्वं, द्यूतम् अक्षक्रीडा च, एतत् पूर्वोक्तं सर्वं मित्रस्य मित्रभावस्य इत्यर्थः, मित्रतास्थापनस्य इति यावत्, दूषणं दोषकरं, प्रीति-बन्धकमित्यर्थः; एतद्दोषदूषितेन जनेन सह मित्रता न कर्त्तव्येति भावः।

(ख) अनेन वचनक्रमेण—उक्तश्लोके उक्तेन।

(ग) एकदूषणमपि—रहस्यभेदादीनां मध्ये एकोऽपि दोषः।

यतः,—पटुत्वं सत्यवादित्वं कथायोगेन बुध्यते।
अस्तब्धत्वमचापल्यं प्रत्यक्षेणावगम्यते ॥१५०॥

अपरञ्च,—अन्यथैव हि सौहार्दं भवेत् स्वच्छान्तरात्मनः।
प्रवर्त्ततेऽन्यथा वाणी शाठ्योपहतचेतसः ॥ १५१ ॥

मनस्यन्यद् वचस्यन्यत् कर्म्मण्यन्यद् दुरात्मनाम्।
मनस्येकं वचस्येकं कर्म्मण्येकं महात्मनाम् ॥ १५२ ॥

तद्भवतु भवतः (घ) अभिमतमेव" इत्युक्त्वा हिरण्यको

---

(१५०) पटुत्वमिति।—पटुत्वं दक्षता, सत्यवादित्वं सत्यपरायणता, तवेति शेषः, कथायोगेन वाक्यप्रसङ्गात्, बुध्यते ज्ञायते, भवान् वाक्पटुः सत्यवादी च एतत् तव वाक्यश्रवणेनैव अनुमीयते इत्यर्थः, अस्तब्धत्वम् अजाड्यम्, उत्साहित्व-मित्यर्थः, अहङ्कारराहित्यं वा, अचापल्यं धीरत्वं, प्रत्यक्षेण साक्षादेव, अवगम्यते ज्ञायते, बुध्यते इत्यर्थः, मयेति शेषः। श्लोकोऽयं कामन्दकनीतेः ४र्थसर्गे गुणपरीक्षा-क्रमोक्तं "गुणद्वयं परीक्षेत प्रागल्भ्यं प्रतिभां तथा। कथायोगेन बुध्येत वाग्मित्वं सत्य-वादिताम् ॥ अस्तब्धत्वमचापल्यं वैराग्यञ्चापि कर्त्तृताम्। प्रत्यक्षतो विजानीयात् भद्रतां क्षुद्रतामपि ॥" इति श्लोकद्वयमवलम्ब्य रचितः ग्रन्थकर्त्रा इति।

(१५१) अन्यथैवेति।—स्वच्छः निर्मलः, कापट्यशून्य इति यावत्, अन्तरात्मा मनो यस्य तस्य सरलान्तःकरणस्य, सौहार्द्दं मित्रता, अन्यथैव अन्यप्रकारमेव, अनि-र्वचनीयस्वरूपमेव इत्यर्थः, भवेत्, हि इति पूरणार्थकमव्ययम्। शाठ्येन शठतया, उपहतं दूषितं, चेतो यस्य तस्य खलस्येत्यर्थः, वाणी वाक्यम्, अन्यथा अन्यप्रकारा, असत्यत्वात् वक्तुमनर्हा इति भावः; प्रवर्त्तते निःसरति, शठस्य तु वचसि एकं मनसि तद्विपरीतमित्यर्थः।

(१५२) मनसीति।—दुरात्मनां खलानां, मनसि हृदये, अन्यत् अन्यप्रकारं, वचसि वाक्ये, अन्यत् तदन्यथा, कर्म्मणि कार्य्ये च, अन्यत् वाङ्मनसयोर्विपरीतम् इति भावः; महात्मनान्तु मनसि एकम् एकविधं, न द्वैधभाव इत्यर्थः, वचसि वाक्ये, एकं, कर्म्मणि कार्य्ये च, एकं, दुरात्मानः मनसि यच्चिन्तयन्ति, वाक्ये तस्य वैपरीत्यं प्रकटयन्ति, कार्य्ये पुनस्तस्याप्यन्यथा आचरन्ति, महात्मानस्तु यथा चिन्तयन्ति, तथा वदन्ति आचरन्ति च, वाङ्मनःकर्मसु कदाऽपि न तेषां वैपरीत्यं लक्ष्यते इत्यर्थः।

(घ) अभिमतं—मया सह मैत्रीकरणरूपम् अभिप्रेतम्।

(ङ) मैत्रं विधाय भोजनविशेषैर्वायसं सन्तोष्य विवरं प्रवि
वायसोऽपि स्वस्थानं गतः। ततः प्रभृति तयोः (च) ...
ऽन्याहारप्रदानेन कुशलप्रश्नैः (छ) विश्रम्भालापैश्च कियत्व
ऽतिवर्त्तते।*

एकदा लघुपतनको हिरण्यकमाह,—"सखे! वा
(ज) कष्टलभ्याहारमिदं स्थानं, तदेतत् परित्यज्य स्थाना
गन्तुमिच्छामि"। हिरण्यको ब्रूते,—

"स्थानभ्रष्टा न शोभन्ते दन्ताः केशाः नखा नराः।
इति विज्ञाय मतिमान् स्वस्थानं न परित्यजेत्" ॥१

काको ब्रूते,—"मित्र! (झ) कापुरुषस्य वचनमेतत्।

---

(ङ) मैत्रमिति।—मित्रस्य भावः मैत्रं—सख्यम्। "विपूर्वो धा क
अभिपूर्वस्तु भाषणे" इत्युक्तेः विधाय—कृत्वेत्यर्थः, सप्रेमसम्भाषणादिभिरिति शे
(च) अन्योऽन्याहारप्रदानेन—अन्योऽन्यस्मै आहारप्रदानं तेन, परस्प
दानकर्मणा।

(छ) विश्रम्भालापैः,—विश्रम्भेण आलापास्तैः विश्रम्भपूर्णा आलापा
तैः विश्वासपूर्णैः प्रणयगर्भैर्वा आलापैः।

* लघुपतनकः प्रातरुत्थायैव भीषणाकृतिं व्याधं दृष्ट्वा अमङ्गलपत
व्याकुलचित्तोऽभूत्; इदानीन्तु हिरण्यकं मित्रं लब्ध्वा स्वस्थः सञ्जातः। त
"अनिष्टादपि इष्टलाभः भवति" इति न्यायः सम्यक् प्रतिपन्नः।

(ज) कष्टलभ्याहारं—कष्टेन कृच्छ्रेण, लभ्यः प्राप्तुं शक्यः, आहारो 
तत्, दुष्प्राप्याहारम्।

(१५२) शुक्रनीत्युक्तवचनमवलम्ब्य वायसस्य स्थानत्यागसङ्कल्पे स्वमत
स्थानभ्रष्टा इति।—दन्ताः दशनानि, केशाः कचाः, नखाः कररुहाः, नरा म
स्थानभ्रष्टाः स्थानविच्युताः, परित्यक्तस्वस्वोचितनिवेशा इत्यर्थः, सन्तः, न 
न संराजन्ते, स्वस्थानच्युताः न स्वकार्य्यसाधनेऽलं भवन्ति इत्यर्थः, मतिमान् बुद्धि
जनः, इति एतत्, विज्ञाय विविच्य, स्वस्थानं स्वकीयं वासस्थानं, न परित्यजेत् 
अन्यत्र न गच्छेत्।

(झ) कापुरुषस्य—पौरुषहीनस्य, अधमस्येत्यर्थः।

यतः,—स्थानमुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषा गजाः।
तत्रैव निधनं यान्ति काकाः कापुरुषा मृगाः ॥ १५४॥

अन्यच्च,—को वीरस्य मनस्विनः स्वविषयः को वा विदेशः स्मृतः ?
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम्।
यद्दंष्ट्रानखलाङ्गुलप्रहरणः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैः तृष्णां छिनत्त्यात्मनः" ॥१५५॥

हिरण्यको ब्रूते,—"मित्र ! क्व गन्तव्यम् ? तथा चोक्तम्,—
चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान्।
नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत्" ॥१५६॥

(१५४) स्थानमिति।—सिंहाः मृगेन्द्राः, सत्पुरुषाः सुजनाः, महान्तः इत्यर्थः, तथा गजाः करिणः, स्थानम् उत्सृज्य त्यक्त्वा, गच्छन्ति अन्यत्र यान्ति, स्थानान्तरं गत्वैव ते जीविकामर्जयन्ति इत्यर्थः, किन्तु काकाः वायसाः, कापुरुषाः पौरुषहीना जनाः, मृगाः शशकादयश्च, तत्रैव स्वस्ववासभूमावेव, निधनं विनाशं, यान्ति गच्छन्ति, जीविकोपायाभावेऽपि न तु स्थानान्तरं गच्छन्ति तत्रैव म्रियन्ते इति निष्कर्षः।

(१५५) क इति।—मनस्विनः प्रशस्तचेतसः, वीरस्य शूरस्य, स्वविषयः स्वदेशः, कः ? विदेशो वा कः ? स्मृतः कथितः, स्वदेशविदेशभेदभावोऽस्य नास्त्येवेत्यर्थः, स हि वीरः यं देशं श्रयते आलम्बते, तमेव देशं, बाहुप्रतापार्जितं भुजबलेन स्वाधिकृतं, कुरुते; दंष्ट्राः दन्ताः, नखाः लाङ्गुलं वालधिः, [ अत्र दीर्घोकारवतः लाङ्गूलशब्दस्य "लाङ्गुल" इति ह्रस्वत्वेन प्रयोगः शिष्टप्रयोगानुरोधात् छन्दोऽनुरोधाद्वा समर्थनीयः ] तान्येव प्रहरणानि प्रहारसाधनानि अस्त्रभूतानि यस्य सः; सिंहः यदेव वनं गाहते प्रविशति, तस्मिन्नेव वने, हताः व्यापादिताः, ये द्विपेन्द्रा हस्तिनः, तेषां रुधिरैः शोणितैः, आत्मनः तृष्णां पिपासां, छिनत्ति निवारयति; विक्रान्तः स्वदेशे विदेशे च सममेव शोभते इति भावः। शार्दूलविक्रीडितं वृत्तम्।

(१५६) स्थानान्तरगमनविषये वृद्धचाणक्यमतमाह, चलतीति।—बुद्धिमान् जनः, एकेन पादेन चलति गच्छति, तथा एकेन अन्येनैकेनेत्यर्थः, पादेन तिष्ठति गमनात् विरतो भवति, एकदा पदद्वयमुत्थाप्य न चलतीत्यर्थः, न सर्वथा स्वस्थानं विहाय गच्छतीति भावः; परं स्थानम् अपरं देशम्, असमीक्ष्य सविशेषमदृष्ट्वा, तस्योत्कर्षापकर्षम् अनिश्चित्य इत्यर्थः, पूर्वं प्रागधिष्ठितम्, आयतनं स्थानं, न

वायसो ब्रूते,—"मित्र ! अस्ति (ञ) सुनिरूपितं स्थानम्"। हिरण्यकोऽवदत्—(ट) "किं तत् ?" वायसः कथयति,—"अस्ति (ठ) दण्डकारण्ये कर्पूरगौराभिधानं सरः, तत्र (ड) चिरकालो- पार्जितः प्रियसुहृन्मे (ढ) मन्थराभिधानः कूर्मः (ण) सहज- धार्मिकः प्रतिवसति। पश्य मित्र !—

परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम्।
धर्मे स्वीयमनुष्ठानं कस्यचित्तु महात्मनः ॥१५७॥

स च भोजनविशेषैर्मां (त) संवर्द्धयिष्यति"। हिरण्यको- ऽप्याह,—"तत् किमत्रावस्थाय मया कर्त्तव्यम् ?

---

त्यजेत् न परिहरेत्। गन्तव्यं स्थानं सर्वथा सुखकरं भविष्यति न वा इति सद- अनालोच्य न पूर्वस्थानं प्राज्ञेन परित्यक्तव्यमिति फलितम्।

(ञ) सुनिरूपितं—विशेषेण निर्णीतम्।

(ट) किं तत् ?—तत् स्थानं, किं कीदृशं किमाख्यं वा।

(ठ) दण्डकारण्ये—जनस्थानापराख्ये दाक्षिणात्यस्थे वने। पुरा दण्डो ऐक्ष्वाको राजा दैत्यगुरोः शुक्राचार्य्यस्य कन्यां बलात्कारेण अधर्षयत्, ततः शुक्र- वशिष्ठशापेन सभृत्यबलवाहनः स विनष्टोऽभूत् राज्यञ्च तस्य अरण्यत्वेन पर्य्यव- इत्यतस्तत् दण्डकारण्यमित्यभिधीयते इति रामायणी वार्त्ता।

(ड) चिरकालोपार्जितः,—बहुकाललब्धः, चिरपरिचित इत्यर्थः।

(ढ) मन्थराभिधानः,—मन्थरनामा।

(ण) सहजधार्मिकः,—प्रकृत्या धर्मपरायणः।

(१५७) वृद्धचाणक्यवचनं प्रमाणीकृत्य अकपटधार्मिकस्य विरलत्वमा- परेति।—परोपदेशे परस्मै परस्य वा उपदेशदाने, सर्वेषां निखिलानामेव, सा- नराणां, पाण्डित्यं विदग्धता, सुकरं सुलभं, भवतीति शेषः, तु किन्तु, धर्मविषये, स्वीयं स्वकीयम्, अनुष्ठानम् आचरणम्, अकपटतया धर्माचरणमित्- कस्यचित् बहुषु एकस्यैव, महात्मनः, दृश्यते इति शेषः। धर्मोपदेष्टारः बहवः सन्ति परन्तु धर्मानुष्ठानपरायणा विरला एव, कूर्मोऽयमानुष्ठानिको धार्मिक इति तात्पर्य्यम्।

(त) संवर्द्धयिष्यति—आप्याययिष्यते।

यतः,—यस्मिन् देशे न सम्मानो न वृत्तिर्न च बान्धवः।
न च विद्याऽऽगमः कश्चित् तं देशं परिवर्जयेत् ॥ १५८ ॥

अपरञ्च,—धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः।
पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत् ॥ १५९ ॥

अपरञ्च,—लोकयात्रा भयं लज्जा दाक्षिण्यं त्यागशीलता।
पञ्च यत्र न विद्यन्ते न कुर्य्यात् तत्र संस्थितिम् ॥१६०॥

अन्यच्च,—तत्र मित्र ! न वस्तव्यं यत्र नास्ति चतुष्टयम्।
ऋणदाता च वैद्यश्च श्रोत्रियः सजला नदी ॥ १६१ ॥

अतो मामपि तत्र नय"। वायसोऽवदत्—"एवमस्तु"।

---

(१५८) हिरण्यकः स्वस्यापि स्थानपरित्यागं समर्थयितुं वृद्धचाणक्यमतमुपन्यस्य श्लोकचतुष्टयेन अवास्तव्यदेशमाह, यस्मिन्निति।—यस्मिन् देशे सम्मानः समादरः, न, विद्यते इति शेषः, वृत्तिः जीविका, जीवनोपायः, इत्यर्थः, ("आजीवो जीविका वार्त्ता वृत्तिर्वर्त्तनजीवने" इत्यमरः) न, अस्ति इति शेषः, बान्धवः आत्मीयश्च, न नास्ति, कश्चित् कोऽपि, विद्याऽऽगमश्च विद्याऽर्जनोपायश्च, न, विद्यते इति शेषः, तं देशं परिवर्जयेत् परित्यजेत्, अतो बान्धवशून्येऽस्मिन् मयाऽपि न स्थातव्यमित्याशयः।

(१५९) धनिक इति।—धनिकः धनवान्, श्रोत्रियः [ छन्दस्+घः ]—"एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य च। षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम धर्म्मवित् ॥" इत्युक्तलक्षणः वेदज्ञः, राजा भूपतिः, नदी, पञ्चमः वैद्यः चिकित्सकश्च; एते पञ्च यत्र देशे, न विद्यन्ते तत्र देशे, वासं संस्थितिं, न कारयेत् न कुर्य्यात्। [ स्वार्थे णिच् ] कस्याञ्चित् आपदि समुपस्थितायां तत्प्रतीकारासामर्थ्यादिति भावः।

(१६०) लोकेति।—लोकयात्रा जीविकानिर्वाहोपायः, भयं शासनभीतिः, लज्जा त्रपा, अकार्य्यं कृत्वाऽपीति भावः, दाक्षिण्यम् उदारता, अनुकूलकारिता इत्यर्थः, त्यागशीलता दातृत्वञ्च, एते पञ्च यत्र देशे, न विद्यन्ते तत्र देशे, संस्थितिम् अवस्थानं, न कुर्य्यात्।

(१६१) तत्रेति।—हे मित्र ! यत्र चतुष्टयं [ चत्वारः अवयवा इति तयप् ] एते चत्वारः, नास्ति न विद्यते, तत्र न वस्तव्यं न अवस्थातव्यम्। किं तत् चतुष्टयम् ? तदाह,—ऋणदाता उत्तमर्णश्च, वैद्यः चिकित्सकश्च, श्रोत्रियः वेदज्ञः, सजला नदी च इति।

अथ वायसस्तेन मित्रेण सह (थ) विचित्रालापैः सुखेन त
सरसः समीपं ययौ। ततो मन्थरो दूरादेव लघुपतनक
अवलोक्य उत्थाय यथोचितम् (द) आतिथ्यं विधाय मूषि
स्याप्यतिथिसत्कारं चकार। यतः,—

गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः।
पतिरेको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरुः॥ १६२।

अपरञ्च,—उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः।
पूजनीयो यथायोग्यं सर्वदेवमयोऽतिथिः॥ १६३॥

वायसोऽवदत्,—"सखे मन्थर! (ध) सविशेषपूजाम
(न) विधेहि, यतोऽयं पुण्यकर्मणां (प) धुरीणः (फ) कारु

(थ) विचित्रालापैः,—विचित्राः बहुविधाः, आलापाः भाषणानि तैः।

(द) आतिथ्यम्—अतिथिसत्कारम्।

(१६२) अभ्यागतत्वात् क्षुद्रमूषिकस्यापि अतिथिसपर्य्यार्हत्वे वृद्धचाणक्य
मुपन्यस्यति, गुरुरिति।—अग्निः वह्निः, द्विजातीनां ब्राह्मणक्षत्रियवैश्यानां सर्वेषां,
पूजनीयः, ब्राह्मणः वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्रात्मकानां चतुर्णां, गुरुः पूज्यो
स्त्रीणां नारीणां, पतिर्भर्त्ता, एकः मुख्यः अद्वितीयः वा, गुरुः पूज्यः, सेवनीयः
सर्वत्र सर्वस्मिन् स्थाने, आश्रमचतुष्टये एवेत्यर्थः, ("सर्वस्य" इति पाठान्तरम्);
गतः अतिथिः, गुरुः सर्वेषामेव गुरुवत् सेव्यः, सत्कारार्ह इति यावत्, भवतीति

(१६३) उत्तमस्येति।—उत्तमस्य सर्वश्रेष्ठस्यापि, वर्णस्य ब्राह्मणादीनां चतु
मेकतमस्येत्यर्थः, गृहम् आगतः अतिथिभावेन गृहे उपस्थितः, नीचः हीन
चण्डालोऽपि, का कथा उत्तमानामित्यपेरर्थः, यथायोग्यं यथोचितं, पूज
सत्कर्त्तव्यः, यतः अतिथिः सर्वदेवमयः सर्वदेवस्वरूपः, सर्वेषां देवानां पूजनेन
फलं लभ्यते अतिथिसत्कारेणापि तदेव लभ्यते इति भावः।

(ध) सविशेषपूजां—विशेषेण सह वर्त्तमाना सविशेषा तथाविधा
अर्चना तां सम्यक् समादरमित्यर्थः, अनन्यसाधारणसत्कारम् इति यावत्।

(न) विधेहि—कुरु [वि+धा+लोट्-हि]।

(प) धुरीणः,—अग्रगण्यः। [धुरं वहतीति खः]।

(फ) कारुण्यरत्नाकरः,—करुणैव कारुण्यं [स्वार्थे ष्यञ्] तस्य रत्ना
समुद्रः दयासागरः, प्रभूतस्य कारुण्यस्याधार इत्यर्थः।

रत्नाकरो हिरण्यकनामा मूषिकराजः। एतस्य (ब) गुणस्तुतिं (भ) जिह्वासहस्रद्वयेनापि यदि (म) सर्पराजः कदाचित् कर्त्तुं समर्थः स्यात्" इत्युक्त्वा चित्रग्रीवोपाख्यानं वर्णितवान्। ततो मन्थरः सादरं हिरण्यकं सम्पूज्याऽऽह,—"भद्र ! आत्मनो (य) निर्जनवनागमनकारणम् (र) आख्यातुमर्हसि।" हिरण्यकोऽवदत्—"कथयामि श्रूयताम्।—

चूड़ाकर्ण-वीणाकर्णनामक-परिव्राजककथा।—

"अस्ति चम्पकाभिधानायां नगर्य्यां (ल) परिव्राजकावसथः। तत्र चूड़ाकर्णो नाम परिव्राजकः प्रतिवसति। स च (व) भोजनावशिष्टभिक्षान्नसहितं (श) भिक्षापात्रं (ष) नागदन्तकेऽवस्थाप्य स्वपिति, अहञ्च तदन्नम् (स) उत्प्लुत्य उत्प्लुत्य प्रत्यहं भक्षयामि।

(ब) गुणस्तुतिं—गुणव्याख्यानम्।

(भ) जिह्वासहस्रद्वयेनापि—द्विसहस्ररसनाभिरपि ; सर्पराजो यदि कदाचित् द्विसहस्ररसना लभेत, तदा अस्य गुणान् वर्णयितुं शक्नोति इति सम्भावयामि, न तु सहस्ररसनाभिरिति भावः। "जिह्वासहस्रेण" इति पाठान्तरम्।

(म) सर्पराजः,—अनन्तः, वासुकिर्वा।

(य) निर्जनवनागमनकारणं—निर्नास्ति जनो यस्मिन् तच्च वनञ्चेति तस्मिन् आगमनं तस्य कारणं हेतुम्।

(र) आख्यातुम्—अभिधातुं, वर्णयितुमिति यावत्।

(ल) परिव्राजकावसथः,—परिव्राजकानां पर्य्यटकानां, भिक्षाश्रमिणां सन्न्यासिनामित्यर्थः, आवसथः आवासः।

(व) भोजनावशिष्टभिक्षान्नसहितं—भोजनेभ्यः अवशिष्टम् उद्वृत्तं, भिक्षया लब्धं यत् अन्नं तण्डुलादिभक्ष्यद्रव्यं, तेन सहितम्।

(श) भिक्षापात्रं—भिक्षार्थं पात्रं भिक्षाकरङ्कमित्यर्थः।

(ष) नागदन्तके—गृहभित्तौ प्रोथिते गजदन्ताकारदारुमयदण्डविशेषे। ("नागदन्ती द्विपरदे गृहान्निर्गतदारुणि" इति मेदिनी)।

(स) उत्प्लुत्य—उत्पत्य, उल्लम्फनेन ऊर्द्ध्वमुत्थाय इत्यर्थः। [अत्र वीप्सायाँ द्वित्वम्]।

अनन्तरं तस्य प्रियसुहृद् वीणाकर्णो नाम परिव्राजक समायातः। तेन सह (ङ) नानाकथाप्रसङ्गावस्थितो मम त्रासार्थं जर्जरवंशखण्डेन चूड़ाकर्णो भूमिमताड़यत्। तं तथाविधं दृष्ट्वा वीणाकर्ण उवाच,—"सखे! (क) किमिति मम कथाविरक्तः (ख) अन्यासक्तो भवान्? यतः,—

मुखं प्रसन्नं विमला च दृष्टिः
कथाऽनुरागो मधुरा च वाणी।
स्नेहोऽधिकः सम्भ्रमदर्शनञ्च
सदाऽनुरक्तस्य जनस्य लक्ष्म॥१६४॥

अदृष्टिदानं कृतपूर्वनाशनम्
अमाननं दुश्चरितानुकीर्त्तनम्।

---

(ङ) नानाकथाप्रसङ्गावस्थितः,—नाना बहुविधाः, कथाः आलापाः, तासां प्रसङ्गः अवतारणं, तस्मिन् अवस्थितः आसक्तः, अपीति शेषः।

(क) किमिति—प्रश्नार्थकमव्ययं, कथमित्यर्थः।

(ख) अन्यासक्तः,—अन्यस्मिन् विषये आसक्तः अनुरक्तः, निविष्टचित्तः इति यावत्।

(१६४) मुखमिति।—मुखं वदनं, मुखकान्तिः इत्यर्थः, प्रसन्नं प्रफुल्लं, हर्षोज्ज्वलमित्यर्थः, दृष्टिः दर्शनं, विमला प्रसन्ना, प्रीतिव्यञ्जिका इत्यर्थः, कथायां वाक्यालापे अनुरागः आग्रहः, औत्सुक्यप्रदर्शनमित्यर्थः, वाणी वाक् च, मधुरा मनोहरा, अधिकः महान्, स्नेहः प्रणयः, सम्भ्रमदर्शनं पुनः पुनः सादरावलोकनञ्च ; एतत् सर्वं सदाऽनुरक्तस्य अतीवप्रणयासक्तस्य, जनस्य, लक्ष्म चिह्नं, भवतीति शेषः। ("लक्ष्म" इत्यत्र क्वचित् "चिह्नम्" इति क्वचिच्च "लक्ष्यम्" इति पाठान्तरं दृश्यते। तत्र लक्ष्यं लक्षयितव्यं, मुखस्य प्रसन्नतादिकमिति शेषः)। उपजातिः वृत्तम्।

(१६५) अदृष्टिदानमिति।—अदृष्टिदानं दृष्टिपाताभावः, ("अतुष्टिदानम्" इति पाठे—असन्तोषप्रदानं, विरक्तिः इत्यर्थः, अतुष्ट्या असन्तोषेण सह, दानं वितरणमिति वा,) पूर्वं कृतं कृतपूर्वं तस्य नाशनं विलोपः, पूर्वकृतस्य उपकारस्य अस्वीकरणम्, अमाननम् अवमाननं, दुश्चरितस्य असदाचरणस्य, अनुकीर्त्तनं वर्णनं

कथाप्रसङ्गेन च नामविस्मृति-
र्विरक्तभावस्य जनस्य लक्षणम्" ॥ १६५ ॥

चूडाकर्णेन उक्तं,—"मित्र ! नाहं विरक्तः, किन्तु पश्य, अयं मूषिको ममापकारी सदा पात्रस्थं भिक्षान्नमुत्प्लुत्य भक्षयति।"

वीणाकर्णो नागदन्तमवलोक्याऽऽह,—"कथम् अयं मूषिकः स्वल्पबलोऽप्येतावद्दूरमुत्पतति ? तदत्र केनापि कारणेन भवितव्यम्। तथा चोक्तम्,—*

अकस्मात् युवती वृद्धं केशेष्वाकृष्य चुम्बति।
पतिं निर्दयमालिङ्ग्य हेतुरत्र भविष्यति" ॥१६६॥

चूडाकर्णः पृच्छति,—"कथमेतत्?"। वीणाकर्णः कथयति।—

वृद्धवणिग्दम्पतीकथा।—

"अस्ति (ग) गौड़ीये कौशाम्बी नाम नगरी। तस्यां चन्दनदासो नाम वणिक् महाधनो निवसति। तेन च (घ) पश्चिमे वयसि वर्त्तमानेन (ङ) कामाधिष्ठितचेतसा (च) धनदर्पात्

---

अन्यसन्निधौ केवलं दोषख्यापनमिति यावत्, कथाप्रसङ्गेन प्रसङ्गागतकथायां, विषयान्तरालोचनायां तद्विषयकोक्तौ इत्यर्थः, नामविस्मृतिः नामविस्मरणञ्च, एतत् सर्वं विरक्तभावस्य अननुरक्तस्य, जनस्य लक्षणं चिह्नं, जानीयादिति शेषः। वंशस्थविलं वृत्तम्।

* वक्ष्यमाणात् "अकस्मात्" इत्यादि श्लोकादारभ्य सम्पूर्णा वृद्धवणिग्दम्पतीकथा अश्लीलतया सुकुमारमतीनां छात्राणां पठनानर्हा।

(१६६) अकस्मादिति।—युवती काचित् तरुणी, अकस्मात् अतर्कितं यथा तथा, वृद्धं पतिं भर्त्तारं, केशेषु आकृष्य आक्षिप्य, धृत्वा इत्यर्थः, निर्दयं गाढम्, आलिङ्ग्य आश्लिष्य, चुम्बति, अत्र अस्मिन् चुम्बने, हेतुः किमपि कारणं, भविष्यति।

(ग) गौड़ीये—गौड़देशे, वङ्गे इति यावत्।

(घ) पश्चिमे—चरमे, वार्द्धके इत्यर्थः।

(ङ) कामाधिष्ठितचेतसा—कामेन अधिष्ठितम् आक्रान्तं, चेतो यस्य तेन मदनपरतन्त्रेण।

(च) धनदर्पात्—अर्थगर्वात्, धनित्वाभिमानात् इति यावत्।

लीलावती नाम वणिक्पुत्री परिणीता। सा च (छ) मकरकेतो-र्विजयवैजयन्तीव यौवनवती बभूव, स च वृद्धपतिस्तस्याः सन्तोषाय नाभवत्। यतः,—

अग्निनीव हिमार्त्तानां घर्मार्त्तानां रवाविव।
मनो न रमते स्त्रीणां जराजीर्णेन्द्रिये पतौ॥ १६७॥

अन्यच्च,—पलितेष्वपि दृष्टेषु पुंसः का नाम कामिता?।
भैषज्यमिव मन्यन्ते यदन्यमनसः स्त्रियः॥ १६८॥

स च वृद्धपतिस्तस्याम् अतीवानुरागवान्। यतः,—
धनाशा जीविताशा च गुर्वी प्राणभृतां सदा।
वृद्धस्य तरुणी भार्य्या प्राणेभ्योऽपि गरीयसी॥ १६९॥

---

(छ) मकरकेतोर्विजयवैजयन्तीव—मकरकेतोः कन्दर्पस्य, विजयवैजयन्ती विजयपताकेव; अनया हि कन्दर्पः कामिषु विजयं सूचयन्नास्ते इति भावः।

(१६७) अग्निनीति।—हिमार्त्तानां शीतपीड़ितानां, अग्निनि चन्द्रे घर्मार्त्तानां ग्रीष्मतापितानां, रवौ सूर्य्ये इव, स्त्रीणां नारीणां, जरया वार्द्धक्यविशेषेण, जीर्णेन्द्रिये शिथिलितेन्द्रिये, पतौ भर्त्तरि, मनश्चेतः, न रमते न तदा नानुरक्तं भवतीत्यर्थः, स्त्रियो हि यूनि एव रज्यन्ते इति निष्कर्षः।

(१६८) पलितेष्विति।—पलितेषु वार्द्धकसुलभशुक्लेषु केशेषु, दृष्टेषु अवलोकितेषु सत्स्वपि, पलितदर्शनमात्रमेवेत्यर्थः, पुंसः पुरुषस्य, कामिता कामुकत्वं, कामिनीसहवासादिरूपविषयभोगवासना इति यावत्, का नाम? वार्द्धके रमणीसम्भोगाभिलाषो न सम्भावनीय एव इत्यर्थः, यत् यस्मात्, अन्यस्मिन् पुरुषे मनो यासां तथोक्ताः, तरुणपुरुषासक्तचित्ताः इति भावः, स्त्रियः, वृद्धपतिमिति शेषः, भैषज्यम् दुःखसेव्यम् औषधमिव, मन्यन्ते जानन्ति, न तस्मिन्ननुरागवत्यो भवन्तीत्यर्थः।

(१६९) धनाशेति।—प्राणभृतां प्राणिनां, धनाशा अर्थाभिलाषः, जीविताशा प्राणधारणवासना च, सदा सर्वदा, गुर्वी महती, भवति इति शेषः, किन्तु वृद्धस्य जराग्रस्तस्य पुरुषस्य, तरुणी युवती, भार्य्या पत्नी, प्राणेभ्यः जीवितादपि, ("पुंसि भूम्न्येव: प्राणास्त्वेवम्" इत्यमरवचनात् प्राणशब्दो नित्यबहुवचनान्तो मन्तव्यः) गरीयसी प्रशस्यतरा, प्राणेभ्योऽप्यधिकेत्यर्थः, भवतीति शेषः। धनबाहुल्यं मेऽस्तु दीर्घजीवनं चास्तु इत्येवं लोकाः काङ्क्षन्ति, वृद्धास्तु तरुणीं पत्नीं ताभ्यामप्यधिक मन्यन्ते इति निष्कर्षः।

अपि च,—नोपभोक्तुं न च त्यक्तुं शक्नोति विषयान् जरी ।
अस्थि निर्दशनः श्वेव जिह्वया लेढि केवलम् ॥ १७० ॥

अथ सा लीलावती यौवनदर्पात् (ज) अतिक्रान्तकुलमर्य्यादा केनापि वणिक्पुत्रेण सह अनुरागवती बभूव । यतः,—

स्वातन्त्र्यं पितृमन्दिरे निवसतिर्यात्रोत्सवे सङ्गतिः
गोष्ठी पूरुषसन्निधावनियमो वासो विदेशे तथा ।
संसर्गः सह पुंश्चलीभिरसकृद्वृत्तेर्निजायाः क्षतिः
पत्युर्वार्द्धकमीर्ष्यितं प्रवसनं नाशस्य हेतुः स्त्रियाः ॥ १७१ ॥

---

(१७०) नेति ।—जरा विद्यतेऽस्येति जरी जराजीर्णः जनः, विषयान् कामान्, उपभोक्तुं सेवितुं न, त्यक्तुं विहातुञ्च, न शक्नोति, भोगवासना प्रबला विद्यते, परन्तु जीर्णत्वेन सामर्थ्याभावात् भोक्तुं न शक्नोतीत्यर्थः ; अत्र दृष्टान्तमाह,—निर्दशनः दन्तशून्यः, श्वा कुक्कुरः, जिह्वया रसनया, अस्थि केवलं लेढि आस्वादयति एव ; दन्तहीनत्वेन चर्वणसामर्थ्याभावादिति भावः । ("श्वेव" इत्यत्र "श्वेव" इति पाठान्तरम्) । उपभोगेऽसमर्थोऽपि भोगवासनां न जहातीति तात्पर्य्यम् ।

(ज) अतिक्रान्तकुलमर्य्यादा—अतिक्रान्ता लङ्घिता, कुलमर्य्यादा वंशगौरवं कुलाचारः वा यया सा, स्वेच्छाचारिणी इत्यर्थः । "केनापि वणिक्पुत्रेण सह" इत्यत्र "कस्मिंश्चित् वणिक्पुत्रे" इति पाठः समीचीनः ।

(१७१) स्वातन्त्र्यमिति ।—स्वतन्त्रायाः भावः स्वातन्त्र्यं स्वेच्छाचरणं, स्वाधीनतेत्यर्थः, पितृमन्दिरे पित्रालये, निवसतिः बहुकालमवस्थानं, यात्रोत्सवे यात्रायां तीर्थयात्रादौ, देवार्चने वा, देवपूजास्थले इत्यर्थः, ("यात्रा तु यापनोपाये गतौ देवार्चनोत्सवे" इति विश्वः) तथा उत्सवे उत्सवकर्मणि च, समवेतबहुजने आनन्दजनके व्यापारे इत्यर्थः, सङ्गतिः समागमः, पूरुषसन्निधौ अन्यपुरुषसमीपे, [ "पुरः अग्रगमने" इत्यस्मात् धातोः "पुरः कुषन्" (४।७४ उ०) इति कुषनि कृते "पृषोदरादीनि" (६।३।१०९ पा०) इति उकारस्य दीर्घत्वम् । दीक्षितमते तु "अन्येषामपि दृश्यते" (६।३।१३७ पा०) इति दीर्घत्वम् । "पुरी आप्यायने" इत्यस्मात् बाहुलकात् कुषनि कृते पूरुष इति वा । "स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः" इत्यमरः ] । गोष्ठी सभा, बहुभिः मेलनमित्यर्थः, अन्यपुरुषैरालापो वा, अनियमः स्त्रीजनोचितनियमाभावः, लज्जादिविसर्जनमित्यर्थः, तथा विदेशे पति-

अपरञ्च,—पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नश्चान्यगृहे वासो नारीणां दूषणानि षट् ॥ १७२ ॥

किञ्च,—स्थानं नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः ।
तेन नारद ! नारीणां सतीत्वमुपजायते ॥ १७३ ॥

अन्यच्च,—न स्त्रीणामप्रियः कश्चित् प्रियो वाऽपि न विद्यते ।
गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम् ॥ १७४ ॥

---

देशातिरिक्ते देशे, वासः अवस्थितिः, यद्वा—विदेशे अनियमः नियमपरिहारपू
इत्यर्थः, वासः, असकृत् बहुशः, पुंश्चलीभिः नष्टचरित्राभिः, सह संसर्गः सहवा
एकत्रावस्थानमित्यर्थः, निजायाः स्वकीयायाः, वृत्तेः जीविकायाः, क्षतिः ध्वं
ग्रासाच्छादननिर्वाहोपायाभाव इत्यर्थः, पत्युः भर्त्तुः, वार्द्धकं वृद्धावस्था, ईर्ष्या
ईर्ष्यापरतन्त्रता, सपत्नीनां भर्त्तृवाल्लभ्यासहिष्णुत्वम् इति यावत्, प्रवसनं प्रवा
पत्युरिति भावः, एतत् सर्वं स्त्रियाः नार्य्याः, नाशस्य हेतुः कारणम् ; एतैः
स्त्रियः पातिव्रत्यात् भ्रश्यन्ति इति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(१७२) पानमिति ।—पानं मद्यादीनां पानं, दुर्जनसंसर्गः असज्जनसहवा
पत्या भर्त्त्रा च, विरहः वियोगः, अटनं परगृहे बहुशः भ्रमणं, स्वप्नः निद्राधिक्य
मित्यर्थः, अन्यगृहे असम्पृक्तस्थालये, वासः स्थितिः, एतानि षट् नारीणां स्त्री
दूषणानि पातिव्रत्यनाशकारणभूतानि, भवन्तीति शेषः । ( "स्वप्नोऽन्यगेहवासश्च ना
सन्दूषणानि षट्" इति उत्तरार्द्धस्य मनूक्तपाठान्तरम् ) ।

(१७३) स्थानमिति ।—यत्रेति अध्याहार्य्यम् । हे नारद ! यत्र स्थानं नास्ति
पुरुषसङ्गमोचितस्थानं न विद्यते, क्षणः समयः, सङ्गमावकाश इति यावत्, नास्ति
प्रार्थयिता प्रणयाकाङ्क्षी, नरः पुरुषश्च, नास्ति, तेन स्थानाद्यलाभेन हेतुना, त
नारीणां सतीत्वं साध्वीत्वम्, उपजायते रचितं भवति ।

(१७४) भारतानुशासनपर्वोक्तं श्लोकमवलम्ब्य स्त्रीणां बहुपुरुषवाञ्छितमा
नेति ।—स्त्रीणां कश्चित् पुरुषः, अप्रियः द्वेष्यः, अप्रीतिकरः इत्यर्थः, न नास्ति,
अथवा, प्रियोऽपि प्रीत्यास्पदोऽपि, न विद्यते । अरण्ये वने, गावः तृणमि
शष्पमिव, नवं नवं प्रत्यहं नूतनम्, एकस्मादन्यं पुरुषमित्यर्थः, प्रार्थयन्ति काङ्क्षन्ति ।
[ प्रार्थयन्ति इति परस्मैपदप्रयोगः महाकविप्रयुक्ततया सिध्यति । अथवा प्रार्थं
इति प्रार्थः घञ्, ततः तत्करोति इत्यर्थे णिचि साधनीयम् ] । गावो य

अपरञ्च,—घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान्।
तस्मात् घृतञ्च वह्निञ्च नैकत्र स्थापयेद् बुधः ॥१७५॥
माता स्वसा दुहिता वा न विविक्तासनो भवेत्।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ १७६ ॥
न लज्जा न विनीतत्वं न दाक्षिण्यं न भीरुता।
प्रार्थनाभाव एवैकं सतीत्वे कारणं स्त्रियाः ॥१७७॥
अपि च,—पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
पुत्रश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ १७८ ॥

---

प्रियमप्रियञ्चाविविच्य केवलं नवद्रव्यमेव गृह्णन्ति तद्वत् स्त्रियोऽपि नवं नवमेव पुरुषं कामयन्ते, न तु सगुणं सदोषं वा आलोचयन्ति इति फलितार्थः।

(१७५) स्त्रीपुंसोरेकत्रावस्थापनस्य अनौचित्ये चाणक्यमतमाह, घृतेति।—नारी घृतस्य कुम्भः घृतकुम्भः तेन समा तुल्या, घृतपूरितकलसतुल्या, पुमान् पुरुषः, तप्तः उत्तप्तः, योऽङ्गारस्तेन समः ज्वलदिन्धनसदृशः, तस्मात् हेतोः, बुधः पण्डितः, घृतं हविश्च, वह्निम् अग्निञ्च, एकत्र एकस्मिन् स्थाने, न स्थापयेत् न रक्षेत्, वह्निसान्निध्ये घृतमिव पुरुषसन्निधौ नारीणां मनः अवश्यमेव विगलतीत्यर्थः।

(१७६) शुक्रनीत्युक्तवचनमवलम्ब्य स्त्रीसन्निधौ एकाकितया अवस्थानस्य दोषमाह, मात्रेति।—मात्रा जनन्या, मातृस्थानीयया वा, स्वस्रा भगिन्या, दुहित्रा कन्यया वा सह, विविक्ते विजने, आसनम् उपवेशनं यस्य स तथोक्तः निर्जन-देशस्थः, न भवेत्, यतः बलवान् प्रबलः, दुर्दम इति भावः, इन्द्रियग्रामः इन्द्रिय-समूहः, विद्वांसं पण्डितं, जितेन्द्रियमिति भावः, अपि अन्येषान्तु का कथेत्यर्थः, कर्षति आकर्षति, स्वायत्तीकरोतीत्यर्थः, विदुषामपि स्त्रीसन्निधौ चित्तचाञ्चल्यं जायते इति भावः। "मात्रा स्वस्रा दुहित्रा वा नात्यन्तैकान्तिकं वसेत्। यथासम्बन्ध-माहूयादाभाष्याश्चास्तु वै स्त्रियम् ॥" इति शुक्रनीतौ पाठान्तरम्।

(१७७) नेति।—स्त्रियाः नार्य्याः, सतीत्वे साध्वीत्वरक्षणे, लज्जा व्रीडा नमता, न, सर्वत्र कारणमित्यनेनान्वयः, विनीतत्वं नम्रता, न, दाक्षिण्यं पतिच्छन्दानुवर्त्तन-त्वञ्च, न, भीरुता गुरुजनेभ्यः भयशीलता च, न, एषां सद्भावेऽपि सतीत्वभ्रंशदर्शनात् इति भावः; किन्तु प्रार्थनाऽभावः पुरुषस्य प्रार्थनाऽभाव एव, अथवा नार्य्याः पुरुषा-न्तरसम्भोगे अनिच्छैव, एकं प्रधानं, कारणं हेतुः।

(१७८) पितेति।—कौमारे अपरिणीतावस्थायां, पिता रक्षति, यौवने

स्त्रियो हि चपला नित्यं देवानामपि विश्रुतम्।
ताश्चापि रक्षिता येषां ते नराः सुखभागिनः ॥१७९॥

एकदा सा लीलावती (झ) रत्नावलीकिरणकर्बुरे पर्य- तेन वणिक्पुत्रेण सह (ञ) विस्रम्भालापैः सुखासीना। (ट) अलक्षितोपस्थितं पतिमवलोक्य सहसोत्थाय (ठ) केशे- ष्वाकृष्य (ड) निर्भरमालिङ्ग्य चुम्बितवती। तेनावसरेण जारश्च पलायितः। उक्तञ्च,—

उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः।
स्वभावेनैव तच्छास्त्रं स्त्रीबुद्धौ सुप्रतिष्ठितम् ॥१८०॥

यौवनदशायां, भर्त्ता पतिः, रक्षति, स्थाविरे भावे वार्द्धके, पुत्रः रक्षति; (… संहितायां ९मेऽध्याये "रक्षन्ति स्थाविरे पुत्राः" इति पाठान्तरम्) इत्थं स्त्री … स्वच्छन्दानुवर्त्तनं, स्वेच्छाचारित्वम् इत्यर्थः, न अर्हति न युज्यते, स्वाधी… अवस्थातुं न योग्या भवतीत्यर्थः, नार्य्यः सर्वावस्थायामेव पित्राद्यन्यतमेन र… इति निष्कर्षः। (मनुपञ्चमाध्याये तु "बाल्ये पितुर्व्वशे तिष्ठेत् पाणिग्राहस्य यौ… पुत्राणां भर्त्तरि प्रेते न भजेत् स्त्री स्वतन्त्रताम् ॥" इति पाठः)।

(१७९) स्त्रिय इति।—स्त्रियः नार्य्यः, नित्यं हि सदैव, चपलाः … प्रकृतयः, भवन्तीति शेषः, एतत् देवानामपि विश्रुतं विदितं, येषाञ्च … पुरुषाणां पुनः, ताः अपि तादृश्यश्चपलाः नार्य्योऽपि, प्रकृतिचपला अपीति … रक्षिताः चापल्येन पुरुषान्तरसंयोगात् निवारिताः, ते नराः पुमांसः, सुखभा… सुखभाजनानि, भवन्तीति शेषः।

(झ) रत्नावलीकिरणकर्बुरे—रत्नावलीनाम् अङ्गाभरणगतमणिमुक्तादीनां … पर्य्यङ्कनिबद्धमणिमुक्तादीनां वा, किरणैरंशुभिः, कर्बुरे विचित्रिते।

(ञ) विस्रम्भालापैः,—मिथः प्रणयगर्भैरालापैः इत्यर्थः। आसीना उपवि… [आस+शानच्, आकारस्येत्त्वम्; ततः टाप्]।

(ट) अलक्षितोपस्थितम्—अलक्षितम् अतर्कितं यथा तथा, उपस्थितः समागतः तं, सहसा समागतम्।

(ठ) केशेषु इत्यत्र [अवच्छेदे सप्तमी]।

(ड) निर्भरं— गाढम्।

(१८०) उशना इति।—यत् शास्त्रं कूटनीतिशास्त्रम्, उशना दैत्यगुरुः

तदालिङ्गनमवलोक्य समीपवर्त्तिनी कुट्टिनी अचिन्तयत्,—"अकस्मादियमेनम् (ढ) उपगूढ़वती !!" इति। ततस्तया कुट्टिन्या तत्कारणं जारं परिज्ञाय सा लीलावती गुप्तेन दण्डेन दण्डिता। अतोऽहं ब्रवीमि,—"अकस्माद् युवती वृद्धम्" इत्यादि।

[ इति वृद्धवणिग्दम्पतीकथा ]।

(ण) मूषिकबलोपष्टम्भेन च केनापि कारणेनात्र भवितव्यम्।" क्षणं विचिन्त्य परिव्राजकेनोक्तं,—"कारणञ्चात्र (त) धनबाहुल्यमेव प्रतिभाति। यतः,—

धनवान् बलवान् लोके सर्वः सर्वत्र सर्वदा।
प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते" ॥ १८१ ॥

ततः (थ) खनित्रमादाय तेन परिव्राजकेन विवरं खनित्वा

---

चार्य्यः, वेद जानाति, [ वेत्तीति रूपान्तरम् ], यच्च कूटनीतिशास्त्रं, बृहतां पतिः [ पारस्करादित्वात् निपातः ]। बृहस्पतिः, वेद जानाति, तत् शास्त्रं चातुरीविद्या इत्यर्थः, स्त्रीबुद्धौ नारीबुद्धौ, स्वभावेनैव प्रकृत्यैव, शिक्षामन्तरेणैवेति भावः, सुप्रतिष्ठितं सम्यक् स्थितं, सम्यक्तया विद्यमानमित्यर्थः, स्त्रीणामशिक्षितपटुत्वं सर्वत्र दृश्यते इत्याशयः। ( अत्रोत्तरार्द्धं—"स्त्रीबुद्ध्या न विशिष्येते तास्तु रक्ष्याः कथं नरैः॥" इति भारतानुशासनपर्वीयः पाठः)। [ उशनःशब्दस्य सम्बुद्धौ रूपत्रयम्—यथा हे उशनन्, हे उशन, हे उशनः इति ]।

( ढ ) उपगूढ़वती—आलिङ्गितवती [ उप + गुह + क्तवतुः + स्त्रियामीप् ]।

( ण ) मूषिकबलोपष्टम्भेन—उन्दुरोः सामर्थ्यप्रारम्भेण, बलवत्तासूचककार्य्योपक्रमेणेत्यर्थः, बलदर्पेणेत्यर्थो वा।

( त ) धनबाहुल्यं—धनाधिक्यम्।

( १८१ ) धनवानिति।—लोके जगति, सर्वत्र सर्वस्मिन् देशे, सर्वदा सर्वस्मिन् समये, सर्वः धनवान् धनशाली जनः, बलवान् बलशाली, भवेदिति शेषः, हि तथाहि, राज्ञां नरपतीनाम् अपि, प्रभुत्वम् आधिपत्यं, प्रभावः इत्यर्थः, धनमेव मूलं कारणं यस्य तत्, धनहेतुकमित्यर्थः, उपजायते भवति, धनाभावे राज्ञामपि प्रभुत्वं न सम्भवेदित्यर्थः।

( थ ) खनित्रं—खननसाधनमस्त्रविशेषम्।

चिरसञ्चितं मम धनं गृहीतम्। ततः प्रभृति निजशक्ति... (द) सत्त्वोत्साहरहितः स्वाहारमपि (ध) उत्पादयितुम... सत्रासं मन्दं मन्दम् (न) उपसर्पन् चूडाकर्णेनावलोकि... ततस्तेनोक्तम्,—

"धनेन बलवान् लोको धनाद्भवति पण्डितः।
पश्यैनं मूषिकं पापं स्वजातिसमतां गतम् ॥१८२॥

किञ्च,—अर्थेन तु विहीनस्य पुरुषस्याल्पमेधसः।
क्रियाः सर्वा विनश्यन्ति ग्रीष्मे कुसरितो यथा ॥१८...

---

(द) सत्त्वोत्साहरहितः,—सत्त्वं द्रव्यं, धनबाहुल्यमित्यर्थः, तेन यः ... उद्योगः, तेन रहितः हीनः, धनबाहुल्यजनितोद्यमपरिशून्य इत्यर्थः, यद्वा—मनः, तस्य उत्साहः तेन रहितः, सत्त्वेन धैर्य्यादिरूपमनोबलेन उत्साहेन वा ... इति वा।

(ध) उत्पादयितुम्—उपार्जयितुम्।

(न) उपसर्पन्—गच्छन्।

(१८२) धनेनेति।—लोकः जनः, धनेन हेतुना बलवान् बलशाली, ... तीति शेषः, तस्माद्धनलाभाशया सर्वे मल्लास्तत्सहायीभवन्ति, तेन च धनवान् ... भवतीति भावः, धनाद्धेतोः पण्डितः भवति ; धनी मूर्खोऽपि सुपण्डित इति ... स्तावकैः कीर्त्तितो भवतीत्यर्थः, एनं पापं पापिष्ठं, मूषिकम् उन्दुरं, स्वजाति... मूषिकजातिस्तुल्यबलत्वं, गतं प्राप्तं, पश्य अवलोकय, पूर्वम् अयं भिक्षापात्र... मपहृत्य सञ्चित्य च स्वजात्यपेक्षया अधिकबलः आसीत्, इदानीन्तु तद्धरणेन ... संवृत्त इत्यर्थः। ("अस्त्येष घटः पश्य" इतिवत् "पश्यायं मूषिकः पापः स्वजाति... समतां गतः" इति पाठः समीचीनतया प्रतिभाति)।

(१८३) बृहच्चाणक्यमतमुपन्यस्य धनहीनतायाः दोषमाह, अर्थेनेति।—... धनेन, विहीनस्य रहितस्य, अत एव अल्पा मेधा धारणावती बुद्धिर्यस्य [ बहुव्रीहि... समासः ] तस्य मन्दधियः, पुरुषस्य सर्वास्तु सकलाः एव, क्रियाः कर्माणि, ... ग्रीष्मर्त्तौ, कुसरितः यथा कुनद्य इव, स्वल्पतोया नद्य इव इत्यर्थः, विनष्ट... विनष्टा भवन्ति, अल्पजला नद्यो ग्रीष्मे शुष्काः सत्यो यथा विफला जायन्ते ... दरिद्राणां क्रिया अपि विफलीभवन्ति इति निष्कर्षः। ("अर्थेन तु" इत्यत्र "अर्थैः...

अपरञ्च,—यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः।
यस्यार्थाः स पुमांल्लोके यस्यार्थाः स तु पण्डितः॥१८४॥
अन्यच्च,—अपुत्रस्य गृहं शून्यं सन्मित्ररहितस्य च।
मूर्खस्य च दिशः शून्याः सर्वशून्या दरिद्रता॥ १८५ ॥
अपि च,—दारिद्र्यान्मरणाद्वाऽपि दारिद्र्यमवरं स्मृतम्।
अल्पक्लेशेन मरणं दारिद्र्यमतिदुःसहम्॥१८६॥

क्रियाः सर्वा विनश्यन्ति" इत्यत्र "विच्छिद्यन्ते क्रियाः सर्वाः" इति भारतशान्तिपर्वणि राजधर्मव्याख्यानप्रकरणोक्तपाठान्तरम्)।

(१८४) भारतशान्तिपर्वीयराजधर्मव्याख्यानप्रकरणोक्तवचनमनुसृत्य धनवत्ताया: महिमानमाह, यस्येति।—यस्य जनस्य, अर्थाः धनानि, सन्तीति शेषः, तस्य जनस्य, मित्राणि सर्वे एव सुहृदः, भवन्ति इति शेषः, यस्य अर्थाः तस्य बान्धवाः ज्ञातयः, पितृव्यादिज्ञातिवर्गाः सदाऽऽनुगत्यादिना बन्धुकार्यं सम्पाद्य मनो रञ्जयन्ति, निर्धनस्य वार्त्तामपि ते न पृच्छन्तीति भावः; यस्य अर्थाः स लोके जगति, पुमान् पुरुषशब्दवाच्यः, यस्य अर्थाः स तु पण्डितः विद्वान्, पण्डितशब्दप्रतिपाद्यः इत्यर्थः, "पण्डितः" इत्यत्र "जीवति" इति वृद्धचाणक्योक्तपाठान्तरम्)। अर्थयुक्तः मूर्खोऽपि पण्डितवत् लोके पूज्यो भवतीति फलितार्थः।

(१८५) अपुत्रस्येति।—अपुत्रस्य अनपत्यस्य, सत् अकृत्रिमं, मित्रं सन्मित्रं, तेन रहितस्य अकृत्रिमसुहृद्वर्जितस्य च जनस्य, गृहं शून्यं निष्फलं, सर्व्वसम्पत्सत्त्वेऽपि पुत्रमित्रविहीनत्वात् शून्यमिव अकिञ्चित्करं प्रतिभातीति भावः; मूर्खस्य मन्दबुद्धेः, दिशः शून्याः सर्वास्वपि दिक्षु सहायहीनतेत्यर्थः, मूर्खस्तु यत्र यत्रावलम्बनलाभार्थं व्रजति, तत्र तत्रैव तल्लाभाभावात् हताशः प्रतिनिवर्त्तते अतः सर्वा एव दिशस्तस्य शून्यवत् प्रतिभान्तीति भावः; दरिद्रता अकिञ्चनत्वं, सर्व्वशून्या सर्व्वसुखवर्जिता, दरिद्रस्य न क्वचिदपि सुखलेशोऽस्तीत्यर्थः। ("शून्यमपुत्रस्य गृहं चिरशून्यं नास्ति यस्य सन्मित्रम्। मूर्खस्य च दिशः शून्याः सर्वं शून्यं दरिद्रस्य॥" इति मृच्छकटिकोक्तं पाठान्तरम्। लघुचाणक्ये वृद्धचाणक्ये चास्य विविधपाठान्तरं दृश्यते)।

(१८६) दारिद्र्यादिति।—दारिद्र्यात् दरिद्रतायाः, अपि वा अथवा, मरणात् मृत्योः, एतयोः मध्ये इत्यर्थः, ["पञ्चमी विभक्ते" (२।३।४२ पा०) इति पञ्चमी]। दारिद्र्यं धनहीनत्वम्, अवरं हीनं, स्मृतं कथितम्। कुतः? इत्याह,—

अन्वय,—तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव।
अर्थोष्मणा विरहितः पुरुषः स एव
अन्यः क्षणेन भवतीति विचित्रमेतत्” ॥१८७॥

एतत् सर्वमाकर्ण्य मया आलोचितं,—“ममात्रा[वस्थानम्]
अयुक्तम् इदानीम्। तथा चोक्तम्,—

अत्यन्तविमुखे दैवे व्यर्थे यत्ने च पौरुषे।
मनस्विनो दरिद्रस्य वनादन्यत् कुतः सुखम्?॥१[८८॥]

मरणं मृत्युः, अल्पक्लेशेन कियत्कालक्लेशभोगेन, भवति इति शेषः, किन्तु ... अतिदुःसहं सोढुमशक्यं, यावज्जीवं क्लेशावहमित्यर्थः, अतः दारिद्र्यान्मरणं ... भावः। (“दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम्। अल्पक्लेशं ... दारिद्र्यमनन्तकं दुःखम् ॥” इति मृच्छकटिकोक्तपाठान्तरम्)।

(१८७) तानीति।—अर्थहीनस्य पुरुषस्येति सर्व्वत्राध्याहृत्यान्वयः तानि इन्द्रियाणि आढ्यावस्थायां यानीन्द्रियाणि आसन् तान्येव चक्षुरादीनि ... कलानि दारिद्र्यावस्थायामपि अविकृतानि, सन्तीति शेषः, तदेव नाम ... वस्थायां यन्नाम आसीत्, तन्नामापि, अस्ति इति शेषः, सा धनवदवस्थायां ... आसीत् तादृश्येवेत्यर्थः, अप्रतिहता तीक्ष्णा, बुद्धिः, अप्यस्तीति शेषः, तदे[व]मेव, पूर्ववदेवेत्यर्थः, वचनं, किन्तु स एव पुरुषः धनिदशायामिव अविकलेन्द्रि[य] एव नरः, अर्थोष्मणा धनगर्वेण, विरहितः विवर्जितः, धनहीनः सन्नित्यर्थः, मुहूर्त्तादेव, अन्यः अन्यविधः, विकलेन्द्रियादियुक्तवदित्यर्थः, भवतीति एतत् आश्चर्यं, विस्मयकरमित्यर्थः, धनाभावे पुरुषस्य इन्द्रियादीनामपि वि[कार] इवेति भावः। वसन्ततिलकं वृत्तम्।

(१८८) अत्यन्तेति।—दैवे भाग्ये, नियतौ इत्यर्थः, अत्यन्तविमुखे प्रतिकूले, दुर्दैवे सतीत्यर्थः, पौरुषे पुरुषसम्बन्धिनि, यत्ने चेष्टायां, पुरुषका[रे] व्यर्थे प्रतिहते च सति, (“व्यर्थयत्ने” इति पाठान्तरम्) मनस्विनः प्रश[स्त]... अभिमानधनस्य इति यावत्, दरिद्रस्य धनहीनस्य जनस्य, वनात् व[न]गमनादपरं, कुतः कुत्रेत्यर्थः, सुखं? चित्तनिर्वृतिः? भवतीति शेषः, दुष्ट... लोकसंसर्गपरिहारपूर्व्वकं निर्जनारण्याश्रयणमेव श्रेय इति भावः।

च,—मनस्वी म्रियते कामं कार्पण्यं न तु गच्छति।
अपि निर्वाणमायाति नानलो याति शीतताम् ॥१८९॥

च,—कुसुमस्तवकस्येव द्वे वृत्ती तु मनस्विनः।
सर्वेषां मूर्द्धि वा तिष्ठेद्विशीर्य्येत वनेऽथवा ॥१९०॥

यच्चान्यस्मै एतद्वृत्तान्तकथनं तदपि अनुचितम्। यतः,—
अर्थनाशं मनस्तापं गृहे दुश्चरितानि च।
वञ्चनञ्चापमानञ्च मतिमान् न प्रकाशयेत् ॥१९१॥

(१८९) मनस्वीति।—मनस्वी महात्मना:, अभिमानीति भाव:, जन इति शेष:, —मं यथेष्ट, म्रियते प्राणान् त्यजति, मृत्युमपि यथेष्टतया आश्रयतीत्यर्थ:, यद्वा—स्वी म्रियते कामं, काममिति अकामानुमतौ, अनिष्टं मृत्युमपि अगत्या स्वीकरोत्यर्थ:, तु किन्तु, कार्पण्यं कृपणतां, लघुत्वमिति यावत्, न गच्छति न स्वीकरोत्यर्थ:। अत्र दृष्टान्तमाह,—अनल: वह्नि:, निर्वाणं विनाशम् अपि, आयाति च्छति, तथाऽपि शीततां शैत्य, निस्तेजस्त्वमिति भाव:, न याति न प्राप्नोति।

(१९०) कुसुमेति।—मनस्विन: उन्नतचेतस:, मानिन इति भाव:, कुसुमकस्य पुष्पगुच्छस्य इव, द्वे तु द्विविधे एव, वृत्ती स्थिती, मनोवृत्तीत्यर्थ:, व्यापाराति यावत्, एका—सर्वेषां जनानां, मूर्द्धि मस्तके, सर्वोपरि इत्यर्थ:, तिष्ठेत् वा वर्त्तेत, अथवा वने अरण्ये, विशीर्य्येत क्षयं गच्छेत्, म्रियेतेत्यर्थ:, वने उषित्वा शरीरं त्यजेदिति यावत्। कुसुमानां स्थितिर्महतां देवादीनां शिरसि, अन्यथा वने एव शीर्णानां पतनं, विदुषां स्थितिरपि तद्वत् सर्व्वप्रधानतया वर्त्तनं तदन्यथात्वे लोकचक्षुषामन्तराले एव देहविसर्जनम् इति भाव:।

(१९१) लघुचाणक्यवचनमुद्धृत्य अन्यसन्निधौ अर्थनाशस्य अप्रकाश्यतामाह, र्थनाशमिति।—प्रशस्ता मति: अस्येति मतिमान् बुद्धिमान् जन:, अर्थनाशं नाशं, मनस्तापम् आधिं, गृहे निजालये, "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" युक्त्या गृहिणीविषये, भार्य्याया: इत्यर्थो वा; दुश्चरितानि च निन्दनीयव्यापारांश्च, गृहच्छिद्राणि इत्यर्थ:, वञ्चनञ्च परकृतप्रतारणञ्च, अपमानञ्च अन्यकृतामवज्ञाञ्च, न काशयेत् अन्यसन्निधौ न कथयेत्; तत्प्रकाशनेन कोऽपि लाभो न जायते, प्रत्युत महती गौरवहानि: भवतीति भाव:। (वृद्धचाणक्ये तु "गृहे दुश्चरितानि" इत्यत्र गृहिणीचरितानि" "वञ्चनञ्चापमानञ्च" इत्यत्र "नीचवाक्यञ्चापमानम्" इति ठान्तरम्)।

अपिच,—आयुर्वित्तं गृहच्छिद्रं मन्त्रमैथुनभेषजम् ।
तपोदानापमानञ्च नव गोप्यानि यत्नतः ॥१९२॥

यच्चात्रैव याच्ञया जीवनं, तदप्यतीव गर्हितम् । यतः,

वरं विभवहीनेन प्राणैः सन्तर्पितोऽनलः ।
नोपचारपरिभ्रष्टः कृपणः प्रार्थ्यते जनः ॥१९३॥

अन्यच्च,—दारिद्र्यात् ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसः
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो ! निधनता सर्वापदामास्पदम् ।

---

(१९२) धनविषयकव्यापारस्य सर्वथा गोप्यत्वे दृष्टान्तमाह आयुरिति ।—आयुः जीवनकालः, वित्तं धनं, गृहच्छिद्र स्वगृहदूषणं, मन्त्रः मैथुनं सुरतं, भेषजम् औषधम् ; [मन्त्रश्च मैथुनश्च भेषजञ्च एतेषां समाहारः] ; तपः तपस्याऽनुष्ठानं, दानं सत्पात्रे विनियोगः, अपमानश्च [पूर्ववत् समाहारः] ; नव एतानि नवसङ्ख्यानि, यत्नतः यत्नेन, गोप्यानि अप्रकाश्यानि इत्यर्थः । शुक्रनीतेस्तृतीयाध्याये श्लोकोऽयं किञ्चित्परिवर्तितो दृश्यते ।

(१९३) वरमिति ।—विभवहीनेन दरिद्रेण, प्राणैर्जीवनेन, अनलः सन्तर्पितः तृप्तिमापादितः, स्यादिति शेषः, इत्यपि वरं श्रेयस्करं, वरं स्यादित्यर्थः । (सन्तर्प्यते इति पाठः सम्यक्) । तेन किं भवेत् ? इत्यत आह नोपचारेत्यादि ।—उपचारपरिभ्रष्टः उपचारात् यं प्रति यादृशः आचारः कर्तव्यः तादृशात् शिष्टाचारात् इत्यर्थः, परिभ्रष्टः विरहितः, सौजन्यविमुखः इत्यर्थः, कृपणः लघुचेताः, जनः न प्रार्थ्यते न याच्यते ; दारिद्र्यक्लेशनिवारणाय क्षुद्रे प्रार्थनाप्रवेशः सर्वथा श्रेयानिति भावः ।

(१९४) दारिद्र्यादिति ।—दारिद्र्यात् धनहीनत्वात् हेतोः, ह्रियं लज्जाम् एति प्राप्नोति, जन इति शेषः, निर्धनतया सर्वत्रैव त्रपामनुभवतीत्यर्थः, ह्रीपरिगतः व्रीडामुपगतो जनः, ("तत्परिगतः" इति पाठान्तरम्) तेजसः पराक्रमात् प्रभ्रश्यते च्यवते, [कर्मकर्त्तरि लट्] निस्तेजाः तेजोहीनः, ("प्रभ्रश्यते तेजसः" इत्यत्र "सत्त्वात् परिभ्रश्यते, निःसत्त्वः" इति पाठान्तरम्) परिभूयते अव

अपि च,—वरं मौनं कार्य्यं न च वचनमुक्तं यदनृतं
वरं क्लैव्यं पुंसां न च परकलत्राभिगमनम्।
वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचि-
र्वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ॥१९५॥
वरं शून्या शाला न च खलु वरो दुष्टवृषभः
वरं वेश्या पत्नी न पुनरविनीता कुलवधूः।
वरं वासोऽरण्ये न पुनरविवेकाधिपपुरे
वरं प्राणत्यागो न पुनरधमानामुपगमः ॥ १९६ ॥

लोकैरिति शेषः, परिभवात् अपमानात्, निर्वेदम् अवज्ञाजनितां स्वावमानना, "जीवितं मे धिक्" इत्येवम् आत्मनि अवज्ञाम् इत्यर्थः, आपद्यते प्राप्नोति, निर्विण्णः प्राप्तनिर्वेदः, शुचं शोकं, मनस्तापमित्यर्थः, एति प्राप्नोति, शोकेन मनःक्लेशेन, पिहितः अभिभूतः, [ अपि + धा + क्तः "वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः" (का०) इत्यपेरकारलोपः ] ("विहतः" इति पाठान्तरम्) बुद्ध्या प्रज्ञया, परित्यज्यते विमुच्यते, भ्रष्टबुद्धिः भवति इत्यर्थः, निर्बुद्धिः बुद्धिविहीनः, क्षयं नाशम्, एति प्राप्नोति, अहो! खेदे, निधनता दारिद्र्यं, सर्वापदां सकलविपत्तीनाम्, आस्पदं स्थानम्। श्लोकोऽयं मृच्छकटिकस्य प्रथमाङ्केऽपि दृश्यते। शार्दूलविक्रीडितं वृत्तम्।

(१९५) वरमिति।—मौनं मौनावलम्बनं, कार्य्यं कर्त्तव्यम्, इत्यपि वरं मनाक् प्रियं, मौनितयाऽवस्थानमपि श्रेय इत्यर्थः, तथाऽपि यत् वचनम् अनृतम् असत्यं, तादृशस्य उक्तम् उक्तिरित्यर्थः, न च नैव, वरम् इति शेषः, पुंसां पुरुषाणां, क्लैव्यं क्लीवता, अपीति शेषः, वरं, न च नैव, परकलत्राभिगमनं परदारसम्भोगः, वरमित्यन्वयः; प्राणत्यागः मरणमपि, वरं, तथाऽपि पिशुनवाक्येषु खलोक्तिषु, शाठ्यपूर्णवचनेषु इत्यर्थः, अभिरुचिः अभिलाषः, न च वरम्; मरणमपि स्वीकार्य्यं किन्तु खलत्वे प्रवृत्तिर्न विधेयेति भावः; भिक्षाशित्वं भिक्षाभोजित्वं, भिक्षया लब्धेनान्नेन वर्त्तनशीलत्वमित्यर्थः, वरं, किन्तु परधनास्वादनसुखं परधनस्य अन्यस्वामिकस्य अर्थस्य, आस्वादनेन उपभोगेन, यत् सुखं चित्तनिर्वृतिरूपं तत्, न च वरम्। शिखरिणी वृत्तम्।

(१९६) वरमिति।—शून्या गवादिरहिता, शाला गृहम्, अपीति शेषः, वरं, तथाऽपि दुष्टो वृषभः वृषः, खलु न च वरः; वेश्या गणिका, पत्नी भार्य्यात्वेन स्वीकार्य्या, इत्यपि वरं, न पुनः अविनीता विनयहीना, प्रतिकूलाचारिणी इत्यर्थः,

अपिच,—सेवेव मानमखिलं ज्योत्स्नेव तमो जरेव लावण्यम्।
हरिहरकथेव दुरितं गुणशतमप्यर्थिता हरति ॥१९७॥

तत् किमहं (प) परपिण्डेन (फ) आत्मानं पोषयामि?
कष्टं भोः! तदपि द्वितीयं (ब) मृत्युद्वारम्। यतः,—

पल्लवग्राहि पाण्डित्यं क्रयक्रीतञ्च मैथुनम्।
भोजनञ्च पराधीनं तिस्रः पुंसां विड़म्बनाः ॥१९८॥

---

कुलवधूः कुलाङ्गना, ("नवोढ़ायोषिति वधूः स्नुषास्त्र्यांऽङ्गनासु च" इति शाश्वतः) वरम्। अरण्ये वने, वासोऽवस्थितिः, वरं, पुनः किन्तु, अविवेकः विवेचनाशक्तिरहितः योऽधिपः राजा, तस्य पुरे नगरे, स्वेच्छाचारिणो राज्ञः राज्ये इत्यर्थः, न, वासो वरमिति शेषः। प्राणत्यागः मृत्युरपि, वरं, न पुनः अधमानां नीचाशयानाम्, उपलाभाशया समीपगमनं, वरम्। [सर्व्वत्र विधेयप्राधान्यात् नपुंसकत्वम्]। शिखरिणी वृत्तम्।

(१९७) सेवेति।—सेवा परोपासना, अखिलं सर्वं, मानं सम्मानं गौरवमिवेत्यर्थः, ज्योत्स्ना कौमुदी, तमः अन्धकारमिव, जरा वार्द्धक्यं, लावण्यं सौन्दर्य्यमिव, हरिहरकथा विष्णुमहेश्वरनामकीर्त्तनं, दुरितं पापमिव, अर्थिता याचकता, गुणशतं गुणराशिम् अपि, हरति नाशयति। दारिद्र्यदोषो गुणराशिनाशी भावः। मालोपमा। आर्य्या वृत्तम्।

(प) परपिण्डेन—परेषाम् अन्येषां, पिण्डेन कवलेन, अन्यदत्तेन अन्नेनेत्यर्थः, कमपि दातारं याचित्वा तत्प्राप्तेनान्नेनेति यावत्। ("पिण्डी वृन्दे नवाङ्गोले बोलेऽङ्गसिह्लयोः। कवले पिण्डन्तु वेश्मैकदेशे जीवनायसोः॥" इति हैमः)

(फ) आत्मानं पोषयामि—शरीरपोषणं करोमि, जीविकां निर्वाहयामि इत्यर्थः।

(ब) मृत्युद्वारं—मृत्युवत् क्लेशावहम् इत्यर्थः।

(१९८) पल्लवेति।—पुंसां नराणां, तिस्रः त्रिविधाः, विड़म्बनाः तिरस्कारा असुखावहत्वात् दुर्भाग्यपरिचायिका इत्यर्थः; काश्ताः? इत्याह,—पल्लवं शाखाग्रं अंशमात्रम् इत्यर्थः, न तु सम्पूर्णमिति भावः, गृह्णाति यत् तत् तथोक्तं, प्रतिपदं किञ्चित्किञ्चिन्मात्रग्रहणशीलमित्यर्थः, पाण्डित्यं विद्यावत्ता, क्रयक्रीतम् अर्थक्रीतं धनलब्धमिति यावत्, मैथुनं स्त्रीसम्भोगः, तथा पराधीनम् अन्यायत्तं, परात् लब्धमित्यर्थः, भोजनम् आहारश्च इति।

अन्यच्च,—रोगी चिरप्रवासी परान्नभोजी परावसथशायी।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः॥ १९९॥

इत्यालोच्यापि लोभात् पुनरपि तदीयान्नं ग्रहीतुं (भ) ग्रहमकरवम्। तथा चोक्तम्,—

लोभेन बुद्धिश्चलति लोभो जनयते तृषाम्।
तृषार्त्तो दुःखमाप्नोति परत्रेह च मानवः॥२००॥

ततोऽहं मन्दं मन्दमुपसर्पंस्तेन वीणाकर्णेन (म) जर्जरवंशखण्डेन ताडितश्चाचिन्तयम्,—लुब्धो ह्यसन्तुष्टो (य) नियतम् (र) आत्मद्रोही भवति। तथाच,—

धनलुब्धो ह्यसन्तुष्टोऽनियतात्माऽजितेन्द्रियः।
सर्वा एवापदस्तस्य यस्य तुष्टं न मानसम्॥२०१॥

(१९९) रोगीति।—रोगी नित्यमामयवान्, चिररुग्णः इत्यर्थः, चिरप्रवासी प्रोषितः, चिरकालं विदेशवासशील इत्यर्थः, परान्नभोजी परपिण्डादः, परस्य आवसथः आलयः, तस्मिन् शेते यः सः परगृहे शयनशीलः, परगृहवासीति यावत्; एवंविधः पुरुषः यत् जीवति प्राणिति, तत् जीवनं, मरणं मृत्युः, मृत्युतुल्यः क्लेशावह इत्यर्थः, यत् मरणं मृत्युः, सः अस्य ईदृशस्य पुरुषस्य, विश्रामः शान्तिः। [ विधेयप्राधान्यात् स इत्यत्र पुंस्त्वम् ]। आर्य्या वृत्तम्।

(भ) ग्रहम्—आग्रहम्, उद्यममित्यर्थः।

(२००) लोभेनेति।—लोभेन लिप्सया, धनपिपासयेत्यर्थः, बुद्धिश्चलति विचलिता भवति। लोभः तृषाम् अत्युत्कटामिच्छां, जनयते उत्पादयति। तृषार्त्तः तृषया उत्कटेच्छया, आर्त्तः अभिभूतः, अत्यन्तलोभीत्यर्थः, मानवः परत्र परस्मिन् काले, परजन्मनीत्यर्थः, परलोके वा, इह च अस्मिन् जन्मनि च, दुःखम् आप्नोति प्राप्नोति।

(म) जर्जरवंशखण्डेन—विशीर्णवेणुदण्डेन।

(य) नियतं—निश्चितम्।

(र) आत्मद्रोही—आत्मने द्रुह्यतीति आत्मद्रोही आत्मविरोधी, आत्महिंसाकारीत्यर्थः।

(२०१) धनलुब्ध इति।—यस्य मानसं मनः, न तुष्टं न सन्तोषपूर्णं, भवतीति

सर्वाः सम्पत्तयस्तस्य सन्तुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मावृतेव भूः ॥२०२॥

अपरञ्च,—सन्तोषामृततृप्तानां यत् सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ? ॥२०३॥

किञ्च,—तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।
येनाशाः पृष्ठतः कृत्वा नैराश्यमवलम्बितम् ॥२०४॥

---

शेषः, हि यतः, स धनलुब्धः अर्थलोलुपः, असन्तुष्टः अप्रसन्नचित्तः, अनिश्च... असंयतस्वभावः, चञ्चलप्रकृतिरित्यर्थः, अस्थिरबुद्धिर्वा ("आत्मा पुंसि स्वभावे प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपि ॥" इति मेदिनी), अजितानि अनिग्रहीतानि, इन्द्रियाणि येन सः तादृशः इन्द्रियासक्तः, भवतीति शे... अत एव तस्य सर्वा एव आपदः विपदः, स हि सर्वापदामास्पदमित्यर्थः, लुब्धात्... न हि शीघ्रं विपन्नो भवतीति निष्कर्षः । यद्वा—हि यतः, धनलुब्धः, जन इति शे... असन्तुष्टः अनियतात्मा अजितेन्द्रियः, भवतीति शेषः, अत एव तस्य सर्वा आपदः, यस्य च मानसं न तुष्टं, तस्यापि सर्वा एवापदः इत्यन्वयः ।

(२०२) सर्वा इति ।—यस्य मानसं मनः, सन्तुष्टं प्रीतिपूर्णं, तस्य स... निखिला एव, सम्पत्तयः ऐश्वर्याणि, स सर्वसम्पदामास्पदं भवतीत्यर्थः, त... उपानद्भ्यां चर्मपादुकाभ्यां, गूढौ आच्छादितौ, पादौ यस्य तस्य चर्मपादुका... चरणस्य, भूः पृथ्वी, ननु निश्चितं, चर्मावृतेव चर्मणा आच्छादितेव, प्रतिभाति इ... शेषः, सन्तुष्टचित्तस्याप्रीतिकरमपि प्रीतिकरमिव प्रतिभातीति भावः । ("... इत्यत्र "सर्वा" इति पाठे—सर्वा भूः निखिला भूमिरित्यर्थः ) ।

(२०३) सन्तोषामृतेति ।—सन्तोषः चित्तप्रसादः, अमृतमिवेति सन्तोषा... तेन तृप्ताः प्रीताः तेषाम् अभावबोधाभावात् प्रसन्नचित्तानाम्, अत एव शान्तम् च... चेतः चित्तं येषां तेषां स्थिरधियां, यत् सुखं निर्वृतिः, भवतीति शेषः, धनलुब्धा... धनाकाङ्क्षिणाम्, अत एव इतश्चेतश्च समन्तात्, धावतां परिभ्रमतां, जनानामि... शेषः, तत् तादृशं सुखं, कुतः ? न कुतोऽपि सम्भवेदित्यर्थः । ("शान्तचेतसाम्" इत्यत्र "शान्तिरेव च" "कुतः" इत्यत्र "न च" इति वृद्धचाणक्ये पाठान्तरम्)

(२०४) तेनेति ।—येन जनेन, आशाः तृष्णाः, विषयवासनाः इत्यर्थः, पृष्ठ... पश्चात्, कृत्वा विधाय, आशाः परिहायेत्यर्थः, नैराश्यं वीतस्पृहत्वम्, अवलम्बितम् आश्रितं, तेन जनेन, अधीतं सर्वमेव शास्त्रं पठितं, तेन श्रुतं नीतिशास्त्रादि

अपिच,—असेवितेश्वरद्वारमदृष्टविरहव्यथम्।
अनुक्तक्लीववचनं धन्यं कस्यापि जीवनम्॥२०५॥
अतः,—न योजनशतं दूरं वाह्यमानस्य तृष्णया।
सन्तुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः॥२०६॥

तदत्र (ल) अवस्थोचितकार्य्यपरिच्छेदः श्रेयान्। उक्तञ्च,—
को धर्मो? भूतदया किं सौख्यम्? अरोगिता जगति जन्तोः।
कः स्नेहः? सद्भावः किं पाण्डित्यं? परिच्छेदः॥२०७॥

---

आकर्णितं, किं बहुना? तेन सर्वम् अनुष्ठितं तपस्यादिकं कृतम्; स एव हि प्रकृतो विद्वान् नीतिज्ञः आनुष्ठानिकश्चेति भावः।

(२०५) असेवितेति।—असेवितम् अनुपासितम्; धनतृष्णयेति भावः, ईश्वरस्य धनशालिनः, द्वारं येन यस्मिन् वा तत्, अदृष्टा अप्राप्ता इत्यर्थः, विरहस्य पुत्रादि-वियोगस्य, व्यथा क्लेशः येन यस्मिन् वा तत्, अनुक्तम् अकथितं, क्लीवं व्यर्थं, वचनं, यद्वा—अनुक्तं क्लीवस्य पौरुषहीनस्य, वचनम् अशक्तोऽहं ग्रासाच्छादनाहरणे, दीनं मां किञ्चिद्देहीत्येवं भिक्षुवाक्यं येन यस्मिन् वा तत्, एवम्भूतं कस्यापि जनस्य जीवनं, यदि वर्त्तते इति शेषः, तर्हि तदेव जीवनं धन्यं सफलं, श्लाघ्यमित्यर्थः; यद्वा—एवम्भूतं कस्यापि, सुकृतिनः इति शेषः, जीवनं धन्यं प्रशस्तं, भवतीति शेषः; ईदृग्जीवनवन्त एव पुरुषाः सफलजन्मान इति भावः।

(२०६) नेति।—तृष्णया प्रबलधनलिप्सया, वाह्यमानस्य नीयमानस्य, जनस्य इति शेषः, योजनानां शतं योजनशतं बहुदूरमपीत्यर्थः, दूरं दूरत्वेन परिगणितं, न, भवतीति शेषः, इयद्दूरं गत्वा अनेन एतावद्धनं लब्धम्, अहमपि गन्तुं शक्नुयाच्चेदवश्य-मेव तत् लभेयमित्याशया लुब्धः बहुदूरमपि दूरं न गणयति इत्यर्थः, परन्तु सन्तुष्टस्य वीतस्पृहस्य, करप्राप्ते हस्तगतेऽपि, का कथा दूरस्थे प्रयत्नलभ्ये च इत्यपिशब्दार्थः, अर्थे धने, आदरः यत्नः, न भवति।

(ल) अवस्थोचितकार्य्यपरिच्छेदः,—अवस्थायाः उचितं युक्तं, यत् कार्य्यं तस्य परिच्छेदः निर्णयः, अवस्थानुरूपकर्त्तव्यावधारणम्।

(२०७) क इति।—जगति भूतले, जन्तोः मानवस्य इत्यर्थः, धर्मः कः कीदृशः? भूतेषु दया भूतदया प्राणिषु अनुकम्पा एव धर्मः। सौख्यं सुखिता, किम्? अरोगिता नीरोगत्वम् एव सौख्यं सुखसाधनम्। ("अरोगिता जगति जन्तोः" इत्यत्र "नित्यमरोगिता जगति" इति पाठान्तरम्) स्नेहः प्रणयः कः?

तथा च,—परिच्छेदो हि पाण्डित्यं यदापन्ना विपत्तयः।
अपरिच्छेदकर्त्तॄणां विपदः स्युः पदे पदे ॥२०८॥

तथाहि,—त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥२०९॥

अपरञ्च,—पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरम्।
विचार्य्य खलु पश्यामि तत् सुखं यत्र निर्वृतिः ॥२१०॥

सद्भावः साधुभावः, उपचिकीर्षादिरित्यर्थः। पाण्डित्यं ज्ञानवत्त्वं किम्? प… कर्त्तव्याकर्त्तव्यावधारणम्। आर्य्या वृत्तम्।

(२०८) परिच्छेद इति।—परिच्छेदः हि कर्त्तव्यावधारणम एव, … विद्यावत्ता, विपत्तयः आपदः, यत् यतः परिच्छेदात, आपन्नाः आपन्नप्राप्ताः … इत्यर्थः. भवन्तीति शेषः. अपरिच्छेदकर्त्तॄणां कार्य्यनिर्णायकबुद्धिरहिता… वेकिनामित्यर्थः, पदे पदे प्रतिपदम, अनुक्षणमिति यावत, विपदः स्युः … अविवेकिनः सदा विपन्ना भवन्ति इत्यर्थः। उक्तञ्च भारविणा—"अविवेकः … पदां पदम्"।

(२०९) येन केनापि उपायेन रिपुभ्यः आत्मा रक्षणीय इति वक्तुं … माह, त्यजेदिति।—कुलस्यार्थे कुलमर्य्यादारक्षार्थम, एकं कमपि पुत्रं… आत्मीयं, त्यजेत् परिहरेत, कस्याप्येकस्य आत्मीयस्य परित्यागेन यदि वंशः सुरक्षितो भवति, समूलविनाशाद्वा वंशः परिमुक्तो भवति, तदा तमेकं प… देवेत्यर्थः, ("त्यजेत कुलार्थे पुरुषम्" इति भारतोद्योगपर्व्वीयपाठान्तरम) ग्राम… स्वग्रामवासिनाम् उपकारार्थं, कुलं ज्ञातिकुटुम्बादिकं सर्व्वमेव, त्यजेत्, जन… देशस्य, अर्थे निमित्तं, देशरक्षार्थमित्यर्थः, ग्रामं त्यजेत्, ग्रामत्यागेनापि दे… विधेया इत्यर्थः, आत्मार्थे आत्महितार्थम, आत्मोन्नतिसाधनायेत्यर्थः, कामादिरि… कानामाक्रमणात् आत्मानं परित्रातुमिति भावः; पृथिवीं जगत, अपीति… सर्व्वस्वमपीति यावत्, किं पुनः ग्रामनगरादिकमिति भावः; त्यजेत् परि… इहलोकं परित्यज्य लोकान्तराश्रयणेनापि यदि आत्मानं रक्षितुं समर्थो … तदा तदपि कर्त्तव्यमेवेत्यर्थः। गुरुतरवस्तूनां रक्षार्थं लघुतरत्यागस्य समीचीन… इति भावः। लोभरिपुतः आत्मपरिरक्षणमेव मे प्रलोभनपूर्णग्रामादित्यागेन … वनागमने हेतुरित्याशयः।

(२१०) पानीयमिति।—निरायासं निः नास्ति, आयासः क्लेशो यत्र तादृ…

इत्यालोच्याहं (व) निर्जनवनमागतः। यतः,—

वरं वनं व्याघ्रगजेन्द्रसेवितं
द्रुमालयः पत्रफलाम्बुभक्षणम्।
तृणानि शय्या वसनञ्च वल्कलं
न बन्धुमध्ये धनहीनजीवनम्॥ २११॥

ततः (श) अस्मत्पुण्योदयात् (ष) अनेन मित्रेणाहं

---

अनायासलभ्यं, सार्वत्रिकत्वात् प्रयत्नं विनैव लभ्यमित्यर्थः, पानीयं जलं वा, भयोत्तरं भयं भीतिः, उत्तरं श्रेष्ठं, प्रबलमित्यर्थः, ("उदीच्यश्रेष्ठयोरूर्द्धे वाग्भेदे विदुरुत्तरम्" इति शाश्वतः) यत्र तादृशं, भयप्रधानमित्यर्थः, दारुणभयं स्वीकृत्यापि बह्वायासेन सङ्गृहीतमिति यावत्, स्वादु सुरसम्, अन्नं भक्ष्यं वस्तु वा, सुखमिति शेषः, इति विचार्य्य एतदुभयोः किमधिकं सुखकरमिति मनसि वितर्क्य इत्यर्थः, पश्यामि खलु आलोकयामि तावत्, एवं हि निश्चिनोमीत्यर्थः, यत्र उक्तविधान्नपानयोर्मध्ये यस्मिन् वस्तुनि, निर्वृतिः चित्तस्य शान्तिः, तत् सुखं सुखकरं, क्लेशावहपरोपासनालभ्यात् स्वादुनोऽन्नात् स्वेच्छालभ्यं पानीयमात्रमपि सुखाय भवतीत्यर्थः।

(व) निर्जनवनं—मानवसमागमरहितमरण्यम्।

(२११) वरमिति।—अत्र "यत्र" इति पदमध्याहार्य्यम्; यत्र द्रुमालयः द्रुमः वृक्ष एव, आलयः आवासः, गृहस्वरूप इत्यर्थः, पत्रफलाम्बूनि एव भक्षणं भोज्यं, तृणानि शय्या शयनीयं, वल्कलञ्च वृक्षत्वगेव, वसनं परिधेयं, तादृशं व्याघ्राश्च गजेन्द्राश्च तैः सेवितम् अधिष्ठितं, हिंस्रप्राणिसङ्कुलं, वनम् अरण्यमपि, वरं श्रेष्ठं, वासाय इति भावः; यद्वा—व्याघ्रगजेन्द्रसेवितं वनम्, अपीति शेषः, वरं प्रियं, तथा द्रुमाणां वृक्षाणाम् आलयः वृक्षपूर्णो निवासः वृक्षतलवासो वा इत्यर्थः, पत्राणि फलानि अम्बु च तेषां भक्षणं (पत्रफलाम्बुभक्षणमिति वा पाठः) तथा तृणानि वासाः, शय्या शयनं, वल्कलं वृक्षत्वक्, च, वसनं वस्त्रं, (परिधानवल्कलमित्यपि पाठः) एतत् सर्व्वमपि वरमिति मन्ये, तथाऽपि बन्धुमध्ये बान्धववेष्टिते नगरे, धनहीनजीवनं सम्पत्तिहीनमवस्थानं, न, वरमिति शेषः। वंशस्थविलं वृत्तम्।

(श) अस्मत्पुण्योदयात्—मम पुण्यप्रकाशात्, पापक्षयानन्तरं प्राक्तनसुकृतफलभोगसमयाविर्भावादित्यर्थः।

(ष) अनेन—पार्श्वस्थेन लघुपतनकेन।

(स) स्नेहानुवृत्त्याऽनुगृहीतः। अधुना च (ह) पुण्यपरम्परया भवदाश्रयः स्वर्ग एव मया प्राप्तः। यतः,—

संसारविषवृक्षस्य द्वे एव मधुरे फले।
काव्यामृतरसास्वादः सङ्गमः सज्जनैः सह ॥२१२॥

अपरञ्च,—सत्सङ्गः केशवे भक्तिर्गङ्गाम्भसि निमज्जनम्।
असारे खलु संसारे त्रीणि साराणि भावयेत्" ॥२१३॥

[ इति चूड़ाकर्ण-वीणाकर्णनामकपरिव्राजककथा ]।

मन्थर उवाच,—

"अर्थाः पादरजोपमा गिरिनदीवेगोपमं यौवनं
मानुष्यं जलबिन्दुलोलचपलं फेनोपमं जीवनम्।

---

(स) स्नेहानुवृत्त्या—स्नेहेन अनुवृत्तिः प्रवाहरूपेण अनुसरणं तया, प्रदर्श्य सततं मदनुगमनेनेत्यर्थः; स्नेहस्य अनुवृत्तिः अनुबन्धः, सातत्येनावस्थानं निरन्तरस्नेहप्रदर्शनद्वारा इत्यर्थो वा, सस्नेहानुकूल्येन इत्यर्थो वा।

(ह) पुण्यपरम्परया—अविच्छिन्नसुकृतधारया।

(२१२) संसारेति।—संसारः एव विषवृक्षः तस्य क्लेशबहुलस्य संसारस्य द्वे एव फले मधुरे स्वादुनी, न सर्वाणीति भावः; भवत इति शेषः, ("रसवन्ती" इति पाठान्तरम्) के ते ? इत्याह,—काव्यमेवामृतं तस्य रसः माधुर्यरूपः, आस्वादः अनुभूतिः, तथा सज्जनैः साधुभिः, सह सङ्गमः संसर्गः, मेलनम् इत्यर्थः। ("संसारकूटवृक्षस्य द्वे फले अमृतोपमे। सुभाषितरसास्वादः सङ्गतिः सुजनैः सह" इति वृद्धचाणक्ये पाठान्तरम्)

(२१३) सत्सङ्ग इति।—असारे तुच्छे, क्षणभङ्गुरे इति भावः, संसारे जगति, सत्सङ्गः साधुसंसर्गः, केशवे नारायणे, भक्तिः अनुरागः, गङ्गाम्भसि गङ्गाजले निमज्जनं स्नानञ्च, इति एतानि त्रीणि खलु निश्चितं, साराणि स्थिराणि, महत्त्वपूर्णानि इति यावत्, भावयेत् चिन्तयेत्।

(२१४) अर्था इति।—अर्थाः धनानि, पादरजोपमाः पादस्य रजः धूलिः उपमा येषां ते तथोक्ताः, पादधूलिसदृशा अतितुच्छा इत्यर्थः, [ रञ्जयतेः कप्रत्यये ... शब्दोऽयं अदन्तः पुंलिङ्गश्च। "पुण्ये वेशे गुणे चैव रजोऽयं रजसा सह" इति उत्पलिनी "रजोऽयं रजसा सार्द्धं स्त्रीपुष्पगुणधूलिषु" इत्यनयश्च ]। यौवनं यौवनावस्था, ...

धर्मं यो न करोति निश्चलमतिः स्वर्गार्गलोद्घाटनं
पश्चात्तापहतो जरापरिणतः शोकाग्निना दह्यते ॥२१४॥

युष्माभिरतिसञ्चयः कृतः, तस्यायं दोषः । शृणु,—

उपार्जितानां वित्तानां त्याग एव हि रक्षणम् ।
तडागोदरसंस्थानां परीवाह इवाम्भसाम् ॥२१५॥

अन्यच,—यदधोऽधः क्षितौ वित्तं निचखान मितम्पचः ।
तदधोनिलयं गन्तुं चक्रे पन्थानमग्रतः ॥ २१६ ॥

---

नद्याः [ अत्र षत्वविधेर्वैकल्पिकत्वात् गिरिषदी इत्येवं पदमपि भवति ] निर्झरिण्याः, पार्व्वत्यनद्याः इत्यर्थः, वेगः स्रोतः, स उपमा यस्य तत् क्षणस्थायि, गिरिनदीप्रवाहो यथा अकस्मात् समागत्य शीघ्रमेव शोषं याति, यौवनमपि तथेत्यर्थः, मानुष्यं मनुष्यता, शूरत्वविद्वत्त्वादिकमिति यावत्, जलबिन्दुवत् वारिबिन्दुवत्, लोलचपलम् अतिशयचञ्चलमित्यर्थः, विनश्वरमिति यावत्, जीवनम् आयुः, फेनोपमं फेनसदृशम्, उत्थाय विलयनशीलमित्यर्थः, अतः यो जनः निश्चलमतिः स्थिरबुद्धिः सन्, दृढसङ्कल्पः सन्नित्यर्थः, स्वर्गार्गलोद्घाटनं स्वर्गद्वारमोचकं, धर्मं न करोति नाचरति, जराऽऽगमनात् प्रागेवेति भावः, जरापरिणतः जीर्णः, जरया शिथिलीकृताङ्गः इत्यर्थः, स जनः इति शेषः, पश्चात्तापहतः अनुतापाक्रान्तचित्तः सन्, शोकाग्निना शोकदहनेन, दह्यते अन्तर्भस्मीक्रियते, एवमचिरस्थायिधनादिषु यत्नं विहाय चिरस्थायिनि धर्मे मतिः कर्त्तव्या इति भावः। शार्दूलविक्रीडितं वृत्तम्।

(२१५) उपार्जितानामिति।—तडागोदरसंस्थानां सरोवरमध्यस्थितानाम्, अम्भसां जलानां, प्रवृद्धानामिति भावः, परीवाहः जलोच्छ्वास इव, किञ्चिन्निःसारणमिवेत्यर्थः, ( "परीवाहः" इत्यत्र "परिस्रवः" इति वृद्धचाणक्योक्तपाठः ) उपार्जितानां सङ्गृहीतानां, लब्धानाम् इत्यर्थः, वित्तानां धनानां, त्यागः सत्पात्रे विनियोगः एव, रक्षणं सञ्चयः हि, न तु पेटकादिषु रक्षणं रक्षणमिति भावः, यथा गभीरतडागस्य मध्ये प्रभूतजले सञ्चिते सति तस्मात् किञ्चिज्जलनिःसारणेनैव सर्वस्य जलराशेः रक्षणं भवति, तथा उपार्जितस्य धनस्य योग्यपात्रे वितरणमेव जन्मान्तरलभ्यत्वात् प्रकृतरक्षणं, न तु भूगर्भादौ स्थापनं तस्य रक्षणमिति भावः।

(२१६) यदिति।—मितं परिमितं पचतीति [ खच् ] मितम्पचः अल्पमात्रपाचकः, आत्मम्भरिः कृपण इत्यर्थः, क्षितौ भूतले, अधोऽधः सर्वाधस्तात्, सुगभीर-

यतः,—निजसौख्यं निरुन्धानो यो धनार्जनमिच्छति।
परार्थभारवाहीव स क्लेशस्यैव भाजनम् ॥२१७॥

तथा चोक्तम्,—दानोपभोगहीनेन धनेन धनिनो यदि।
भवामः किं न तेनैव धनेन धनिनो वयम्?॥

दानोपभोगहीनाश्च दिवसा यान्ति यस्य वै।
स कर्म्मकारभस्त्रेव श्वसन्नपि न जीवति ॥२१९

गर्त्तं कृत्वेत्यर्थः, यत् वित्तं धनं, निचखान धातूनामनेकार्थत्वात् निहितवान्। ("वित्तम्" इत्यत्र "गर्त्तम्" इति पाठकल्पना साध्वी) तत् धनम्, अयतः प्र स्थापयितुः जीवनावस्थायामेव इत्यर्थः, अधोनिलयं पातालं, गन्तुं पन्था चक्रे, तदेव खनकस्य पातालप्रवेशाय मार्गरूपेण परिणतं भवतीत्यर्थः। दा कृपणः न कदापि सद्गतिं लभते, तस्याधोगतिरेव इत्याशयः।

(२१७) निजेति।—यो जनः, निजस्य सौख्यं निजसौख्यं स्वकीयं सु निरुन्धानः निरुन्धन्, आत्मानं क्लेशयित्वेत्यर्थः, धनार्जनं धनसञ्चयम्, इच्छति लषति, स आत्मपीड़क इत्यर्थः, परार्थं परनिमित्तं, भारवाही भारोद्व इव, गर्द्दभः इव इत्यर्थः, क्लेशस्यैव केवलं दुःखस्यैव, न तु उपभोगस्येति। भाजनम् आस्पदं, भवतीति शेषः।

(२१८) दानेति।—यदि, नराः इति कर्त्तृपदमूहनीयम्; दानोपभोग दानस्य उपभोगस्य ताभ्यां हीनं तेन त्यागभोगरहितेन, अदत्तेन अभुक्तेन धनेन अर्थेन, धनिनः आढ्याः, भवन्ति इति शेषः, तदा तेन एव धनेन रसम्भीकृत्य तस्य धनिनो मणिरत्नादिना, वयं धनिनः ऋद्धिमन्तः, किं भवामः? यदि लोका धनमर्ज्जयित्वा स्वयं न भुञ्जते, दरिद्रेभ्यश्च न केवलं सञ्चिन्वन्ति, अथच आत्मानं धनिनं मन्यन्ते, तदा भूगर्भस्थितेन तेन वयमपि आत्मानं धनिनं मन्यामहे, तत्र धनिनः निर्द्धनस्यापि तुल्यत्वात् इति। ("भवामः किं न तेनैव" इत्यत्र "पृथ्वीखातनिखातेन" इति वा पाठः)

(२१९) दानेति।—यस्य च जनस्य, दिवसाः दानेन वितरणेन, उपभो हीनाः वर्जिताः, दानोपभोगौ विनेत्यर्थः, यान्ति अतिवर्त्तन्ते, वै इति पूरणार्थं सः नरः, कर्म्मकारस्य भस्त्रा चर्म्मप्रसेविका, (हापर) अग्निप्रधमनचर्म्ममयथली इव इत्यर्थः, श्वसन् निश्वसन् अपि, न जीवति; स जीवन्मृत इवेत्यर्थः; कर्म्मकारभस्त्राया जीवितलक्षणं निश्वासरूपी वायुर्निःसरति, अपि तु सा चर्म्ममयी

धनेन किं ? यो न ददाति नाश्नुते
बलेन किं ? यस्य रिपून् न बाधते ।
श्रुतेन किं ? यो न च धर्म्ममाचरेत्
किमात्मना ? यो न जितेन्द्रियो भवेत् ॥२२०॥

न्यच्च,—असम्भोगेन सामान्यं कृपणस्य धनं परैः ।
अस्येदमिति सम्बन्धो हानौ दुःखेन गम्यते ॥२२१॥

पिच,—न देवाय न विप्राय न बन्धुभ्यो न चात्मने ।
कृपणस्य धनं याति वह्नितस्करपार्थिवैः ॥ २२२॥

---

या किमपि प्राणिकार्य्यं न कर्त्तुमर्हति, तद्वद् दानोपभोगहीनः पुरुषोऽपि कर्त्तव्यर्म्माकरणात् जीवनलक्षणं श्वासं त्यजन्नपि मृतवदेव तिष्ठति इति भावः ।

(२२०) धनेनेति ।—यः धनी, न ददाति सत्पात्रे न प्रतिपादयति, न चश्नुते धातूनामनेकार्थत्वात् न उपभुङ्क्ते, ("यो न ददाति याचके" इति वा पाठः) स्य तादृशेन धनेन किम् ? किं कार्य्यम् ? सम्पद्यते इति सर्व्वत्रोह्यम् । यस्य बलान्, रिपून् शत्रून्, न बाधते न पराजयते, तस्य बलेन शक्त्या किम् ? यस्य विद्वान्, र्मं न आचरेत् न कुर्य्यात्, तस्य श्रुतेन शास्त्राध्ययनेन, किम् ? यः जीवः, न जितेन्द्रियः संयमी, भवेत्, तस्य आत्मना जीवनेन, किम् ? न किमपि प्रयोजनमित्यर्थः । ("यः" "यस्य रिपून्" "यो न च" "भवेत्" इत्येतेषु भारतशान्तिपर्व्वीयमोक्षधर्म्मव्याख्यानप्रकरणे "यत्" "येन रिपुं" "येन न" "वशी" इत्येतानि पाठान्तराणि)। वंशस्थविलं वृत्तम् ।

(२२१) असम्भोगेनेति ।—कृपणस्य व्ययकुण्ठस्य, धनम् असम्भोगेन उपभोगविरहेण, अनुपभुक्तत्वादित्यर्थः, परैः अन्यस्वामिकैर्धनैरित्यर्थः, सामान्यं तुल्यम्, उभयोरपि धनयोरुपभोगाक्षमत्वादिति भावः । उभयोरपि सामान्ये कस्तस्याधिकारिविज्ञानोपायः ? इत्याह, अस्येति ।—हानौ चौरादिभिरपहरणेन धननाशे सति, दुःखेन कृपणस्य धनस्वामिनः मनःपीड़या, अस्य कृपणस्य, इदं धनं, कृपणस्वामिकमिदं धनमिति, सम्बन्धः सम्पर्कः, गम्यते ज्ञायते, नान्यथेत्यर्थः ।

(२२२) नेति ।—कृपणस्य उचितव्ययकुण्ठस्य, धनं देवाय देवप्रीत्यर्थं यागाद्यनुष्ठानाय, न, विप्राय ब्राह्मणाय, न, बन्धुभ्यो बन्धूनामुपकारार्थं, न, आत्मने आत्मनः भोगार्थञ्च, न याति न व्ययितं भवति इत्यर्थः, अपि तु वह्नितस्करपार्थिवैः अग्निचौरनृपैः, ग्रस्यते इति शेषः ।

अन्यच,—दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति॥

तथा चोक्तम्,—
दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमाऽन्वितं शौर्यम्।
त्यागसहितञ्च वित्तं दुर्लभमेतच्चतुर्भद्रम् ॥२२४॥

अन्यच,—कर्त्तव्यः सञ्चयो नित्यं कर्त्तव्यो नातिसञ्चयः।
पश्य सञ्चयशीलोऽसौ धनुषा जम्बुको हतः" ॥ २२[५]

तावाहतुः,—"कथमेतत् ?"। मन्थरः कथयति।—

व्याध-मृग-शूकर-सर्प-जम्बुककथा।—

"आसीत् (क) कल्याणकटकवास्तव्यो भैरवो नाम व्या[धः]

---

(२२३) दानमिति।—वित्तस्य धनस्य. दानं सत्पात्रे वितरणं, [भो]गः, नाशः क्षयः, चौरादिभिरपहरणमिति यावत्, तिस्रः एताः त्रिविधाः अवस्थाः, भवन्ति ; यः न ददाति न वितरति, न च भुङ्क्ते न च [उप]... तस्य जनस्य, धनस्य इति शेषः, तृतीया नाशरूपा, अग्नितस्करादिभिर्नाश[रूपा] गतिर्दशा, भवति। आर्य्या वृत्तम्।

(२२४) दानमिति।—दानं वितरणं, प्रियवाक्सहितं मधुरवाक्युक्तं शोभते इत्यूहनीयम् ; ज्ञानं शास्त्रबोधः, पाण्डित्यम् इत्यर्थः, अगर्वम् अहङ्का[ररहितं], शौर्य्यं शूरता, क्षमाऽन्वितं तितिक्षासहितं, वित्तं धनञ्च, त्यागसहितं सत्पात्र[दान]युक्तम् ; एतत् पूर्वोक्तं, चतुर्णां भद्राणां मङ्गलानां समाहारः चतुर्भद्रं कल्याण[करं] चतुर्विधं सद्व्यवहारमित्यर्थः, दुः दुःखेन लभ्यते यत् तत् दुर्लभं दुष्प्रापं, [न] कुत्रचित् दृश्यते इति भावः। आर्य्या वृत्तम्।

(२२५) कर्त्तव्य इति।—नित्य प्रत्यहं, सञ्चयः धनसङ्ग्रहः, व्ययशे[षं] किञ्चित् किञ्चित् रक्षणमित्यर्थः, कर्त्तव्यः विधेयः, किन्तु अतिसञ्चयः आत्मानं [प्रति] अधिकसङ्ग्रहः, न कर्त्तव्यः ; पश्य जानीहीत्यर्थः, असौ वक्ष्यमाणकथायां इत्यर्थः, सञ्चयशीलः अतिसञ्चयी, जम्बुकः शृगालः, धनुषा कार्मुकेण, हतः [नि]...

(क) कल्याणकटकवास्तव्यः,—कल्याणकटकं तदाख्यं स्थानं, तत्र वास्तव्यः, कल्याणकटकं वास्तव्यं वसतिस्थानं यस्य इति वा, कल्याणकटकवासी [ वसतेः तव्यत् ]।

स चैकदा (ख) मांसलुब्धः धनुरादाय मृगमन्विष्यन् विन्ध्याटवीमध्यं गतः। तत्र तेन मृग एको व्यापादितः। ततो मृगमादाय गच्छता तेन (ग) घोराऽऽकृतिः शूकरो दृष्टः। ततस्तेन मृगं भूमौ निधाय शूकरः शरेण हतः। शूकरेणाप्यागत्य (घ) प्रलयघनघोरगर्जनं कुर्वाणेन स व्याधो (ङ) मुष्कदेशे हतः (च) छिन्नद्रुम इव पपात। तथा चोक्तम्,—

जलमग्निर्विषं शस्त्रं क्षुद् व्याधिः पतनं गिरेः।
निमित्तं किञ्चिदासाद्य देही प्राणैर्विमुच्यते॥ २२६॥

अथ तयोः पादाऽऽस्फालनेन एकः सर्पोऽपि मृतः। अत्रान्तरे (छ) दीर्घरावो नाम जम्बुकः परिभ्रमन्नाहारार्थी तान् मृतान् मृगव्याधसर्पशूकरान् अपश्यत्, आलोक्याचिन्तयच्च,—"अहो भाग्यम्! अद्य (ज) महद्भोज्यं मे समुपस्थितम्। अथवा,—

अचिन्तितानि दुःखानि यथैवाऽऽयान्ति देहिनाम्।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते॥ २२७॥

---

(ख) मांसलुब्धः,—मांसाय पललाय लुब्धः, आमिषलोलुपः।

(ग) घोराऽऽकृतिः,—घोरा भीषणा, आकृतिराकारो यस्य सः भयानकरूपः।

(घ) प्रलयघनघोरगर्जनं—प्रलये कल्पान्ते, यो घनः मेघः, तस्येव घोरं भयङ्करं, गर्जनं नादम्।

(ङ) मुष्कदेशे हतः,—अण्डकोषे आक्रान्तः। [ प्रपच्छेदे ७मी० ]।

(च) छिन्नद्रुम इव—उन्मूलितवृक्ष इवेत्यर्थः।

(२२६) जलमिति।—जलम् अग्निः विषं शस्त्रं क्षुत् क्षुधा, व्याधिः रोगः, गिरेः पर्वतात्; अत्र "गिरेः" इति उन्नतस्थानमात्रस्योपलक्षणं, तेन गिरितुल्योच्चस्थानादित्यर्थः, पतनं विच्युतिः, भृगुपतनम् इत्यर्थः, एतेषां किञ्चित् किमपि, निमित्तं कारणम्, आसाद्य प्राप्य, देही शरीरी, प्राणैर्विमुच्यते वियुज्यते, म्रियते इत्यर्थः, मृत्यौ एतेषामेकतमं हेतुर्भवतीति निष्कर्षः।

(छ) दीर्घरावः,—दीर्घः उच्चैः, रावः शब्दः यस्य सः।

(ज) महत् भोज्यं—प्रचुरं खाद्यम्।

(२२७) अचिन्तितानीति।—देहिनां शरीरिणां, दुःखानि यथा यद्वत्,

भवतु, एषां मांसैः (झ) मासत्रयं समधिकं भोज

भविष्यति,—

मासमेकं नरो याति द्वौ मासौ मृगशूकरौ ।

अहिरेकं दिनं याति अद्य भक्ष्यो धनुर्गुणः ॥ २२८ ॥

ततः (ञ) प्रथमबुभुक्षायामिदं (ट) निःस्वादु (ठ) कोद

टनीलग्नं (ड) स्नायुबन्धनं खादामि ।" इत्युक्त्वा (ढ)

अकरोत् । ततश्छिन्ने स्नायुबन्धने द्रुतम् उत्पतितेन

---

अचिन्तितानि एव अनालोचितानि एव, अतर्कितान्येवेत्यर्थः, आयान्ति उपा सुखानि अपि तथा अचिन्तितान्येव आयान्तीत्यर्थः, अत्र अस्मिन् सुखदुःख विषये, दैवं विधिः, भाग्यमित्यर्थः, ("दैवं दिष्टं भागधेयं भाग्यं स्त्री नियति इत्यमरः) अतिरिच्यते अतिशय्यते, सर्वं प्रतिबन्धमभिभूय स्वयमेव प्रवर्त इत्यर्थः, [अति+रिच+कर्म्मकर्त्तरि लट्] इति मन्ये विचारयामि, अहमिति दैवप्रातिकूल्यं दुःखस्य दैवानुकूल्यञ्च सुखस्य कारणमिति भावः ।

(झ) मासत्रयं—त्रिमासं व्याप्य, ["कालाध्वनोरत्यन्तसंयोगे" (२।३। इति द्वितीया]। मासत्रयमित्यतः परं "मे सुखेन गमिष्यति" इति पाठान्तरं समधिकं—प्रचुरम् । यद्वा—समधिकं मासत्रयं—मासत्रयाधिकमित्यर्थः ।

(२२८) मासमिति ।—नरः व्याधः इति यावत्, एकं मासं व्याप्य, याति गच्छति, मृगशूकरौ द्वौ मासौ, यातः इति शेषः, अहिः सर्पः, एकं दिनं व्याप्य, भक्ष्यत्वं प्राप्नोति, अद्य अस्मिन्नहनि, धनुर्गुणः धनुषो मौर्वी, भक्ष्यः भक्षणीयः, धनुर्गुणं भक्षयित्वैव दिनमतिवाहयामीत्यर्थः ।

(ञ) प्रथमबुभुक्षायां—प्रथमक्षुधायां, अतिप्रबलक्षुधाकाले इत्यर्थः ।

(ट) निःस्वादु—विरसम् ।

(ठ) कोदण्डाटनीलग्नं—धनुष्कोटिस्थितं, धनुषः अग्रभागस्थमित्यर्थः ।

(ड) स्नायुबन्धनं—स्नायवः अङ्गप्रत्यङ्गसन्धिबन्धनभूतदेहान्तर्वर्त्तिसूक्ष्म विशेषाः, ताभिः बन्धनं तत्कृतग्रन्थिः, कोटिदेशे गुणस्य दृढ़तया संयमनार्थं तन्तुविशेषमित्यर्थः ; प्रबलक्षुधोद्रेके निःस्वादु अपि स्वादुवत् रोचते, अत एव अपि स्नायुः कोटिलग्ना अतीवक्षुधार्त्ताय मह्यमिदानीं स्वदते एव इति भावः ।

(ढ) तथा—स्नायुबन्धनभक्षणमित्यर्थः, स्नायुबन्धनभक्षणाय दन्तैश्छेदनं भावः । ("तथा प्रकरोत्" इत्यत्र "तथा कृते सति" इति पाठान्तरम्)।

हृदि (थ) निर्भिन्नः स दीर्घरावः पञ्चत्वं गतः। अतोऽहं ब्रवीमि,—"कर्त्तव्यः सञ्चयो नित्यम्" इत्यादि।

[ इति व्याध-मृग-शूकर-सर्प-जम्बुककथा ]।

तथाच,—यद्ददाति यदश्नाति तदेव धनिनो धनम्।
अन्ये मृतस्य क्रीड़न्ति दारैरपि धनैरपि॥ २२९॥

किञ्च,—यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने।
तत्ते वित्तमहं मन्ये सेव्यं कस्यापि रक्षसि॥ २३०॥

यातु, किम् इदानीम् (त) अतिक्रान्तोपवर्णनेन? यतः,—
नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम्।
आपत्स्वपि न मुह्यन्ति नराः पण्डितबुद्धयः॥ २३१॥

(थ) निर्भिन्नः,—विदारितः।

(२२९) यदिति।—यत् धनं, ददाति वितरति, यच्च अश्नाति स्वयम् उपभुङ्क्ते, धनिनः धनस्वामिनः, तदेव दत्तं भुक्तञ्च धनमेव, धनं वित्तं, सार्थकं धनमित्यर्थः, भवतीति शेषः, न तु सञ्चितं धनं धनपदवाच्यमित्येवकारार्थः; यतः अन्ये जनाः, मृतस्य धनिनः, दारैरपि कलत्रैरपि, धनैर्वित्तैरपि, क्रीड़न्ति रमन्ते, कृपणा धनिनः धनं सञ्चित्य अदत्त्वा अनुपभुज्य च म्रियन्ते, अपरे तद्धनदारान् उपभुञ्जते इत्यर्थः।

(२३०) यदिति।—दिने दिने प्रतिदिनं, विशिष्टेभ्यः सत्पात्रेभ्यः इति यावत्, यत् धनं, ददासि यच्छसि, यच्च अश्नासि उपभोगादिना व्ययं नयसि, तत् एव वित्तं ते तव, इति अहं मन्ये जानामि, रक्षसि सञ्चिनोषि, यदिति शेषः, तत् कस्यापि त्वदन्ते अन्यस्य कस्यापि, सेव्यं भोग्यं, भविष्यतीति शेषः। "सेव्यम्" इत्यत्र "शेषम्" इत्यपि पाठः,—तव दानाशनातिरिक्तमित्यर्थः।

(त) अतिक्रान्तोपवर्णनेन—अतिक्रान्तस्य अतीतस्य, उपवर्णनं प्रस्तावक्रमेण कथनम्, आलोचनमित्यर्थः, तेन, विगतविषयाऽऽलोचनया इत्यर्थः।

(२३१) अतिक्रान्तोपवर्णनं निष्प्रयोजनमिति स्ववचनं समर्थयितुं महाभारतीयोद्योगपर्ब्ववचनं प्रमाणयति, नेति।—पण्डितबुद्धयः धीरमतयः, विवेकधीसम्पन्ना इत्यर्थः, नराः मनुष्याः, अप्राप्यं दुर्लभं वस्तु, प्राप्तिसम्भावनाविरहितं वस्तु इत्यर्थः, न अभिवाञ्छन्ति न प्रार्थयन्ते, नष्टं लुप्तं, मृतमपहृतं विध्वस्तञ्चेत्यर्थः,

तत् सखे ! सर्वदा त्वया (थ) सोत्साहेन भवितव्यम्। यतः

शास्त्राण्यधीत्यापि भवन्ति मूर्खा
यस्तु क्रियावान् पुरुषः स विद्वान्।
सुचिन्तितञ्चौषधमातुराणां
न नाममात्रेण करोत्यरोगम् ॥ २३२ ॥

अन्यच्च,—न स्वल्पमप्यध्यवसायभीरोः
करोति विज्ञानविधिर्गुणं हि।
अन्धस्य किं हस्ततलस्थितोऽपि
प्रकाशयत्यर्थमिह प्रदीपः ? ॥ २३३ ॥

---

शोचितुं तदर्थं शोकं कर्त्तुं, न इच्छन्ति न अभिलषन्ति, तथा घोर विपत्कालेषु अपि, न मुह्यन्ति न मोहमाप्नुवन्ति ; ये एवम्भूता ते एव इत्यर्थः ; अत एव अतिक्रान्तोपवर्णनेनालमिति भावः।

(थ) सोत्साहेन—उत्साहः अध्यवसायः, तेन सह वर्त्तमानः तेन अध्यव इत्यर्थः।

(२३२) भारतीयवनपर्वोक्तश्लोकमवलम्ब्य सोत्साहं क्रियावन्तं स्तौति, शा णीति।—लोकाः शास्त्राणि वेदादीनि, अधीत्यापि पठित्वाऽपि, सुतशीला अपि मूर्खाः अविद्वांसः, शास्त्रविहितस्य अननुष्ठानादिति भावः, भवन्ति, यस्तु क्रियावान् शास्त्राणि अनुसृत्य यागश्राद्धाद्यनुष्ठानवान्, स एव विद्वान् प्रकृत अनुष्ठानं विना धर्म्मशास्त्रपाठमात्रं न मूर्खत्वपरिहारहेतुरित्यर्थः। तथाहि भेषजं, सुचिन्तितञ्च सम्यक् विचारितम् अपि, यथाव्याधि निर्णीतमपीत्यर्थः मात्रेण केवलनामोल्लेखेन, यथाविधि सेवनं विनेति भावः ; आतुराणां रोगि अरोगं रोगाभावं, रोगशान्तिमित्यर्थः, न करोति ; आचारपरायण एव वि आचारविहीनः शास्त्रज्ञोऽपि मूर्ख इति निष्कर्षः। (अस्यानुरूपश्लोको यथा वनपर्वणि—"पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः। सर्वे व्यसनिनो य: क्रियावान् स धार्मिकः" ॥ इति)। उपजातिः वृत्तम्।

(२३३) नेति।—विज्ञानविधिः विज्ञानशास्त्रोक्तक्रमः, शिल्पविषयकं वि विषयकं वा ज्ञानमित्यर्थः, अध्यवसायात् अनुष्ठानात्, भीरोः पराङ्मुखस्य, वि योगस्य इत्यर्थः, स्वल्पमपि स्तोकमपि, गुणम् उपकारं, न हि करोति, कार्यं

तदत्र सखे! (द) दशाऽतिशेषेण शान्तिः करणीया। एतदप्यतिकष्टं त्वया न मन्तव्यम्,—

सुखमापतितं सेव्यं दुःखमापतितं तथा।
चक्रवत् परिवर्त्तन्ते दुःखानि च सुखानि च॥ २३४॥

अपरञ्च,—निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः।
सोद्योगं नरमायान्ति विवशाः सर्वसम्पदः॥ २३५॥

---

योगाभावात् स विज्ञानविधिः न उपकाराय प्रभवतीति भावः; तथाहि इह भूतले, अन्धस्य दृष्टिहीनस्य जनस्य, हस्ततलस्थितोऽपि करतलगतोऽपि, अतिसन्निकृष्टोऽपीत्यर्थः, किं पुनर्दूरस्थ इत्यपिशब्दार्थः, प्रदीपः वर्त्तिका, अर्थं वस्तु, प्रकाशयति प्रकटयति किम्? करतलस्थेनापि दीपेनान्धो वस्तुजातं द्रष्टुं शक्नोति किम्? नैवेत्यर्थः; अन्धस्य प्रदीप इव अनध्यवसायस्य विज्ञानविधिः निरर्थक एवेति भावः। उपजातिः वृत्तम्।

(द) दशाऽतिशेषेण—दशायाः अवस्थायाः, अतिशेषः अतिक्रमणं तेन, अवस्थायाः परिवर्त्तनशीलतां विविच्येत्यर्थः; यद्वा—अतिशयेन शेषः अतिशेषः चरमविपर्य्यय इत्यर्थः, दशाया अतिशेषेण चरमविपर्य्ययेण, अतिदुःखाऽऽवहदशयाऽपीत्यर्थः। ("दशाविशेषे" इति पाठान्तरम्)। करणीया—विधेया, अवलम्बनीयेत्यर्थः।

(२३४) भारतशान्तिपर्वीयमोक्षधर्मोक्तश्लोकस्य छायामुपजीव्य सुखदुःखयोरनियतत्वाच्चित्वमाह, सुखमिति।—आपतितम् उपस्थितं, सुखं, तथा आपतितम् उपस्थितं, दुःखञ्च सेव्यम् उपभोग्यं, यथाऽऽगतं सुखं दुःखञ्चानुभवेदित्यर्थः, दुःखानि च सुखानि च चक्रवत् रथचक्राणीव, परिवर्त्तन्ते अविरतं भ्राम्यन्ति, दिवारात्रिशुक्लकृष्णपक्षादिवत् आयान्ति च यान्ति चेत्यर्थः; कदाचित् एकः सुखम् अन्यो दुःखमनुभवति, पुनः कदाचित् स सुखी दुःखं दुःखी च सुखमनुभवति, इत्येव संसाररीतिः, अतः यथाऽऽगतं सुखं दुःखञ्चोभयमपि सेव्यमिति भावः। भारते वनपर्वणि शान्तिपर्वणि च अस्य बहवः पाठभेदाः दृश्यन्ते।

(२३५) निपानमिति।—मण्डूकाः भेकाः, निपानं गवादिपशूनां पानार्थं कृतं कूपसमीपवर्त्तिक्षुद्रजलाशयम् इव, ("आहावस्तु निपानं स्यादुपकूपजलाशये" इत्यमरः) अण्डजाः पक्षिणः, हंसकारण्डवादय इति यावत्, पूर्णं प्रभूतजलं, सरः इव, सर्वसम्पदः सर्वाः सम्पत्तयः, विवशाः गुणानुरागेण वशीभूताः सत्यः, सोद्योगम् उद्योगिनं, नरं पुरुषम्, आयान्ति आश्रयन्ति। उक्तञ्च "उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः" इति।

अपि च,—उत्साहसम्पन्नमदीर्घसूत्रं
क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढसौहृदञ्च
लक्ष्मीः स्वयं याति निवासहेतोः ॥ २३६ ॥

विशेषतश्च,—
विनाऽप्यर्थैर्धीरः स्पृशति बहुमानोन्नतिपदं
समायुक्तोऽप्यर्थैः परिभवपदं याति कृपणः ।
स्वभावादुद्भूतां गुणसमुदयावाप्तिविषयां
द्युतिं सैंहीं किं श्वा धृतकनकमालोऽपि लभते ? ॥२

(२३६) उत्साहेति।—लक्ष्मीः सम्पदधिष्ठात्री देवी, निवासहेतोः न नार्थं, स्वयम् आत्मनैव, उत्साहसम्पन्नम् उद्योगिनम्, अदीर्घसूत्रं चिरक्रियता कार्य्यसम्पादने अनलसमिति यावत्, क्रियाविधिज्ञम् अनुष्ठाननियमविदं, यदा प्रारब्धे कृते निष्पादनीयं कर्म सुखसम्पाद्यं भवेत् तदभिज्ञमित्यर्थः, व्यसने मृगयादिषु, असक्तम् अनासक्तं, शूरं साहसिकं, कृतज्ञं कृतवेदिनं, पूर्वोप प्रति उपकुर्वन्तमिति यावत्, दृढसौहृदं सर्वप्राणिषु मित्रेषु वा अविचलप्रणयशा जनमिति शेषः, याति गच्छति, आश्रयति इत्यर्थः ; एवंविधलक्षणाक्रान्तः पुरुष नान्विष्यति, परन्तु लक्ष्मीः स्वयमेव तमन्विष्य आश्रयतीति भावः ; उत्साहशी कदाऽपि हतश्रीः न भवतीति निष्कर्षः । उपजातिः वृत्तम् ।

(२३७) विनेति।—धीरः पण्डितो जनः, अर्थैर्विनाऽपि धनानि वि बहुमानोन्नतिपदं बहुमानः लोकादरः, उन्नतिरभ्युदयस्तयोः पदं स्थानं, स्पृशति गुणवान् धनहीनोऽपि माननीयः उन्नतश्च भवतीत्यर्थः, कृपणः लघुचेताः, अर्थैः समायुक्तः सम्पन्नोऽपि, धनवानपि इत्यर्थः, परिभवपदम् अनादराऽऽस्पदत्वं, वि मित्यर्थः, याति प्राप्नोति। तथा हि श्वा कुक्कुरः, धृतकनकमालः सुवर्ण विभूषितोऽपि, स्वभावात् निसर्गतः, उद्भूतां प्रकाशमापन्नाम्, आजन्मसिद्धानि गुणसमुदयस्य शौर्य्यगाम्भीर्य्यादिगुणराशेः, अवाप्तिः प्राप्तिः, तस्याः विषयां स्थान समयगुणप्राप्तिसूचिकां, सैंहीं सिंहसम्बन्धिनीं, द्युतिं कान्तिं, लभते अधिग किम् ? नैवेत्यर्थः। शिखरिणी वृत्तम् ।

किञ्च,—

धनवानिति हि मदस्ते किं गतविभवो विषादमुपयासि ?
करनिहितकन्दुकसमाः पातोत्पाता मनुष्याणाम् ॥२३८॥

अपरञ्च,—अभ्रच्छाया खलप्रीतिर्नवशस्यानि योषितः ।
किञ्चित्कालोपभोग्यानि यौवनानि धनानि च ॥२३९॥

अन्यच्च,—वृत्त्यर्थं नातिचेष्टेत सा हि धात्रैव निर्मिता ।
गर्भादुत्पतिते जन्तौ मातुः प्रस्रवतः स्तनौ ॥२४०॥

अपि च, सखे ! शृणु,—
येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः ।
मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति ॥२४१॥

---

(२३८) धनवानिति ।—धनवान् धनशाली, इति हेतोः, ते तव, मदः गर्वः, किं कथम् ? गतविभवः निर्धनः सन्, किं कथं वा, विषादं दुःखम्, उपयासि प्राप्नोषि ? यतः, मनुष्याणां पातोत्पाताः पतनोत्थानानि, अवनत्युन्नतयः इत्यर्थः, करनिहितकन्दुकसमाः हस्तस्थितक्रीड़नकसदृशाः, भवन्तीति शेषः ; यथा करस्थितकन्दुकः कदाचित् ऊर्द्धमुत्पतति कदाचिच्च अधः पतति, तथा नरा अपि उन्नतिमवनतिञ्च लभन्ते इत्यर्थः, अतो दुःखं मा कार्षीरिति भावः । आर्य्या वृत्तम् ।

(२३९) अभ्रेति ।—अभ्रच्छाया मेघच्छाया, खलप्रीतिः खलेन सह प्रणयः, नवशस्यानि नवोत्पन्नानि माषमुद्गकलायादीनि, योषितः स्त्रियः, स्त्रीणां रूपमित्यर्थः, यौवनानि आत्मनस्तारुण्यानि, धनानि च किञ्चित्कालोपभोग्यानि अल्पकालमुपभोक्तुं योग्यानि, शीघ्रापगमशीलत्वात् न कोऽपि सुचिरमेतान् भोक्तुं समर्था इत्यर्थः ।

(२४०) वृत्त्यर्थमिति ।—वृत्त्यर्थं जीविकानिर्वाहार्थं, न अतिचेष्टेत अत्यर्थं यत्नं न कुर्वीत, हि यतः, सा वृत्तिः, धात्रैव स्रष्ट्रैव, निर्मिता निर्द्धारिता ; तथाहि, जन्तौ जीवे, गर्भात् जठरात्, उत्पतिते उत्पन्ने, निःसृते सति इत्यर्थः, मातुः जनन्याः, स्तनौ प्रस्रवतः क्षरतः, तज्जीवनार्थं विधातुरिच्छयैव इति भावः ।

(२४१) येनेति ।—येन विधात्रा, हंसाः शुक्लीकृताः शुभ्रवर्णाः कृताः, [ अभूततद्भावे च्विः ] शुकाः कीराश्च, हरितीकृताः हरिद्वर्णाः कृताः, ( "पालाशो हरितो हरित्" इत्यमरोक्तेः हरितशब्दात् च्विः ) येन च विधात्रा, मयूराः शिखण्डिनः,

अपरञ्च (ध) सतां रहस्यं शृणु, मित्र !—

जनयन्त्यर्जने दुःखं तापयन्ति विपत्तिषु।
मोहयन्ति च सम्पत्तौ कथमर्थाः सुखाऽऽवहाः ? ॥

अपरञ्च,—धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ २४३ ॥

---

चित्रिताः विचित्रवर्णाः कृताः, [ चौरादिकस्य चित्रधातोर्निष्ठा ] स ईदृशः ... घटनपटीयान् विधाता, ते तव, वृत्तिं जीविकां, विधास्यति सम्पादयिष्यति; ... विषये त्वया नैव चिन्ता करणीया इति भावः।

( ध ) सतां रहस्यं—सतां साधूनां, रहस्यं निगूढवचनम्, अर्थविषये ... स्वहृङ्गतमभिप्रायम् इत्यर्थः।

( २४२ ) भारतीयवनपर्वोक्तश्लोकमुपजीव्य सर्वास्वेवावस्थासु अर्थस्य ... वहत्वमाह, जनयन्तीति।—अर्थाः अर्जने उपार्जने, दुःखं क्लेशं, जनयन्ति उत्पा... विपत्तिषु नाशेषु, चौरादिभिरपहृतेषु इति यावत्, तापयन्ति क्लेशयन्ति, सम्पत्तौ च, आधिक्ये इत्यर्थः, मोहयन्ति चित्तविभ्रमं जनयन्ति, उपार्ज्जकं मादयन्तीति ... अतः कथं सुखाऽऽवहाः सुखकराः ? ये ईदृशाः अनर्थाऽऽवहाः ते सर्वथा दुःख... एवेत्यर्थः। ( क्वचित् पुस्तके एतस्य श्लोकस्य स्थाने श्लोकान्तरं दृश्यते ; तद् ... "अर्थानामर्ज्जने दुःखमर्ज्जितानाञ्च रक्षणे। नाशे दुःखं व्यये दुःखं धिगर्थं ... भाजनम् ॥" ) इति।

( २४३ ) धनस्पृहायाः त्याज्यत्वे भारतीयवनपर्वोक्तिं प्रमाणयति, धर्मार्थं ... —धर्मार्थं धर्माचरणार्थं, केवलं यागादिधर्म्मक्रियाऽनुष्ठानार्थमेवेत्यर्थः, यस्य ... वित्तेहा धनार्जनचेष्टा, तस्य जनस्य, निरीहता निर्नास्ति ईहा चेष्टा यस्य ... भावस्तत्ता निश्चेष्टता, अर्जनविमुखतेत्यर्थः, अपीति शेषः, वरं श्रेयसी, हि यतः ... कर्दमस्य, प्रक्षालनात् गात्रे विलिप्य धौतकरणात्, प्रक्षालनमपेक्ष्येत्यर्थः, [ ... लोपे पञ्चमी० ] दूरात् दूरे स्थित्वा, अस्पर्शनं स्पर्शाकरणमेव, वरं श्रेयः ; अर्था... पायाः सर्वत्रैव किञ्चिन्मात्रेणापि अधर्मेणानुविद्धा भवन्ति, यदि कश्चित् धर्म्मानुष्ठा... अर्जनप्रवृत्त एवं मन्यते यत् अहं यदा धर्म्माचरणार्थमस्मिन् प्रवृत्तः, तदा एतैः ... दधर्मसञ्चारे सत्यपि धर्म्माचरणेन तमधर्म्मं परिहरामि, ईदृश्या बुद्ध्या अर्थार्ज... धर्म्मानुष्ठानमपेक्ष्य अर्जनाप्रवृत्तिः धर्म्मानुष्ठानञ्च वरमित्यर्थः, प्रागधर्म्मं कृत्वा ... धर्म्माचरणेन तदधर्म्मपरिहारापेक्षया अधर्म्मानाचरणमेव श्रेयः इति भावः।

यतः,—यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि।
भक्ष्यते सलिले मत्स्यैस्तथा सर्वत्र वित्तवान् ॥ २४४ ॥

अन्यच्च,—राजतः सलिलादग्नेश्चौरतः स्वजनादपि।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ २४५ ॥

तथाहि,—जन्मनि क्लेशबहुले किन्नु दुःखमतःपरम्।
इच्छासम्पद् यतो नास्ति यच्चेच्छा न निवर्त्तते ॥२४६॥

(२४४) ऐश्वर्य्यवन्तः सदैव विपन्ना इति वक्तुं भारतीयवनपर्वोक्तश्लोकद्वयं प्रमाणयति, यथेति।—आमिषं मांसं, भोग्यं वस्तु वा, ("आमिषं पुं नपुंसकम्। भोग्यवस्तुनि सम्भोगेऽप्युत्कोचे पललेऽपि च" इति मेदिनी) यथा आकाशे गगने, स्थितश्चेत् इति शेषः, पक्षिभिः खगैः, भुवि भूतले, स्थितश्चेत्, श्वापदैः व्याघ्रादिभिः हिंस्रैः, तथा सलिले जले, स्थितश्चेत् इति शेषः, मत्स्यैर्मीनैः, ("मत्स्यैः" इत्यत्र "नक्रैः" इति पाठान्तरम्) भक्ष्यते अन्विष्य खाद्यते, तथा वित्तवान् धनवान् जनोऽपि, सर्वत्र सर्वस्मिन् स्थाने, आकाशादिषु यत्र कुत्रापि तिष्ठतु इत्यर्थः, भक्ष्यते प्रतारकैरिति शेषः; धनवान् सर्वत्र सर्वेषामेव दस्युतस्करादीनामामिषत्वं यातीति भावः।

(२४५) राजत इति।—प्राणान् बिभ्रति ये तेषां प्राणभृतां प्राणिनां, मृत्योः मरणादिव, अर्थवतां धनशालिनां जनानां, राजतः नृपतेः, सलिलात् जलात्, अग्नेः वह्नेः, चौरतः तस्करात्, स्वजनात् आत्मीयादपि, ("स्वजनात्" इत्यत्र "कुजनात्" इति पाठान्तरम्) नित्यं भयं, विद्यते इति शेषः; जगत्यस्मिन् धनवतां न कुत्राप्यभयं विद्यते, नापि च ते धनस्य निरापत्संरक्षणचिन्तया कदाऽपि सुखमवस्थातुं शक्नुवन्ति, अतः सर्वथा क्लेशावह एव धनसञ्चय इति भावः।

(२४६) जन्मनीति।—यतः यस्मात्, क्लेशबहुले नियतक्लेशावहे, जन्मनि शरीरग्रहणे, बहुदुःखावहे अस्मिन् संसारे इत्यर्थः, इच्छासम्पत् इच्छाऽनुरूपा सम्पत्तिः, आशाऽनुरूपमैश्वर्य्यमित्यर्थः, नास्ति न भवति, न लभ्यते इति यावत्, इच्छा च कामना च, आशा चेति यावत्, यत् यतः, न निवर्त्तते न विरमति, परन्तु उत्तरोत्तरं वर्द्धते एव इति भावः, अतः अतः परम् एतस्मादधिकं, दुःखं क्लेशः, किं नु? किं भवेत्? आदौ तावत् जन्म एव दुःखं, ततः आशाऽनुरूपसम्पत्त्यलाभः दुःखप्रदः, नियतदुःखदायिनी आशासन्ततिश्च इति एतेषां सर्वेषामेव दुःखप्रदत्वात् दुःखबहुलया धनाऽऽशया दुःखमयस्यास्य जीवनस्य भारवृद्धिर्नैव कर्त्तव्या इति भावः।

अन्यच्च, भ्रातः ! शृणु,—

धनं तावदसुलभं लब्धं कृच्छ्रेण पाल्यते ।
लब्धनाशो यथा मृत्युस्तस्मादेतन्न चिन्तयेत् ॥ २४७ ॥
सा तृष्णा चेत् परित्यक्ता को दरिद्रः ? क ईश्वरः ।
तस्याश्चेत् प्रसरो दत्तो दास्यञ्च शिरसि स्थितम् ॥ २४८ ॥

अपरञ्च,—यद् यदेव हि वाञ्छेत ततो वाञ्छा प्रवर्त्तते ।
प्राप्त एवार्थतः सोऽर्थो यतो वाञ्छा निवर्त्तते ॥ २४९ ॥

(२४७) धनमिति।—धनं तावत् असुलभं दुर्लभं, प्रथमतस्तावत् [...] अर्जनमेव बहुक्लेशेन भवतीत्यर्थः, लब्धम् उपार्जितञ्च तत् कृच्छ्रेण [...] आयासेनेति यावत्, अर्जनक्लेशादपि अधिकेन क्लेशेनेति भावः ; पाल्यते चौ[...] रक्ष्यते, लोकैरिति शेषः, लब्धस्य अर्थस्य नाशः अपचयः, यथा मृत्युः [...] तद्वत् यातनाप्रदः इत्यर्थः, तस्मात् अतिकष्टप्रदत्वात्, एतत् धनं, न चिन्त[...] भावयेत्, तदर्थं न क्लिश्येदित्यर्थः। भारतीयशान्तिपर्वणि मोक्षधर्मप्रकरणे श्लोकं[...] पठितो दृश्यते, यथा—"ईहा धनस्य न सुखा लब्धे चिन्ता च भूयसी। [...] यथा मृत्युर्लब्धं भवति वा न वा ॥" इति ।

(२४८) सेति।—सा तृष्णा धनलालसा, चेत् यदि, परित्यक्ता [...] भवेदिति शेषः, धनतृष्णां परित्यक्तुं समर्थो भवेत् यदीत्यर्थः, ("तृष्णाचेह प[...] इति पाठान्तरम्) तदा दरिद्रः अकिञ्चनः, कः ? ईश्वरः प्रभुश्च [...] सञ्जातवैराग्यस्य दारिद्र्यमैश्वर्य्यमुभयमपि सममित्यर्थः, धनतृष्णाव्यपगमे [...] भावात् धनिदरिद्रयोः कोऽपि भेदो न विद्यते इति भावः ; चेत् यदि, तस्याः [...] प्रसरः इच्छावकाशः, दत्तः, तदा दास्यञ्च दासत्वं खलु, शिरसि मस्तके, [...] अवस्थितं, भवेदिति शेषः, लुब्धस्य दासत्वं नियतमेवेत्यर्थः ; अत्रायं भावः,—"[...] तृणं जगत्" इत्युक्त्या वीतस्पृहस्य जगन्त्यपि तृणाय मन्यमानस्य अपेक्षाबुद्ध[...] किञ्च—"सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम्" इत्युक्त्या निस्पृहस्य [...] अभयत्वात् आसन्नद्रविणेशः सम्राडपि स्वतन्त्रतायामवरो भवति, आशावतां [...] विपरीतमेव भवतीति ।

(२४९) यदिति।—यद् यदेव यद् यद् वस्तु एव इत्यर्थः, वाञ्छेत [...] विवक्षितम्] अभिलषेत्, ततः तत्तद्वस्तुवाञ्छाया एवेत्यर्थः, वाञ्छा वस्त्वन्तर[...] प्रवर्त्तते भूयः प्रसरति, हि निश्चये ; यद्वा—यद् यत् यथा यथेत्यर्थः, वाञ्छि[...]

किं बहुना ? विस्रम्भालापैः मयैव सह अत्र कालो (न) नीयताम्। यतः,—

आमरणान्ताः प्रणयाः कोपास्तत्क्षणभङ्गुराः।
परित्यागाश्च निःसङ्गा भवन्ति हि महात्मनाम्” ॥२५०॥

इति श्रुत्वा लघुपतनको ब्रूते,—(प) “धन्योऽसि मन्थर! सर्वथा (फ) आश्रयणीयोऽसि। यतः,—

सन्त एव सतां नित्यमापदुद्धरणक्षमाः।
गजानां पङ्कमग्नानां गजा एव धुरन्धराः ॥ २५१ ॥

---

एव तथा तथैव इत्यर्थः, वाञ्छा प्रवर्त्तते, यतः यस्य अर्थस्य प्राप्तेः प्राप्तौ वा, वाञ्छा भोगाभिलाषः, निवर्त्तते विरमति, अर्थतः निवृत्तेः, निवृत्तिहेतुत्वादित्यर्थः, (“अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु” इत्यमरः) अर्थतः तत्त्वत इत्यर्थो वा, प्राप्तः लब्धः, स एव स अर्थ एव, अर्थः अर्थपदवाच्यः, यद्वा—यतः यस्मिन् वस्तुनि प्राप्ते लब्धे, वाञ्छा निवर्त्तते, अर्थतः स एव अर्थः परमार्थः, निस्पृहत्वमेव सुखकरमिति भावः। वाञ्छाया उत्तरोत्तरं वाञ्छावर्द्धकत्वात् अनर्थोत्पादकत्वमेव, यतश्च अनर्थजननी सा निवर्त्तते, स एको धर्म्म एव अर्थपदवाच्यः, प्राप्ते च तस्मिन् सर्वा एव तृष्णा नश्यति, सुखञ्च विमलमुपभुनक्ति इति तात्पर्य्यम्।

(न) नीयताम्—अतिवाह्यताम्।

(२५०) आमरणेति।—महात्मनाम् उदारचेतसां, प्रणयाः सौहार्दानि, आमरणान्ताः आ मरणात् इति आमरणं मरणकालपर्य्यन्तम्, अन्तः अवधिर्येषां ते ; यद्वा—आमरणम् अन्तः स्वरूपम्, अविकृतभावेनावस्थानमित्यर्थः, येषां ते, (“स्वरूपप्रान्तयोरन्तम्” इति शाश्वतः) मृत्युपर्य्यन्तस्थायिनः, किन्तु कोपाः क्रोधाः, तत्क्षणभङ्गुराः तदुत्पत्त्यनन्तरमेव ध्वंसिनः, उत्पन्ना एव विलीयन्ते इत्यर्थः, (“कोपास्तु क्षणभङ्गुराः” इति पाठान्तरम्) परित्यागाश्च वियोगाश्च, निःसङ्गाः सङ्गरहिताः, अनुरागभाववर्जिताः, ते तु अनिष्टाचरणहेतुभूता इति भावः, यद्वा—परित्यागाः दानानि च, निःसङ्गाः आसक्तिविवर्जिताः, कामनाविरहिता इत्यर्थः, भवन्ति वर्त्तन्ते, हि निश्चये।

(प) धन्यः,—श्लाघ्यः, प्रशंसनीयः इत्यर्थः।

(फ) आश्रयणीयः,—शरण्यः।

(२५१) सन्त इति।—सन्तः साधवः एव, नित्यं ध्रुवम्, अनुदिनं वा, न तु

तथा च,—

गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितो

अलिरेति वनात् कमलं न हि भेकस्त्वेकवासोऽपि ॥२

अपरञ्च,—श्लाघ्यः स एको भुवि मानवानां

स उत्तमः सत्पुरुषः स धन्यः ।

यस्यार्थिनो वा शरणागता वा

नाशाविभङ्गा विमुखाः प्रयान्ति" ॥ २५३ ॥

---

कदाचिदित्यर्थः, सतां साधूनाम्, आपदुद्धरणक्षमाः विपत्प्रतीकार

तथाहि, पङ्कमग्नानां कर्दमपतितानां, गजानां करिणां, गजा ए

केऽपीत्येवशब्दार्थः, धुरं भारं धरन्तीति धुरन्धराः भारवहनशक्ताः, कर्दमात्

समर्थाः इति भावः, भवन्तीति शेषः ।

(२५२) गुणिनीति ।—गुणज्ञः गुणग्राही जनः, गुणिनि गुणवति ज

ष्यति इत्यर्थः, तेन सह आलापादिना परितुष्यति इति यावत्, अगुण

निर्गुणस्य, गुणिनि गुणवत्संसर्गे इत्यर्थः, न परितोषः प्रीतिर्न, भवतीति

अत्रोदाहरणमाह,—अलिर्भ्रमरः, मधुररसाभिज्ञ इति भावः; वनात्

कमलवासापेक्षया बहुदूरावस्थितादपीति भावः; कमलं पद्मं, मधु

भावः; एति अभियाति, मधुपानाशया इति भावः; तु किन्तु, भेकः मण्डूकः,

नभिज्ञः इति भावः; एकः एकस्थानं, वासो यस्य सः, एकस्मिन् जलाशये

एकत्रैव वासं कृत्वाऽपीत्यर्थः, न हि नैव, कमलमेति इति अन्वयः, पङ्कमा

भिज्ञत्वात् पङ्करसप्रियत्वाच्चेति भावः । आर्य्या वृत्तम् ।

(२५३) श्लाघ्य इति ।—यस्य पुरुषस्य सकाशात्, अर्थिनः याचका

शरणागताः आश्रयकाङ्क्षिणो वा, आशाविभङ्गाः आशायाः वि विशेषेण

अपगमः येषां ते तादृशाः, हताशाः इति यावत्, ("आशाविभिन्नाः" इति

आशायाः विभिन्नाः विच्छिन्नाः, खण्डिताशा इत्यर्थः, "आशाऽभिभङ्गात्"

—आशाविलोपादित्यर्थः) अत एव विमुखाः पराङ्मुखाः सन्तः, न प्र

गच्छन्ति, भुवि भूतले, मानवानां मनुष्याणां मध्ये, स तादृशः, एकः ए

पुरुष एव, श्लाघ्यः प्रशंसाऽऽस्पदं, स उत्तमः श्रेष्ठः, सत्पुरुषः स एव पुरुषे

धन्यः पुण्यवान् । उपजातिः वृत्तम् ।

तदेवं ते (ब) स्वेच्छाऽऽहारविहारं कुर्वाणाः सन्तुष्टाः सुखं निवसन्ति स्म। अथ कदाचित् चित्राङ्गनामा मृगः केनापि त्रासितस्तत्राऽऽगत्य मिलितः। ततः (भ) पश्चादायान्तं भयहेतुं सम्भाव्य मन्थरो जलं प्रविष्टः, मूषिकश्च विवरं गतः, काकोऽपि उड्डीय वृक्षाग्रमारूढः। ततो लघुपतनकेन सुदूरं (म) निरूप्य भयहेतुर्न कोऽप्यवलोकितः, पश्चात् तद्वचनादागत्य पुनः सर्वे मिलित्वा तत्रैवोपविष्टाः। मन्थरेणोक्तम्,—"भद्र मृग! कुशलं ते? स्वेच्छया (य) उदकाद्याहारोऽनुभूयताम्। अत्रावस्थानेन वनमिदं (र) सनाथीक्रियताम्"। चित्राङ्गो ब्रूते,—(ल) "लुब्धकत्रासितोऽहं भवतां (व) शरणमागतः। ततश्च भवद्भिः सह मित्रत्वमिच्छामि, भवन्तश्च (श) अनुकम्पयन्तु मैत्रेण। यतः,—

(ब) स्वेच्छाऽऽहारविहारम्—आहारश्च विहारश्च आहारविहारम् [अत्र केचित् द्वन्द्वैकवद्भावस्य परिपन्थितां कुर्वन्ति; तन्मते आहारेण सहितः आहारात् परो वा विहारः, एवं व्यासवाक्यं करणीयम्] स्वेच्छया आहारविहारं स्वेच्छाऽऽहारविहारम्।

(भ) पश्चादायान्तं—मृगस्य पृष्ठतः समागच्छन्तम्। भयहेतुं—मृगस्य भयकारणम्।

(म) निरूप्य—विशेषेण निरीक्ष्येत्यर्थः।

(य) उदकाद्याहारः,—उदकम् आदिर्यस्य सः तादृशः आहारः, आदौ मुखादिकं प्रक्षाल्य पश्चात् आहारः क्रियतामित्यर्थः। यद्वा—पानीयादिकमन्नञ्च; वस्तः पिपासुर्भवतीत्यनुमाय अत्रादौ उदकशब्दप्रयोगः मन्तव्यः।

(र) सनाथीक्रियतां—नाथेन स्वामिना सहितं सनाथम्, असनाथं सनाथं क्रियताम्, अध्युषित्वा वनमिदम् अलङ्क्रियतामित्यर्थः।

(ल) लुब्धकत्रासितः,—लुब्धकेन व्याधेन, त्रासितः भीतिमापादितः।

(व) शरणं—गृहम्, आवासभूमिमित्यर्थः। यद्वा—शरणं—रक्षणं, रक्षणाः स्थानमित्यर्थः। ("शरणं गृहरक्षित्रोः वधरक्षणयोरपि" इति मेदिनी)।

(श) अनुकम्पयन्तु—अनुगृह्णन्तु।

लोभाद्वाऽथ भयाद्वाऽपि यस्त्यजेच्छरणागतम्।
ब्रह्महत्यासमं तस्य पापमाहुर्मनीषिणः" ॥ २५४॥

हिरण्यकोऽवदत्,—"मित्रत्वं तावदस्माभिः सह (प) अ
निष्पन्नमेव भवतः। यतः,—

औरसं कृतसम्बन्धं तथा वंशक्रमाऽऽगतम्।
रक्षकं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥ २५५॥

तदत्र भवता (स) स्वगृहनिर्विशेषेण स्थीयताम्"। त
मृगः सानन्दः भूत्वा कृतस्वेच्छाऽऽहारः पानीयं
(ह) जलाऽऽसन्नवटतरुच्छायायामुपविष्टः। यतः,—

---

(२५४) शरणागतपरित्यागस्य दोषमाह, लोभादिति।—यः लोभात् ध धनादीनां प्रलोभनेन वा, अथ पक्षान्तरे, भयात् अन्येभ्यस्त्रासादपि वा, शर आश्रितं, त्यजेत् जह्यात्, मनीषिणः धीराः, पण्डिता इत्यर्थः, ("धीरो मनी प्राज्ञः सङ्ख्यावान् पण्डितः कविः" इत्यमरः) तस्य जनस्य, ब्रह्महत्यासमं ब्रह्मह ब्रह्मवधे कृते यादृशं पापं भवति तादृशमित्यर्थः, पापं दुरितं, भवतीति शे आहुः कथयन्ति।

(प) अयत्नेन निष्पन्नमेव—प्रयासं विनैव जातम्।

(२५५) मृगस्य अयत्नसाध्यमित्रभूतत्वे कामन्दकीयचतुर्थसर्गोक्तश्लो प्रमाणयति, औरसमिति।—औरसम् उरसः जातम्, आजन्मसिद्धं पुत्रादिरूप कृतः सम्पादितः, सम्बन्धो येन तत्, कृतः संस्थापितः, सम्बन्धः सम्पर्कः यस्मि इति वा कृतसम्बन्धं विवाहादिसम्बन्धेन उत्पन्नं, तथा वंशक्रमाऽऽगतं कुलक्रमाग एककुलजातत्वेन पुरुषानुक्रमेण वा निष्पन्नमित्यर्थः, तथा व्यसनेभ्यः विपद्भ्यः परित्रायकञ्च, ("रक्षकम्" इत्यत्र "रचितम्" इति पाठे—रचितं परिवर्तं, रचितत्वात् येन सह मैत्र्यं सञ्जातमित्यर्थः) इति चतुर्विधं मित्रं ज्ञेयं स्मृतम्।

(स) स्वगृहनिर्विशेषेण—स्वस्य गृहात् निर्नास्ति विशेषो यस्मिन् तेन, यथा स्वच्छन्दं स्थीयते, तद्वदत्रापि परगृहमित्यविविच्य लज्जासङ्कोचादिक इत्यर्थः। ("स्वगृहनिर्विशेषम्" इति पाठान्तरम्)।

(ह) जलाऽऽसन्नवटतरुच्छायायां—जलस्य आसन्नः सन्निहितः, य वटस्य छाया तस्याम्।

कूपोदकं वटच्छाया श्यामा स्त्री इष्टकागृहम्।
शीतकाले भवेदुष्णमुष्णकाले च शीतलम्॥ २५६॥

अथ मन्थरो ब्रूते,—"सखे मृग! केन त्रासितोऽसि? अस्मिन् निर्जने वने कदाचित् किं व्याधाः सञ्चरन्ति?" मृगेणोक्तम्,—"अस्ति (क) कलिङ्गविषये रुक्माङ्गदो नाम नृपतिः। स च (ख) दिग्विजयव्यापारक्रमेण आगत्य चन्द्रभागानदीतीरे समावेशितकटको वर्त्तते। प्रातश्च तेनात्राऽऽगत्य कर्पूरसरःसमीपे भवितव्यम्, इति व्याधानां मुखात् (ग) किंवदन्ती श्रूयते। तदत्रापि प्रातरवस्थानं भयहेतुकमित्यालोच्य यथा कार्य्यं तथा आरभ्यताम्।" तच्छ्रुत्वा कूर्मः सभयमाह,—"मित्र! जलाशयान्तरं गच्छामि।" काकमृगावपि उक्तवन्तौ,—"मित्र! एवमस्तु।" हिरण्यको (घ) विमृश्याब्रवीत्,—"पुनर्जलाशये प्राप्ते मन्थरस्य कुशलम्; स्थले गच्छतोऽस्य

(२५६) शीघ्रार्त्तौ वटच्छायायामुपवेशनस्य सुखकरत्वेन युक्तत्वं वक्तुं चाणक्यवचनमुपन्यस्यति, कूपोदकमिति।—कूपोदकं कूपस्थं जलं, वटच्छाया वटवृक्षस्य छाया, श्यामा—"शीते सुखोष्णसर्वाङ्गी ग्रीष्मे च सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते॥" इति लक्षणोपेता स्त्री, इष्टकागृहम् इष्टकनिर्मितं गृहम्, एतत् चतुष्टयं शीतकाले उष्णं तप्तम्, उष्णकाले ग्रीष्मकाले च, शीतलं शैत्यगुणान्वितं, भवेत्।

(क) कलिङ्गविषये—कलिङ्गाख्यजनपदे, कलिङ्गदेशे इत्यर्थः, ("विषयो यस्य यो ज्ञातस्तत्र गोचरदेशयोः। शब्दादौ जनपदे च" इति हेमः)।

(ख) दिग्विजयव्यापारक्रमेण—दिशां चतुर्दिक्स्थनृपाणामित्यर्थः, विजय एव व्यापारः कार्य्यं, तत्क्रमेण तदनुसारेण। समावेशितकटकः,—समावेशितः सन्निवेशितः, संस्थापित इत्यर्थः, ("समावासित" इति पाठेऽपि स एवार्थः) कटकः सेना, वस्त्रनिर्मितराजधानी वा, ("कटकस्त्वद्रिनितम्बे वाहुभूषणे सेनायां राजधान्याञ्च" इति हेमः) येन सः कृतसैन्यसमावेशः कृतशिविरसन्निवेशो वा।

(ग) किंवदन्ती—जनश्रुतिः।

(घ) विमृश्य—विविच्य। ("विहस्य" इति पाठान्तरम्)।

(ङ) का विधा ? यतः,—

अम्भांसि जलजन्तूनां दुर्गं दुर्गनिवासिनाम्।
स्वभूमिः श्वापदादीनां राज्ञां सैन्यं परं बलम् ॥२५७॥

सखे लघुपतनक ! (च) अनेनोपदेशेन तथा भवितव्यम्

स्वयं वीक्ष्य यथा बध्वाः पीड़ितं स्तनकुड्मलम्।
बणिक्पुत्रोऽभवद् दुःखी त्वं तथैव भविष्यसि" ॥२५८॥

ते ऊचुः,—"कथमेतत् ?"। हिरण्यकः कथयति,—

राजपुत्र-बणिक्पुत्रवधूकथा।—

"अस्ति कान्यकुब्जविषये राजा वीरसेनो नाम। तेन
पुरनाम्नि नगरे तुङ्गबलो नाम राजपुत्रो युवराजः कृतः।

---

(ङ) का विधा ?—कः प्रकारः ? उपाय इति यावत्, जलचरोऽयं केनोपायेन स्थलं यास्यति ? इति भावः।

(२५७) अम्भांसीति।—जलजन्तूनां मत्स्यादीनाम्, अम्भांसि जलानि, परं बलं जलचराणां जले एव विक्रमाधिक्यसम्भवात् बलहेतुरित्यर्थः, दुर्गनिवासिनां कोट्टवासिनां, दुर्गं पर्वतादिभिर्दुर्गमं पुरमित्यर्थः, श्वापदादीनां शुनः पादा इव पादा येषां तेषां व्याघ्रादीनां, ["शुनी दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो" (वा०) इति श्वन् इत्यस्य दीर्घत्वम्] स्वभूमिः निजवासस्थानम्, अरण्यम्, राज्ञां सैन्यं परं बलं, भवतीति सर्वत्र शेषः। ("सैन्यम्" इत्यत्र "मन्त्री" इति पाठान्तरम्) जलजन्तुप्रभृतयः स्वस्वस्थाने स्थिता एव विक्रमं दर्शयितुं समर्था भवन्ति, राजानः पुनः सैन्यद्वारैव विक्रमं प्रदर्शयन्तीति निष्कर्षः।

(च) अनेनोपदेशेन—मन्थरस्य स्थानान्तरगमनोपदेशेन।

* "स्वयं वीक्ष्य" इति श्लोकमारभ्य वक्ष्यमाणा राजपुत्र-बणिक्पुत्रवधूकथा अश्लीलतया सुकोमलमतीनां छात्राणाम् अपाठ्या।

(२५८) स्वयमिति।—बणिक्पुत्रः कश्चित् श्रेष्ठितनयः, स्वयम् आत्मना स्वचक्षुषा इत्यर्थः, यथा यद्वत्, बध्वाः स्वभार्यायाः, स्तनः कुड्मलं कोरक-मुकुलवत् परिदृश्यमानम् उन्नतं स्तनमित्यर्थः, पीड़ितं सम्मर्दितं, राजपुत्रेणेति वीक्ष्य दृष्ट्वा, दुःखी अभवत् विषादं प्राप, त्वं तथैव भविष्यसि भविष्यसीत्यर्थः।

स (छ) महाधनः (ज) तरुणः एकदा स्वनगरे भ्राम्यन् (झ) अतिप्रौढ़यौवनां लावण्यवतीं नाम वणिक्पुत्रवधूम् आलोकयामास। ततः स्वहर्म्यं गत्वा (ञ) स्मराऽऽकुलितमतिस्तस्याः (ट) कृते दूतीं प्रेषितवान्। यतः,—

सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव।
भ्रूचापाऽऽकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति॥२५९॥

(छ) महाधनः,—महत् प्रभूतं, धनं यस्य सः अतुलैश्वर्यसम्पन्नः।

(ज) तरुणः,—युवा।

(झ) अतिप्रौढ़यौवनाम्—अतिप्रौढ़म् अतिशयेन प्रवृद्धं, परिपूर्णमित्यर्थः, ("प्रवृद्धं प्रौढ़मेधितम्" इत्यमरः) यौवनं यस्यास्ताम् अत्युत्कटयौवनाम्। आलोकयामास—ददर्श। [आ+लोक+स्वार्थे णिच्+लिट्-णल्]।

(ञ) स्मराऽऽकुलितमतिः,—स्मरेण कामेन, आकुलिता कलुषिता, मतिर्यस्य सः, कामरिपोर्वशं गतः।

(ट) कृते—निमित्तम्।

(२५९) सन्मार्गे इति।—यावत् यत्कालपर्यन्तं, लीलावतीनां विलासिनीनां, भ्रुवौ चापाविव धनुषीव, ताभ्याम् आकृष्टमुक्ताः पूर्व्वम् आकृष्टाः पश्चात् मुक्ताः विसृष्टाः, निक्षिप्ता इति यावत्, नेत्रपक्षे—आकुञ्चिताः निपातिताश्च, श्रवणपथगताः आकर्णाऽऽकृष्टाः, अन्यत्र—आकर्णाऽऽयताः, नीलपक्ष्माणः सूत्रादीनां सूक्ष्मांशसदृशनीलवर्णकङ्कपत्रसहिताः, अन्यत्र—कृष्णवर्णाक्षिलोमयुक्ताः, धृतिं धैर्य्यं, मुष्णन्ति अपहरन्ति ये ते तथोक्ताः, धैर्य्यप्रच्युतिकराः; उभयत्रापि समम्; एते प्रस्तूयमाना इत्यर्थः, दृष्टयः बाणा इव दृष्टिबाणाः दृष्टिपातशराः, तीक्ष्णकटाक्षपाता इत्यर्थः, हृदि वक्षसि, न पतन्ति, पुरुषस्येति शेषः, तावत् तत्कालपर्य्यन्तं, पुरुषः सन्मार्गे सत्पथे, आस्ते वर्त्तते, तावदेव तत्कालपर्य्यन्तमेव, इन्द्रियाणां चक्षुरादीनां पञ्चानां, [विवक्षया षष्ठी] प्रभवति प्रभुर्वर्त्तते, इन्द्रियाणि स्ववशे स्थापयितुं शक्नोतीत्यर्थः, जितेन्द्रियो भवतीति यावत्, तावत् लज्जां व्रीड़ां, विधत्ते विदधाति, तावदेव तावत्कालमेव, विनयं नम्रताम् अपि, समालम्बते धारयति, विनीतो भवतीत्यर्थः;

साऽपि लावण्यवती (ठ) तदवलोकनक्षणात् प्रभृ- (ड) स्मरशरप्रहारजर्ज्जरितहृदया (ढ) तदेकचित्ता अभवत् तथा चोक्तम्,—

असत्यं साहसं माया मात्सर्य्यञ्चातिलुब्धता।
निर्गुणत्वमशौचत्वं स्त्रीणां दोषाः स्वभावजाः॥ २६०॥

अथ दूतीवचनं श्रुत्वा लावण्यवती उवाच,—"अ- पतिव्रता परपुरुषस्पर्शमात्रमपि न करोमि, तत् क- एतस्मिन् अधर्म्मे (ण) पतिलङ्घने (त) प्रवर्त्ते ? यतः,—

सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रजावती।
सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता॥२६१

---

पञ्चशरप्रहारजर्जरितचित्ताः न कस्मिन्नपि अकार्य्ये पराङ्मुखीभवन्तीति भावः। स- हृतम्।

(ठ) तदवलोकनक्षणात् प्रभृति—तस्य राजपुत्रस्य, अवलोकनं द- तस्य क्षणात् समयात्, प्रभृति तद्दर्शनसमयमारभ्य, तं दृष्ट्वेत्यर्थः।

(ड) स्मरशरप्रहारजर्जरितहृदया—स्मरस्य कन्दर्पस्य, शराः बाणाः, प्रहारः आघातः, तेन जर्जरितं भग्नं, हृदयं यस्याः सा, अतीव मदनपीड़ितेत्यर्थः।

(ढ) तदेकचित्ता—स राजपुत्र एव, एकः चित्ते यस्याः ; तस्मिन् रा- एव, एकं केवलं, चित्तं यस्या इति वा, सा।

(२६०) असत्यमिति।—असत्यं मिथ्याऽऽचरणं, साहसं हठकारित्वं, अ- नालोच्य सहसा कार्य्यारम्भः इत्यर्थः, असमीक्ष्यकारिता इति यावत्, माया प्रता- कापट्यं वा, मात्सर्य्यं परोत्कर्षासहिष्णुता, अतिलुब्धता अतिशयलोभपरत- निर्गुणत्वं गुणहीनता, च किञ्च, अशौचत्वम् अपवित्रता, अन्तर्मालिन्यमिति भा- एते अष्टधा स्त्रीणां स्वभावजाः साहजिकाः, दोषाः। एतत्तु अशिक्षिताः भ्रा- निरताः भोगप्रमत्ताः स्वतन्त्रा नारीः उद्दिश्य कविना लिखितम् इति मन्तव्यम्।

(ण) पतिलङ्घने—पत्युर्लङ्घनम् अतिक्रमणम्, अवहेलनमित्यर्थः, यस्मिन् त- भर्त्तुरवज्ञारूपे, पातिव्रत्यसमुल्लङ्घनरूपे इत्यर्थः।

(त) प्रवर्त्ते—प्रवृत्ता भवामि।

(२६१) पतिव्रताया एव भार्य्यापदवाच्यत्वमिति वक्तुं भारतीयादिपर्व्वान्तर्गत-

कोकिलानां स्वरो रूपं नारीरूपं पतिव्रतम्।
विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥२६२॥
अन्यच्च,—न सा भार्य्येति ख्यातव्या यस्यां भर्त्ता न तुष्यति।
तुष्टे भर्त्तरि नारीणां सन्तुष्टाः सर्वदेवताः ॥ २६३ ॥

ततो यद्यद्यदादिशति मे प्राणेश्वरस्तदेवाहम्

---

पर्व्वोक्तश्लोकं प्रदर्शयति, सेति।—या स्त्री, गृहे गृहकर्मणि, सुशृङ्खलया संसारपरिचालने इति यावत्, दक्षा निपुणा, सा भार्य्या भार्य्यापदवाच्या, प्रशस्ता पत्नीत्यर्थः, या प्रजावती पुत्रवती, सा भार्य्या, या पतिप्राणा पतिरेव प्राणाः जीवनं यस्याः सा, पतिगतजीवना, पत्यौ जीवति जीवति, मृते च म्रियते इत्यर्थः, सा भार्य्या, या च पतिव्रता पतिः व्रतमिव उपास्यः, पतिः पतिसेवनं, व्रतं नियमः यस्या इति वा, साध्वी, सा भार्य्या भार्य्यापदवाच्या। ("सा भार्य्या या शुचिर्दक्षा सा भार्य्या या पतिव्रता। सा भार्य्या या पतिप्रीता सा भार्य्या या प्रियंवदा॥" इति वृद्धचाणक्योक्तपाठः)।

(२६२) किन्तावत् नारीणां रूपमिति वक्तुं चाणक्यवचनं प्रदर्शयति, कोकिलानामिति।—कोकिलानां पिकानां, कृष्णवर्णानामिति भावः, स्वरः सुमधुरः कण्ठरव एव, रूपं सौन्दर्य्यं, पतिव्रतं पत्यौ पतिसेवायां, व्रतं नियमः, पतिरेव पतिसेवैव, व्रतं नियमः इति वा, भर्त्तृपरिचर्य्या, सतीत्वमेव इत्यर्थः, नारीरूपं स्त्रीणां सौन्दर्य्यं, कुरूपाणां कुत्सितानां, विद्या शास्त्रज्ञानमेव, रूपं, तपस्विनां तापसानां, सांसारिकेषु भोगेषु वीतस्पृहाणामिति यावत्, क्षमा तितिक्षा एव, रूपं, कोकिलादयः एतैरेव गुणैः शोभन्ते इत्यर्थः।

(२६३) भारतशान्तिपर्व्वान्तर्गताऽऽपद्धर्म्मप्रकरणोक्तं श्लोकमवलम्ब्य भर्त्तृप्रियाया एव भार्य्यात्वं तथा भर्त्तृप्रीतेश्च फलमाह, नेति।—यस्यां भार्य्यायां, भर्त्ता पतिः, न तुष्यति न प्रीणाति, सा भार्य्येति पत्नीपदवाच्या इति, न ख्यातव्या न वक्तव्या, न भार्य्यात्वेन प्रकटनीया इत्यर्थः, नारीणां भर्त्तरि तुष्टे सति सर्व्वा एव देवताः सन्तुष्टाः, भवन्तीति शेषः। (क्वचित् पुस्तके एतदर्द्धश्लोकस्थाने—"अग्निसाक्षिकमर्य्यादो भर्त्ता हि शरणं स्त्रियाः" इति पाठान्तरं दृश्यते। तत्रेयं व्याख्या,—अग्निः साक्षी साक्षात् द्रष्टा यस्याः तादृशी मर्य्यादा परिणयबन्धनं यस्य तादृशः प्रजापतिनिबद्धः, भर्त्ता पतिः, स्त्रियाः नार्य्याः, शरणं रक्षिता)।

(थ) अविचारितं करोमि।" दूत्या उक्तम्,—"सत्यमेतत्?"। लावण्यवत्युवाच,—"सत्यमेवैतत्"। * ततः सर्वमेव लावण्यवत्या यथाऽभिहितं, दूत्या गत्वा तुङ्गबलस्य (द) अग्रे तत् निवेदितम्। तच्छ्रुत्वा तुङ्गबलोऽवदत्,—(ध) "विषमेषुव्रणितहृदयस्तां विना कथमहं जीविष्यामि?"। कुट्टिन्याह,—(न) "स्वामिना आनीय समर्पयितव्या" इति। स प्राह,—"कथमेतत् (प) शक्यम्?"। कुट्टिन्याह,—(फ) "उपायः क्रियताम्। तथा चोक्तम्,— †

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः।
शृगालेन हतो हस्ती गच्छता पङ्कवर्त्मना" ॥२६४॥

---

(थ) अविचारितम्—अवितर्कितम्, असन्दिग्धमित्यर्थः।

* कुलटा हि आत्मनः चरित्रदोषगोपनाय अनुरक्तस्य चानुरागवर्द्धनाय च वाग्वैदग्ध्यं प्रकटयन्ति इति प्रसिद्धमेवैतत्।

(द) अग्रे—पुरतः, समीपे इति यावत्।

(ध) विषमेषुणा व्रणितहृदयः,—विषमाः अयुग्माः, पञ्च इत्यर्थः, इषवः वाणाः यस्य तेन, कामेन, ("कामः पञ्चशरः स्मरः" इत्यमरोक्तेः) व्रणितं सञ्जातव्रणं क्षतं विद्धमिति यावत्, हृदयं यस्य सः।

(न) स्वामिना—भर्त्रा, लावण्यवत्या एवेति शेषः।

(प) शक्यं—साधयितुं योग्यं, कर्त्तुं शक्यते इत्यर्थः, त्वयेति शेषः।

(फ) उपायः क्रियतां—प्रयत्नः विधीयतां, मयेति शेषः, एतत्कार्य्यसाधनाय यथाकालं मया उपायः करिष्यते इत्यर्थः। [प्राप्तकाले लोट्]।

† "उपायेन" इत्यादिश्लोकमारभ्य गज-शृगालकथा राजपुत्र-वणिक्पुत्रकथाऽन्तर्गता सर्व्वेषामेव पाठ्या।

(२६४) दण्डोपायात् उपायान्तरस्य उत्कर्षमाह, उपायेनेति।—उक्तं "साम दानञ्च भेदश्च दण्डश्चेति चतुष्टयम्। मायोपेक्षेन्द्रजालञ्च सप्तोपायाः प्रकीर्त्तिताः॥" इत्युक्तलक्षणान्तर्गतमायारूपोपायप्रयोगेण, परस्परोपकारसंदर्शन-गुणाख्यान-सम्बन्धोत्कीर्त्तनाऽऽयतिप्रकाशन-मिश्रवाचा आत्मसमर्पणरूपपञ्चविधसामान्तर्गतसामविशेषप्रयोगेण वा; यत् शक्यम् अनुष्ठातुं साध्यं,

राजपुत्रः पृच्छति,—"कथमेतत् ?"। सा कथयति,—

गज-शृगालकथा।—

"अस्ति ब्रह्मारण्ये कर्पूरतिलको नाम हस्ती। तमवलोक्य सर्वे शृगालाश्चिन्तयन्ति स्म,—"यद्ययं केनाप्युपायेन म्रियते, तदा अस्माकम् (ब) एतद्देहेन मासचतुष्टयस्य (भ) स्वेच्छा-भोजनं भवेत्।" ततस्तन्मध्यादेकेन वृद्धशृगालेन प्रतिज्ञा कृता,—"मया बुद्धिप्रभावादस्य मरणं (म) साधयितव्यम्।"

अनन्तरं स वञ्चकः कर्पूरतिलकसमीपं गत्वा (य) साष्टाङ्ग-पातं प्रणम्योवाच,—"देव! (र) दृष्टिप्रसादं कुरु"। हस्ती ब्रूते,—"कस्त्वम्? कुतः समायातः?"। सोऽवदत्,—जम्बुकोऽहं, सर्वैर्वनवासिभिः पशुभिर्मिलित्वा भवत्सकाशं (ल) प्रस्थापितः, यद्विना राज्ञा स्थातुं न युक्तं, तदत्राटवीराज्येऽभिषेक्तुं भवान् (व) सर्वस्वामिगुणोपेतो (श) निरूपितः। यतः,—

पराक्रमैः शौर्य्यप्रदर्शनैः, न हि शक्यं नैव साधयितुं पार्य्यम्। एतत् समर्थयितुं दृष्टान्तमाह, शृगालेनेति।—पङ्कवर्त्मना कर्दमबहुलमार्गेण, गच्छता पथप्रदर्शकरूपेणाग्रे चलता, शृगालेन जम्बुकेन, हस्ती गजः, हतः विनाशितः, उपायेनेति शेषः।

(ब) एतद्देहेन—एतस्य हस्तिनः कायेन, अस्य मांसेनेत्यर्थः।

(भ) स्वेच्छाभोजनम्—अभिलाषानुरूपः आहारः, पर्य्याप्ताऽऽहार इति यावत्।

(म) साधयितव्यं—सम्पादयितव्यम्।

(य) साष्टाङ्गपातम्—अष्टाभिरङ्गैः,—"जानुभ्याञ्च तथा पद्भ्यां पाणिभ्यामुरसा धिया। शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः॥" इत्युक्तलक्षणैरवयवैः सह, पातः आत्मनः पातनं यस्मिन् कर्म्मणि तद् यथा तथा [ क्रियाविशेषणम् ]।

(र) दृष्टिप्रसादं कुरु—दृष्ट्या दृष्टिदानेन, प्रसादम् अनुग्रहं, कुरु विधेहि, दृष्टिपातेन मामनुगृहाण।

(ल) प्रस्थापितः,—प्रेरितः।

(व) सर्व्वस्वामिगुणोपेतः,—सर्वे स्वामिनः गुणाः प्रभूचिताः शौर्य्य-गाम्भीर्य्य-दया-दाक्षिण्यादयः धर्म्माः, तैरुपेतः युक्तः।

(श) निरूपितः,—निर्द्धारितः, स्थिरीकृतः इत्यर्थः।

कुलाऽऽचारजनाऽऽचारैरतिशुद्धः प्रतापवान् ।
धार्मिको नीतिकुशलः स स्वामी युज्यते भुवि ॥२६५॥

अपरञ्च पश्य,—

राजानं प्रथमं विन्देत् ततो भार्य्यां ततो धनम् ।
राजन्यसति लोकेऽस्मिन् कुतो भार्य्या कुतो धनम् ?॥२६६॥

अन्यच्च,—पर्जन्य इव भूतानामाधारः पृथिवीपतिः ।
विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥२६७॥

---

(२६५) कुलेति।—भुवि भूतले, यः कुलाऽऽचारजनाऽऽचारैः कुलाऽऽचाराः कुलक्रमाऽऽगतरीतयः, जनाऽऽचाराः लोकाऽऽचाराः, समाजप्रचलितरीतय इत्यर्थः, तैः, आचाराणां प्रकारबाहुल्यादत्र बहुत्वे प्रयोगः मन्तव्यः; अतिपूतः, कौलिकं लौकिकञ्च व्यवहारं पालयन् इत्यर्थः, ("यः कुलं जनाऽऽचारैः" इति पाठे—कुलं वंशः, अभिजनः ख्यातिः जन्मभूमिर्वा, ("अभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे। कुलेऽपि च पुमान्" इति मेदिनी) आचारः व्यवहारः चरित्रं वा ते तैः, विशुद्धवंशसम्भूतः, विशुद्धयशाः आर्य्यभूमिजातो सद्व्यवहारसम्पन्नः सुचरितो वा इत्यर्थः) प्रतापवान् प्रभावशाली, धार्मिकः धर्मे नीतिकुशलः नीतिशास्त्रनिपुणश्च, भवतीति शेषः, स स्वामी प्रभुः, युज्यते उपयुक्तो भवति, य एतादृशगुणसम्पन्नः, स एव राज्यस्यार्हः इत्यर्थः ।

(२६६) राजानमिति।—प्रथमं सर्वादौ, राजानं भूपं, विन्देत् लभेत आश्रयेदित्यर्थः; "विन्देत्" इति क्रियापदं "भार्य्यां" "धनम्" इति पदाभ्यामपि अर्थभेदेनान्वेतव्यम्; ततः भार्य्यां स्त्रियं, विन्देत् लभेत, उद्वहेत् गृह्णीयादित्यर्थः; ततः तदनन्तरं, धनं वित्तं, विन्देत् उपार्ज्जयेदित्यर्थः, अस्मिन् लोके भुवने, (भारते शान्तिपर्वीयराजधर्म्मप्रकरणे "लोकेऽस्मिन्" इत्यत्र "लोकस्य" इति पाठान्तरम्) राजनि असति अविद्यमाने सति, राज्ये अराजके सतीत्यर्थः, कुतः कुत्र वा, भार्य्या ? कुतः वा, धनम् ? तिष्ठतीति शेषः; अराजके देशे न कोऽपि धनं कलत्रञ्च रक्षितुं शक्नुयादिति राजनिरूपणं प्रथमं कर्त्तव्यमिति भावः ।

(२६७) पर्जन्य इति।—पृथिव्याः पतिः पृथिवीपतिः राजा, पर्जन्यः मेघ इव भूतानां प्राणिनाम्, आधारः आश्रयः, पर्जन्यो यथा कदाचित् जलदानेन कदाचित् छायादानेन लोकानां सन्तापहारी भवति, तथा राजाऽपि विपदि समवर्त्ती

किञ्च,—नियतविषयवर्त्ती प्रायशो दण्डयोगात्
जगति परवशेऽस्मिन् दुर्लभः साधुवृत्तः।
कृशमपि विकलं वा व्याधितं वाऽधनं वा
पतिमपि कुलनारी दण्डभीत्याऽभ्युपैति ॥२६८॥

तद् यथा (ष) लग्नवेला (स) न चलति, तथा कृत्वा सत्वर-

---

दुर्भिक्षादौ अन्नादिदानेन च लोकानां सन्तापहरो भवति, किञ्च यथा पर्जन्ये वर्षति सति शस्यमुत्पद्यते तेन च लोको जीवति, तद्वत् राजनि रक्षितरि प्रजाः सुखेन तिष्ठन्तीति भावः; पर्जन्ये मेघे, विकलेऽपि विनष्टेऽपि, अनुदिते चावर्षत्यपि सति इत्यर्थः, जीव्यते प्राण्यते, जीवनेन स्थीयते इत्यर्थः, लोकैरिति शेषः, तु किन्तु, भूपतौ राजनि, विकले विनष्टे सतीति पूर्वेणान्वयः, न हि नैव, जीव्यते इति शेषः, इत्यभावेऽपि प्रजा यदि कथञ्चिज्जीवितुं शक्नुयुः, अराजके तु राज्ये न कथमपीत्यर्थः। (महाभारतस्य कामन्दकनीतेश्च बहुषु स्थानेषु श्लोकोऽयं विविधाऽऽत्मना सन्निवेशितो दृश्यते। शान्तिपर्व्वणि राजधर्म्मप्रकरणे—"पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः। नरास्तमुपजीवन्ति नृपं सर्वार्थसाधकम् ॥" इत्याकारतया पठितो दृश्यते)।

(२६८) कामन्दकनीतेः द्वितीयसर्गोक्तश्लोकमुपन्यस्य राजशासनस्य आवश्यकतामाह, नियतेति।—परवशे पराधीने, राजशासिते इति भावः, अस्मिन् जगति पृथिव्याम्, अत्र "लोकः" इति कर्त्तृपदमूह्यम्; प्रायशः प्रायेण, दण्डयोगात् शासनभयात्, नियतविषयवर्त्ती नियते नियमिते, विषये व्यापारे, वर्त्तते यः स तथाभूतः, शास्त्रनिर्द्दिष्टमार्गानुसारी, सत्पथप्रवृत्त इत्यर्थः, भवतीति शेषः, साधु दोषलेशशून्यं, वृत्तं चरित्रं यस्य सः, प्रकृत्या सदाचारनिरतः, दुर्लभः दुष्प्रापः, किं बहुना, कुलनारी कुलवधूः अपि, दण्डभीत्या इह च स्वामिशासनभयेन परत्र च यमदण्डभीत्या एव इत्यर्थः, कृशं क्षीणं, विकलं विकलाङ्गं वा, व्याधितं पीड़ितं वा, अधनं निर्धनमपि वा, ("अपि" इत्यत्र "इव" इति कामन्दकीयः पाठः) पतिं स्वभर्त्तारम्, अभ्युपैति अभिगच्छति, अन्यथा नैवेत्यर्थः। (मनुसंहितायास्तस्यानुरूपः श्लोको यथा—"सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः। दण्डस्य हि भयात् सर्वं जगत् भोगाय कल्पते ॥" इति)। मालिनी वृत्तम्।

(ष) लग्नवेला—शुभराश्युदयसमयः, अभिषेकार्थं निरूपितः शुभमुहूर्त्त इत्यर्थः।

(स) न चलति—नातिवर्त्तते।

मागम्यतां देवेन" इत्युक्त्वा उत्थाय चलितः। ततोऽसौ राज्य-लोभाऽऽकृष्टः कर्पूरतिलकः शृगालदर्शितवर्त्मना धावन् महापङ्के निमग्नः। हस्तिनोक्तम्,—"सखे शृगाल! किमधुना विधेयम्? महापङ्के पतितोऽहं म्रिये, (ह) परावृत्य पश्य।" शृगालेन विहस्योक्तम्,—"देव! मम (क) पुच्छाग्रे हस्तं दत्त्वोत्तिष्ठ यस्मात् (ख) मद्विधस्य वचसि त्वया विश्वासः कृतस्तत् (ग) फलमेतत्। तदनुभूयताम् (घ) अशरणं दुःखम्। तथा चोक्तम्,—

यदाऽसत्सङ्गरहितो भविष्यसि भविष्यसि।
यदाऽसज्जनगोष्ठीषु पतिष्यसि पतिष्यसि" ॥२६९॥

ततो महापङ्के निमग्नो हस्ती शृगालैर्भक्षितः। अतोऽहं ब्रवीमि,—"उपायेन हि यच्छक्यम्" इत्यादि।

[ इति गज-शृगालकथा ]।

---

( ह ) परावृत्य—प्रत्यावृत्य, गमनात् विरम्य मदभिमुखीभूयेत्यर्थः।

( क ) पुच्छाग्रे हस्तं दत्त्वा— लाङ्गूलाग्रभागं धृत्वेत्यर्थः।

( ख ) मद्विधस्य—मादृशस्य धूर्त्तस्येत्यर्थः।

( ग ) फलमेतत्—परिणतिरियम्।

( घ ) अशरणं दुःखं—नास्ति शरणं रक्षिता, उद्धारकर्त्ता इत्यर्थः, यं तादृशं, नास्ति शरणं रक्षणं, रक्षोपाय इत्यर्थः, यस्मिन् तादृशमिति वा, ("शरणं गृहरक्षित्रोः शरणं रक्षणे वधे" इति शाश्वतः) दुःखं क्लेशः।

( २६९ ) यदेति।—यदा यस्मिन् समये, असताम् असाधूनां, मादृशानां सङ्गानामिति भावः, सङ्गरहितः संसर्गहीनः, भविष्यसि, भविष्यसि तदा स्वार्थसिद्धिं जीवनं धारयिष्यसि इति भावः; यदा च असज्जनगोष्ठीषु असतां जनानां गोष्ठीषु समाजेषु, संसर्गेषु इत्यर्थः, पतिष्यसि, पतिष्यसि तदा अधःपतितो भविष्यसि, विनाशमाप्स्यसीत्यर्थः। ("यदा सत्सङ्गरहितो भविष्यसि भविष्यसि। तदाऽसज्जनगोष्ठीषु पतिष्यसि पतिष्यसि॥" इति पाठे—यदा सज्जनसंसर्गविहीनो भविष्यसि तदा असज्जनसमाजेषु पतिष्यसि अर्थात् निश्चितं निरयगामी भविष्यसि! "भविष्यसि भविष्यसि" इत्यत्र निश्चये द्विरुक्तिः)।

ततः कुट्टिन्युपदेशेन तं चारुदत्तनामानं वणिक्पुत्रं स राजपुत्रः सेवकं चकार। ततः (ङ) असौ (च) तेन सर्व-विश्वासकार्य्येषु नियोजितः।

एकदा कुट्टिन्युपदेशेन तेन राजपुत्रेण (छ) स्नातानुलिप्तेन (ज) कनकालङ्कारधारिणोक्तम्,—"चारुदत्त! मया मासमेकं यावद् (झ) गौरीव्रतं कर्त्तव्यम्। तदद्याऽऽरभ्य प्रतिरात्रमेकां (ञ) कुलीनां युवतीमानीय समर्पय। सा मया (ट) यथोचितेन विधिना पूजयितव्या"। ततः स चारुदत्तस्तथाविधां (ठ) तरुणीमानीय समर्पयति। पश्चात् (ड) प्रच्छन्नः सन् किमयं करोतीति (ढ) निरूपयति। स च तुङ्गबलस्तां युवतीमस्पृशन्नेव दूराद्वस्त्रालङ्कारगन्धचन्दनैः सम्पूज्य रक्षकं दत्त्वा तत्क्षणमेव प्रस्थापयति।

अथ तेन वणिक्पुत्रेण तद्दृष्ट्वा (ण) उपजातविश्वासेन लोभा-

---

(ङ) असौ—चारुदत्तः।

(च) तेन—राजपुत्रतुङ्गबलेन।

(छ) स्नातानुलिप्तेन—पूर्वं स्नातः पश्चादनुलिप्तः चन्दनादिदिग्धदेहः तेन।

(ज) कनकालङ्कारधारिणा—परिहितसुवर्णविभूषणेन।

(झ) गौरीव्रतं—तृतीयाकल्पोक्तविधौ शक्तिसाधकानां कर्त्तव्यो व्रतविशेषः। महानिशायां कामपि सुरूपां युवतीमानीय तां देवीभावेन वस्त्रालङ्कारादिकं दत्त्वा साधकाः पूजयन्ति। तत्र साधकस्य चित्तविकारे सञ्जाते व्रतविनाशो भवति, साधकस्य चाधःपाती भवतीति तन्त्रशास्त्रम्।

(ञ) कुलीनां—सत्कुलसम्भूताम्।

(ट) यथोचितेन विधिना—यथाशास्त्रेण अनुष्ठानेन।

(ठ) तरुणीं—युवतीम्।

(ड) प्रच्छन्नः,—निभृतः, अन्तराले अवस्थित इत्यर्थः।

(ढ) निरूपयति—निर्णेति, निरीक्षते इत्यर्थः।

(ण) उपजातविश्वासेन—उपजातः उत्पन्नः, विश्वासः राज्ञो विशुद्धचरित्रे

ऽऽक्षष्टमनसा स्ववधूः समानीय समर्पिता। स च तुङ्गबल
हृदयप्रियां लावण्यवतीं विज्ञाय (त) ससम्भ्रमसुत्थाय नि
मालिङ्ग्य (थ) आनन्दनिमीलितलोचनः प्रहृष्टमना बहुवि
अनङ्गक्रीड़ां विधाय पर्य्यङ्के तया सह (द) सुष्वाप। तदव
वणिक्पुत्रः (ध) चित्रलिखित इव (न) इतिकर्त्तव्यतामूढ़
विषादमुपागतः। अतोऽहं ब्रवीमि,—"स्वयं वीक्ष्य" इत्या
तथा त्वयाऽपि भवितव्यम्" इति।

[ इति राजपुत्र-वणिक्पुत्रवधूकथा ]।

ततस्तद्धितवचनम् (प) अवधीर्य्य महता भयेन विमुग्ध
मन्थरस्तं जलाशयमुत्सृज्य प्रचलितः। तेऽपि हिरण्यका
स्नेहादनिष्टं शङ्कमानास्तमनुजग्मुः। ततः स्थले गच्छ
केनापि व्याधेन वनं पर्य्यटता स मन्थरः (फ) प्राप्तः। स
गृहीत्वा उत्थाप्य धनुषि बद्ध्वा "धन्योऽस्मि" इत्यभिधाय भ्र
क्लेशात् क्षुत्पिपासाऽऽकुलः स्वगृहाभिमुखं प्रयातः। अथ
मृग-वायस-मूषिकाः परं विषादमुपगतास्तमनुगच्छन्ति
ततो हिरण्यको विलपति,—

प्रत्ययः यस्य तेन, राजपुत्रवचसि ज्ञातप्रत्ययेन, राजपुत्रोऽयं जितेन्द्रियः, न प
कामभावेन पश्यति इत्येवं विश्वस्येत्यर्थः। लोभाऽऽकृष्टमनसा—वस्त्रालङ्कारादि
लुब्धचित्तेन।

(त) ससम्भ्रमं—सम्भ्रमः त्वरा, तेन सह वर्त्तमानं यथा स्यात् तथा, [
विशेषणम् ]। ("सम्भ्रमस्त्वरा" इत्यमरः)। निर्दयं—निष्करुणं, प्रगाढ़
यावत्। ("निर्भरम्" इति पाठान्तरम्)।

(थ) आनन्दनिमीलितलोचनः,—हर्षसम्मुकुलितनयनः।

(द) सुष्वाप—निदद्रौ। [ स्वप + लिट्-णल् ]।

(ध) चित्रलिखितः,—आलेख्याङ्कितः इव, निष्पन्द इत्यर्थः।

(न) इतिकर्त्तव्यतामूढ़ः,—कर्त्तव्यावधारणाक्षमः।

(प) अवधीर्य्य—अवज्ञाय।

(फ) प्राप्तः,—गृहीतः।

"एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य।
तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति॥२७०॥
स्वभावजन्तु यन्मित्रं भाग्येनैवाभिजायते।
तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति॥२७१॥
अपि च,—न मातरि न दारेषु न सोदर्य्ये न चाऽऽत्मजे।
विश्वासस्तादृशः पुंसां यादृङ्मित्रे स्वभावजे" ॥२७२॥
इति (व) मुहुर्विचिन्त्य,—"अहो! मे (भ) दुर्दैवम्; यतः,—

(२७०) एकस्येति।—अहम् अर्णवस्य समुद्रस्य, पारम् अपरतीरमिव, यावत् एकस्य दुःखस्य निजधनविनाशजनितस्य चित्रग्रीवबन्धनपीडाजनितस्य वा क्लेशस्य, अन्तम् अवसानं, न गच्छामि यावत् एकस्या विपदः न परित्रातोऽस्मीत्यर्थः, अहम् अनन्तसमुद्रस्य पारमिव अनन्तदुःखस्य पारं यावत् द्रष्टुं न शक्नोमीति भावः; तावत् मे मम, द्वितीयं मन्थरस्य व्याधकराधिगमनरूपम् अन्यत्, दुःखमिति शेषः, समुपस्थितं समापतितम्; तथाहि छिद्रेषु रन्ध्रेषु, प्रवेशावकाशेष्वित्यर्थः, सत्सु, अनर्थाः अमङ्गलानि, अबहुलाः बहुलाः भवन्ति बहुलीभवन्ति प्रचुरीभवन्ति, विस्तृतिमापद्यन्ते इत्यर्थः, विपत् विपदमनुगच्छतीति भावः। इन्द्रवज्रा वृत्तम्।

(२७१) स्वभावेति।—यत् स्वभावजं प्रकृत्या निष्पन्नम्, अकृत्रिमम् इति यावत्, मित्रं सुहृत्, भाग्येन बहुपुण्यफलेन, अभिजायते निष्पद्यते, अकृत्रिमम् अकपटं, सौहार्दं यस्य तत् तादृशं, तत्तु मित्रम्, आपत्स्वपि विपत्तौ अपि, न मुञ्चति न त्यजति, तादृशो हि बन्धुः सुखे सुखी दुःखे च दुःखी भवतीत्यर्थः। यद्वा—यत् मित्रं सुहृत्, आपत्स्वपि न मुञ्चति, तत्तु तदेव, स्वभावजं सहजम्, अत एव अकृत्रिमसौहार्दम् अकृत्रिमं सौहार्दं यस्य तथाविधं, भवतीति शेषः, ईदृशं मित्रं भाग्येनैव शुभादृष्टवशेनैव, अभिजायते, अयन्तु तादृशं मित्रं, तदेनं विहाय कथं गच्छामि तिष्ठामि वेति हृदयम्।

(२७२) नेति।—पुंसां पुरुषाणां, स्वभावजे स्वाभाविके, अकृत्रिमे इति यावत्, मित्रे सुहृदि, यादृक् यादृशः, विश्वासः प्रत्ययः, भवति इति शेषः, तादृशः तादृक् विश्वासः, मातरि जनन्यां, न, दारेषु स्त्रियां, न, सोदर्य्ये सहोदरे भ्रातरि, न, आत्मनः जायते यः सः तस्मिन् आत्मजे च निजांशे पुत्रेऽपि, न, भवतीति शेषः।

(व) मुहुः,—वारंवारम्।

(भ) दुर्दैवं—दुरदृष्टं, भाग्यविपर्य्यासः इति यावत्।

स्वकर्मसन्तानविचेष्टितानि
कालान्तराऽऽवृत्तिशुभाशुभानि ।
इहैव दृष्टानि मयैव तानि
जन्मान्तराणीव दशाऽन्तराणि ॥२७३॥

अथवा (म) इत्थमेवैतत्,—

काय: सन्निहितापाय: सम्पद: पदमापदाम् ।
समागमा: सापगमा: सर्वमुत्पादि भङ्गुरम्" ॥२७४॥

पुनर्विमृश्याऽऽह,—

---

( २७३ ) स्वेति ।—स्वस्य कर्मसन्तान: पापपुण्यजनकक्रियासमूह:, विचेष्टितानि विलसितानि, नियतविलसनशीलनिजकृतकर्मसमूहा:, अन्य: का कालान्तरं, तस्य आवृत्त्या आवर्त्तनेन, जन्मान्तरलाभेनेत्यर्थ:, शुभाशुभे शुभाशुभ इत्यर्थ:, येषां तानि तादृशानि, भवन्तीति शेष:, इह जन्मनि कृत शुभाशुभकर्मण: फलानि परजन्मनि लोका उपभुञ्जते इति हि नैसर्गिक इति भाव: ; मयैव मया खलु, न तु अन्येन केनापि इत्येवकारार्थ:, जन्मान्तरं परजन्मभोग्यानीत्यर्थ:, दशान्तराणीव अवस्थान्तराणीव, यानि दशान्तरं जन्मान्तरोपभोग्यानि तानीवेत्यर्थ:, तानि कालान्तराऽऽवृत्तिशुभाशुभानि स्वक सन्तानविचेष्टितरूपाणि दशान्तराणीत्यर्थ:, इहास्मिन् जन्मनि एव, न तु जन्मा इत्येवकारार्थ:, दृष्टानि अनुभूतानि ; अहो मे भाग्यवैचित्र्य, यत् लोकविलक्ष सर्व्वमेव मयि सम्भाव्यते इति भाव: । उपजाति: वृत्तम् ।

( म ) इत्थमेवैतत्—संसारस्य परिवर्त्तनशीलता दृष्टश्चैव ।

( २७४ ) काय इति ।—काय: शरीरं, सन्निहित: निकटवर्त्ती, आसन्न: इत्यं अपाय: नाश: यस्य स: आसन्नध्वंस:, भवतीति शेष:, "जातस्य हि ध्रुवो मृ इति भाव: ; सम्पद: सम्पत्तय:, आपदां विपदां, पदं स्थानम्, आश्रय इत्यं भवन्तीति शेष:, सम्पदेवानिष्टमूलं यत: सम्पन्नस्यैव चौर्य्याद्युपद्रवो जाते नान्यस्य इति भाव: ; समागमा: वान्धवै: सह संयोगा:, सापगम सवियोगा:, अवश्यम्भाविविच्छेदाऽऽयतिका इत्यर्थ:, मेलनं कस्यापि नियतकालवृत्ति भवतीति भाव: ; तथाहि उत्पद्यते जायते यत् उत्पादि उत्पत्तिशीलं, सर्वं सकलमेव वस्तु, भङ्गुरं विनाशी

"शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम्।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम्?॥२७५॥
किञ्च,—
मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः
पात्रं यत् सुखदुःखयोः सह भवेन्मित्रेण तद्दुर्लभम्।
ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाऽऽकुलाः
ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत्"॥२७६॥

भवतीति शेषः; जन्यवस्तुमात्रमेव ध्वसते, अतो मिलनानन्तरमस्मिन्विरहः स्वाभाविक एवेति भावः। (भारतशान्तिपर्वीयराजधर्मवर्णने अस्यानुरूपश्लोको दृश्यते, यथा—"सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः। संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम्॥" इति)।

(२७५) शोकेति।—शोकः पुत्रादीष्टवियोगजनितं दुःखम्, अरातिः शत्रुः, भयं भीतिः, तेभ्यस्त्राणम् उद्धारः यस्मात् तादृशं, प्रीतिः मनःप्रसादः, विश्रम्भः विश्वासः, तयोर्भाजनं पात्रं, मित्रमिति अक्षरद्वयं वर्णद्वयात्मकम्, इदं रत्नं पृथिव्याः सारभूतम् अमूल्यं वस्तु, केन विधात्रा, सृष्टम् उत्पादितम्? येनेदमक्षरद्वयं सृष्टं स महापुरुष इत्यत्र नास्ति सन्देहावकाश इत्यभिप्रायः। यद्वा—मित्रमित्यक्षरद्वयं शोकारातिभयत्राणं तथा प्रीतिविश्रम्भस्थानं, भवतीति शेषः, रत्नं रत्नस्वरूपम् इदं केन सृष्टम्? इति।

(२७६) मित्रमिति।—यत् मित्रं सुहृत्, नयनयोः चक्षुषोः, प्रीतिरसायनं प्रीतिकर औषधविशेषः, रसायनतुल्यमित्यर्थः, रसायनाख्यौषधविशेषो यथा देहस्य ईर्षाद्युत्पादको भवति, मित्रमपि नयनयोस्तथेति भावः; यद्वा—प्रीतिरसयोः स्नेहानुरागयोः, अयनं स्थानम्, आधार इति यावत्, ("स्निग्धरसाञ्जनम्" इति पाठे,—रसाञ्जनाख्यः नेत्रतर्पकौषधविशेषतुल्य इत्यर्थः) चेतसः हृदयस्य, आनन्दनम् आनन्दजनकं, तथा मित्रेण मित्रपदवाच्येन, सह सार्द्धं, सुखदुःखयोः हर्षविषादयोः, पात्रं भाजनं, भवेत्, अर्थात् मित्रपदवाच्यस्य सुखे सुखितं दुःखे च दुःखितं भवेत्, तत् तादृशं मित्रं, दुर्लभं विरलम्; यद्वा—यत् सुखदुःखयोः पात्रं, मित्रेण तादृशेन सुहृदा सह, भवेत् तिष्ठेदित्यर्थः, परन्तु तत् दुर्लभम्; ("सममिदं पुण्यात्मना लभ्यते" इत्यपि पाठान्तरं दृश्यते, तत्र—यत् सुखदुःखयोः समं तुल्यं, पात्रम्, इदम् ईदृशं

इति बहु विलप्य हिरण्यकश्चित्राङ्गलघुपतनकावाह,— "यावदयं व्याधो वनान्न (य) निःसरति, तावन्मन्थरं मोचयि... यत्नः क्रियताम्।" तौ ऊचतुः,—"सत्वरं (र) यथा का... सुपदिश।" हिरण्यको ब्रूते,—"चित्राङ्गो जलसमीपं ग... मृतमिव आत्मानं (ल) निश्चेष्टं दर्शयतु, काकश्च तस्यो... स्थित्वा चञ्च्वा (व) किमपि (श) विलिखतु। नूनमनेन लुब्ध... मृगमांसार्थिना तत्र कच्छपं परित्यज्य सत्वरं गन्तव्य... ततोऽहं मन्थरस्य बन्धनं छेत्स्यामि, सन्निहिते लुब्धके भव... पलायितव्यम्"। ततश्चित्राङ्गलघुपतनकाभ्यां शीघ्रं ग... तथाऽनुष्ठिते सति स व्याधः परिश्रान्तः पानीयं पी... तरोरधस्तादुपविष्टः सन् (ष) तथाविधं मृगम् अपश्यत्। त...

मित्रं, पुण्यात्मना सकृतिमता जनेन, लभ्यते प्राप्यते) समृद्धिसमये सम्प... द्रव्याभिलाषाऽऽकुलाः धनलोलुपाः, ये च अन्ये अपरे, सुहृदः बान्धवाः, इत्यर्थः... शेषः, ते तादृशाः बान्धवाः, सर्व्वत्र सर्व्वस्मिन् स्थाने सर्व्वस्मिन् काले च, लि... सुप्राप्याणि भवन्तीत्यर्थः, तिष्ठन्ति इति यावत्, तादृशानि मित्राणि न दुर्लभ... भावः; तु किन्तु, विपत् विपत्तिकाल एव, तेषां तादृशानां, तत्त्वनिक... स्वरूपनिर्णायकप्रस्तरः, कृत्रिमाकृत्रिमनिर्द्धारणे निकषोपल इव ... निकषपाषाणे यथा सुवर्णस्य विशुद्धिः परिलक्ष्यते, तथा विपत्कावे ... मिति भावः। तथाचोक्तम्,—"मित्रस्वजनबन्धूनां बुद्धेर्धैर्य्यस्य चात्म... आपन्निकषपाषाणे नरो जानाति सारताम्॥" इति। शार्दूलविक्रीडितं वृत्तम्।

(य) निःसरति—निर्गच्छति, [ निःसरतीति यावद् योगे भविष्यदर्थे ...

(र) यथा—यादृशः यत्न इत्यर्थः। कार्य्यं—कर्त्तव्यम्।

(ल) निश्चेष्टं—चेष्टाविरहितं, निस्पन्दमित्यर्थः।

(व) किमपि—किञ्चिदङ्गमित्यर्थः।

(श) विलिखतु—विदारयतु।

(ष) तथाविधं—मृतवत् निश्चेष्टम्।

कच्छपं जलसमीपे निधाय (स) कर्त्तरिकाम् आदाय प्रहृष्टमना मृगान्तिकं चलितः। अत्रान्तरे हिरण्यकेन आगत्य मन्थरस्य बन्धनं छिन्नम्; (ह) छिन्नबन्धनः स कूर्मः सत्वरं जलाशयं प्रविष्टः, स च मृगः आसन्नं तं व्याधं विलोक्य उत्थाय द्रुतं पलायितः। (क) प्रत्यावृत्य लुब्धको यावत् तरुतलम् आयाति, तावत् कूर्ममपश्यन् अचिन्तयत्,—"उचितमेवैतत् मम (ख) असमीक्ष्यकारिणः। यतः,—

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि" ॥ २७७ ॥

ततोऽसौ (ग) स्वकर्मवशान्निराशः (घ) कटकं प्रविष्टः। मन्थरादयश्च सर्व्वे (ङ) मुक्ताऽऽपदः स्वस्थानं गत्वा (च) यथा-सुखम् आस्थिताः।

[ इति काक-कूर्म्म-मृग-मूषिककथा ]।

---

(स) कर्त्तरिकां—छुरिकाम्।

(ह) छिन्नबन्धनः,—छिन्नं बन्धनं यस्य सः।

(क) प्रत्यावृत्य—प्रत्यागत्य।

(ख) असमीक्ष्यकारिणः,—हठकारिणः, अविवेचकस्येत्यर्थः।

(२७७) चाणक्यवचनेन अविमृश्यकारिणः फलमाह, य इति।—यः जनः, ध्रुवाणि निश्चितानि, हस्तस्थितानीति यावत्, वस्तूनीति शेषः, परित्यज्य विहाय, अध्रुवाणि अनिश्चितानि, निषेवते आश्रयति अवलम्बते वा, अलब्धविषयप्राप्त्यर्थं यतते इत्यर्थः, तस्य ध्रुवाणि निश्चितानि, नश्यन्ति अपगच्छन्ति, अध्रुवम् अनिश्चितन्तु, नष्टमेव लुप्तमेव, अनधिगतत्वादिति भावः, हि निश्चये।

(ग) स्वकर्मवशात्—निजासमीक्ष्यकारितादोषादित्यर्थः, स्वकीयदुर्भाग्य-वशतः इति भावः। निराशः,—हताशः।

(घ) कटकं—शिविरमित्यर्थः, कलिङ्गदेशाधिपतेः वस्त्रराजधानीं वा।

(ङ) मुक्ताऽऽपदः,—मुक्ता अतिक्रान्ता, आपत् यैस्ते, मुक्ता आपन्नाः ये ते इति वा, अतिक्रान्तविपत्तयः।

(च) यथासुखं—सुखमनतिक्रम्य, यादृक्तया अवस्थानेन सुखं भवति तथेत्यर्थः,

अथ राजपुत्रैः सानन्दमुक्तम्,—"सर्वं श्रुतवन्तः सुखिनो वयम्। (छ) सिद्धं नः (ज) समीहितम्।" विष्णुशर्मोवाच,—"एतावद्भवताःमभिलषितं (झ) सम्पन्नम्। अपरमपि इदमस्तु,—

मित्रं प्राप्नुत सज्जना जनपदैः लक्ष्मीः समालभ्यतां
भूपालाः परिपालयन्तु वसुधां शश्वत् स्वधर्मे स्थिताः।
आस्तां मानसतुष्टये सुकृतिनां नीतिर्नवोढ़ेव वः
कल्याणं कुरुतां जनस्य भगवांश्चन्द्रार्द्धचूड़ामणिः॥२७८

इति श्रीविष्णुशर्म्म-सङ्गृहीते हितोपदेशे मित्रलाभो
नाम प्रथमः कथासङ्ग्रहः॥ १॥

---

सुखेनेति यावत्।

(छ) सिद्धं—निष्पन्नं, सफलं जातमित्यर्थः।

(ज) समीहितं—मनोरथः।

(झ) सम्पन्नं—सिद्धम्।

(२७८) मित्रमिति।—हे सज्जनाः! साधवः!, यूयं मित्रं सुहृदं, प्राप्नुत लभध्वम्। [ केचित्तु पुनः पुनर्लभन्तामिति व्याचक्षते। तत्र "क्रियासमभिहारे लोट्—"(३।४।२ पा०) इति सूत्रेण मध्यमपुरुषं व्याख्यानयन्ति। क्वचित् "मित्रं यान्तु च सज्जनाः" इति पाठान्तरम् ]। जनपदैः जनैः, जनपदवासिभिरित्यर्थः ( "भवेज्जनपदो जानपदोऽपि जनदेशयोः" इति मेदिनी ) लक्ष्मीः ऐश्वर्य्यं, सम् लभ्यतां प्राप्यतां, [ सर्वत्र आशंसायां लोट् ] भूपालाः राजानः, स्वधर्मे प्रजारक्षणरूपे राजधर्म्मे, स्थिताः अनुरक्ताः सन्तः, शश्वत् नित्यकालं, वसुधां पृथ्वीं, परिपालयन्तु रक्षन्तु, वः युष्माकं, नीतिः नयज्ञानं, नवोढ़ेव नवपरिणीता वधूरिव, सुकृतिनां विदुषां, मानसतुष्टये मनःप्रीत्यर्थम्, आस्तां भूयात्; यद्वा—नीतिः नयज्ञता, नवोढ़ेव सुकृतिनां धन्यानां, भाग्यवतामित्यर्थः, वः मानसतुष्टये आस्ताम्। ( "नीतिः प्रणीता मया" इति पाठे—मया विष्णुशर्म्मणा, प्रणीता नीतिः, सुकृतिनां मानसतुष्टये आस्ताम्) भगवान् षड़ैश्वर्य्यसम्पन्नः, चन्द्रार्द्धचूड़ामणिः अर्द्धचन्द्रमौलिः शिवः, जनस्य कल्याणं मङ्गलं, कुरुतां वितरतु। शार्दूलविक्रीड़ितं वृत्तम्।

इति श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्यकृता मित्रलाभव्याख्या॥ १॥

---

# अथ सुहृद्भेदः।

अथ राजपुत्रा ऊचुः,—(क) "आर्य्य ! मित्रलाभः श्रुतस्तावदस्माभिः। इदानीं (ख) सुहृद्भेदं श्रोतुमिच्छामो वयम्।" विष्णुशर्म्मोवाच,—"सुहृद्भेदं शृणुत, यस्यायमाद्यः श्लोकः,—

वर्द्धमानो महान् स्नेहो मृगेन्द्रवृषयोर्वने।
पिशुनेनातिलुब्धेन जम्बुकेन विनाशितः" ॥ १ ॥

राजपुत्रैरुक्तम्,—"कथमेतत् ?"। विष्णुशर्मा कथयति,—

वणिग्-वृषभ-सिंह-शृगालद्वयकथा।—

"अस्ति (ग) दक्षिणापथे सुवर्णवती नाम नगरी। तत्र वर्द्धमानो नाम वणिक् (घ) महाधनः प्रतिवसति स्म। तस्य

---

(क) आर्य्य!—पूज्य!; अथवा—"कर्त्तव्यमाचरन् कार्य्यमकर्त्तव्यमनाचरन्। वर्त्तते सद्गुदाचारे स वा आर्य्य इति स्मृतः॥" इत्युक्तलक्षणः तत्सम्बुद्धौ।

(ख) सुहृद्भेदं—सुहृदां बन्धूनां, भेदः विच्छेदः यस्मिन् अध्याये तं सुहृद्भेदविषयकं, "मित्रलाभः सुहृद्भेदो विग्रहः सन्धिश्च" इति हितोपदेशग्रन्थस्य भागचतुष्टयस्यैकतमभागम्।

(१) वर्द्धमान इति।—वने वक्ष्यमाणदुर्गमारण्ये, मृगेषु इन्द्रः मृगेन्द्रः पशुराजः सिंहः, स च वृषश्च तयोः, [ अत्र वृषपदस्य अल्पस्वरत्वेऽपि अभ्यर्हितत्वात् मृगेन्द्रस्य पूर्व्वनिपातः ] वर्द्धमानः प्रतिदिवसं वृद्धिं गच्छन्, महान् स्नेहः गाढ़प्रणयः, अतिलुब्धेन अतीवलोभपरायणेन, पिशुनेन खलेन, जम्बुकेन शृगालेन, विनाशितः भेदं प्रापितः।

(ग) दक्षिणापथे—ऋक्षवदवन्तीनगरीमतिक्रम्य दक्षिणदिग्वर्त्तिदेशे।

(घ) महाधनः,—धनवान्।

(ङ) प्रभूतेऽपि वित्तेऽपरान् बन्धून् (च) अतिसमृद्धान् विलो(क्य)
पुनरर्थवृद्धिः करणीयेति मतिर्बभूव। यतः,—

अधोऽधः पश्यतः कस्य महिमा नोपचीयते।
उपर्य्युपरि पश्यन्तः सर्वे एव दरिद्रति ॥ २ ॥

अपरञ्च,—ब्रह्महाऽपि नरः पूज्यो यस्यास्ति विपुलं धनम्।
शशिनस्तुल्यवंशोऽपि निर्धनः परिभूयते ॥ ३ ॥

अन्यच्च,—अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीणम्।
प्रमदेव हि वृद्धपतिं नेच्छत्युपगूहितुं लक्ष्मीः ॥ ४ ॥

---

(ङ) प्रभूतेऽपि—प्रचुरेऽपि, असङ्ख्येऽपीति यावत्। वित्ते—धने। [
धातोः क्तः]।

(च) अतिसमृद्धान्—प्रचुरैश्वर्य्यान्, स्वापेक्षया अधिकधनशालिनः इत्यर्थः

(२) अधः इति।—अधः अधः नीचैर्नीचैः, आत्मापेक्षया हीनं
यावत्, ["उपर्य्यध्यधसः सामीप्ये" (८।१।७ पा०) इति सामीप्यार्थे द्वि
पश्यतः अवलोकयतः, हीनतरेण सह आत्मतुलनां कुर्वत इत्यर्थः, कस्य
महिमा गौरवं, प्राधान्याभिमानः इति यावत्, न उपचीयते? न व
अपि तु सर्व्वस्यैवेत्यर्थः, [कर्म्मकर्त्तरि लट्] उपरि उपरि उच्चैरुच्चैः, [
पूर्ववत् द्विर्वचनम्] पश्यन्तः अवलोकयन्तः, महत्तरेण सह आत्मतुलनां
इत्यर्थः, सर्वे एव लोकाः, दरिद्रति दुर्गता भवन्ति, आत्मानं दरिद्रं
इत्यर्थः।

(३) चाणक्योक्तिमुपन्यस्य सधननिर्धनयोरन्तरं प्रदर्शयति, ब्रह्महाऽपीति
यस्य नरस्य, विपुलं प्रचुरं, धनम् अर्थः, अस्ति विद्यते, सः नरः, ब्रह्माणं हन्ति
ब्रह्महा ब्रह्मघ्नोऽपि, पूज्यः पूजार्हः, भवति इति शेषः, महापापकृदपि
वांश्चेत् सर्वेषां सम्मानार्हं इत्यर्थः, निर्धनः धनहीनः, शशिनश्चन्द्रस्य,
[तुल्यार्थे वैकल्पिकी षष्ठी] वंशो यस्य सः, विशुद्धवंशजातोऽपि, परिभूयते
लोकैरिति शेषः, वंशमर्य्यादायाः धनमर्य्यादा गरीयसी इति भावः।

(४) अव्यवसायिनमिति।—अव्यवसायिनं निरुद्यमम्, अव्यवसा
मित्यर्थः, अलसं निश्चेष्टं, दैवपरं दैवमात्रावलम्बिनं, भाग्ये यदस्ति तदेव भविष्यति
वदन् निश्चेष्टतया अवस्थितमित्यर्थः, साहसाच्च परिहीणं साहसाद्

किञ्च,—आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम्।
सन्तोषो भीरुत्वं षड् व्याघाता महत्त्वस्य ॥ ५ ॥
यतः,—सम्पदा सुस्थितम्मन्यो भवति स्वल्पयाऽपि यः।
कृतकृत्यो विधिर्मन्ये न वर्द्धयति तस्य ताम् ॥ ६ ॥
अपरञ्च,—निरुत्साहं निरानन्दं निर्वीर्य्यमरिनन्दनम्।
मास्म सीमन्तिनी काचित् जनयेत् पुत्रमीदृशम् ॥ ७ ॥
तथाप्युक्तम्,—

---

जनमिति शेषः, प्रमदा युवती, वृद्धपतिमिव स्थविरभर्त्तारमिव, लक्ष्मीः सम्पदधिष्ठात्री देवी, उपगूहितुमालिङ्गितुम, आश्रयितुमित्यर्थः, न हि नैव, इच्छति कामयते, एतादृशः पुरुषः सम्पदं नाधिगच्छतीत्यर्थः। आर्य्या वृत्तम्।

(५) आलस्यमिति।—आलस्यं निरुत्साहत्वं, स्त्रीसेवा स्त्रीवशीभूतता, स्त्रीसम्भोगपरायणता वा, सरोगता चिररोगिता, जन्मभूमिवात्सल्यं स्वदेशप्रीतिः, तेन च विदेशगमनविमुखता इति भावः, सन्तोषः अनुन्नतावस्थायामपि चित्तप्रसादः, आकाङ्क्षाराहित्यमिति भावः, भीरुत्वं कार्य्यसम्पादनादौ शंशयाऽऽकुलचित्तता, एतानि षट् महत्त्वस्य उन्नतेः, धनवत्ताया इति यावत्, व्याघाताः अन्तरायाः, प्रतिरोधका इत्यर्थः। आर्य्या वृत्तम्।

(६) सम्पदेति।—यो जनः, स्वल्पयाऽपि अत्यल्पयाऽपि, सम्पदा ऐश्वर्य्येण, सुस्थितम्मन्यः आत्मानं सुस्थितं मन्यते इति तथोक्तः, सुखी इत्यर्थः, ( "सुस्थिरम्मन्यः" इति पाठान्तरम् ) भवति, मन्ये उत्प्रेक्षे, विधिर्विधाता, कृतकृत्यः कृतार्थः, स्वल्पेनैव धनेन सुस्थितम्मन्यत्वात् अल्पदानेनैव सम्पादितस्वकर्त्तव्यः सन्, तस्य स्वल्पतुष्टस्य जनस्य, तां स्वल्पां सम्पदं, न वर्द्धयति वृद्धिं न गमयति, उन्नतिमप्रार्थयमानस्य न स्यादेव उन्नतेः सम्भावनेति भावः। श्लोकोऽयं शिशुपालवधस्य द्वितीयसर्गेऽपि दृश्यते।

(७) निरुत्साहमिति।—काचित् काऽपि, सीमन्तिनी नारी, निरुत्साहम् उद्योगशून्यं, निरानन्दं हर्षपरिशून्यं, ("निरानन्दं निरुत्साहम्" इति महाभारतोद्योगपर्वीयपाठान्तरम्)। निर्वीर्य्यं पराक्रमशून्यम्, अत एव अरिनन्दनं शत्रूणाम् आनन्दवर्द्धनम्, उत्साहादिपरिशून्यत्वेन परिभवास्पदत्वादिति भावः, ईदृशं पुत्रं मास्म जनयेत् नैव उत्पादयेत्, गर्भे न धारयेदित्यर्थः। [ इच्छार्थे लिङ् ]।

अलब्धञ्चैव लिप्सेत लब्धं रचेदपचयात्।
रचितं वर्द्धयेत् सम्यक् वृद्धं तीर्थेषु निचिपेत्॥ ८॥

(छ) अवर्द्धमानश्चार्थः कालेन स्वल्पव्ययेऽपि (ज) अञ्जनवत् चयमेति। (झ) अनुपभुज्यमानश्च निष्प्रयोजन एव सः।

तथाह्युक्तम्,—

अञ्जनस्य चयं दृष्ट्वा वल्मीकस्य च सञ्चयम्।
अवन्ध्यं दिवसं कुर्य्यात् दानाध्ययनकर्मभिः॥ ९॥

---

(८) मनुसंहितायाः सप्तमाध्यायोक्तं विधिमनुसृत्य धनविषयकमिति निर्द्दिशति, अलब्धमिति।—अलब्धञ्चैव अनधिगतमेव, धनमिति शेषः, लिप्सेत इच्छेत्, लब्धञ्च प्राप्तञ्च, धनमिति शेषः, अपचयात् नाशात्, चौर्य्यादेरिति (“अपचयात्” इत्यत्र “अवेचया” इति पाठे—सम्यग्दर्शनादिना) रचेत् सन् पालयेत्, रचितं सञ्चितं, धनमिति शेषः, सम्यक् अतिशयेन, वाणिज्यादौ नियोगादिना वृद्धिं गमयेत्, वृद्धं वृद्धिं प्रापितं, धनमिति तीर्थेषु दानयोग्येषु पात्रेषु, निचिपेत् दद्यात्।

(छ) अवर्द्धमानः,—वृद्धिमनाप्नुवन्। (“अवर्द्धमानः” इत्यादेः “यतोऽलब्धमिच्छतोऽर्थयोगात् अर्थस्य प्राप्तिरेव। लब्धस्याप्यरक्षितस्य स्वयं विनाशः” इत्यधिकः पाठः क्वचित्)।

(ज) अञ्जनवत्—कज्जलवत्, परिचीणरेखं चक्षुरञ्जनं यथा मार्जनाऽपि क्रमशः स्वयमेव अनुपलचितमेव चयमेति तद्वदिति भावः।

(झ) अनुपभुज्यमानः,—तीर्थनिचेपादिना अक्रियमाणभोगः।

(९) अञ्जनस्येति।—अञ्जनस्य कज्जलस्य, सूक्ष्मरेखस्येति यावत्, स्यापि अवर्द्धमानस्येति भावः, चयं क्रमशः नाशं, वल्मीकस्य कीटविशेषकृतस्य स्तूपस्य, प्रतिदिनं किञ्चित् किञ्चित् वर्द्धमानस्य अतितुच्छस्यापीति भावः, दृष्ट्वा अवलोक्य, उभाभ्याम् उभयविधं चयसञ्चयोपदेशं लब्ध्वा इत्यर्थः, (“... तदर्द्धेन तदर्द्धार्द्धचरेण च” इति वृद्धचाणक्योक्तः पाठः) दानं प्रतिपादनम्, अध्ययनं श्रुतिपाठः, कर्म श्रुतिस्मृतिविहितं कार्य्यं तैः, दिवसं अवन्ध्यं सफलं, कुर्य्यात्, चक्षुषोरतिसन्निकर्षे विशिष्टप्रयत्नेन संस्थापितमपि क्रियाऽभावात् अञ्जनं क्रमशो विलीयते, वल्मीकं पुनरतितुच्छं यत्र तत्रापि

यतः,—जलबिन्दुनिपातेन क्रमशः पूर्य्यते घटः ।
स हेतुः सर्व्वविद्यानां धर्म्मस्य च धनस्य च ॥ १० ॥

इति सञ्चिन्त्य वर्द्धमानः नन्दकसञ्जीवकनामानौ द्वौ वृषभौ (ज) धुरि नियोज्य शकटं (ट) नानाविधद्रव्यपूर्णं कृत्वा वाणिज्येन काश्मीरं प्रति चलितः । यतः,—

कोऽतिभारः समर्थानां ? किं दूरं व्यवसायिनाम् ? ।
को विदेशः सविद्यानां ? कः परः प्रियवादिनाम् ? ॥११॥

अथ गच्छतस्तस्य दुर्गमनाम्नि महाऽरण्ये (ठ) भग्नजानुः

---

वोकलीचनान्तरालावस्थितमपि प्रतिदिनं सञ्चीयमानत्वात् क्रमशो वर्द्धते, एवञ्च अल्पाहृतस्यापि चयिष्णुत्वात् प्रतिदिनं किञ्चित् किञ्चित् दानादिकर्म्मणा पारलौकिक पुण्यसञ्चयं कुर्य्यादिति निष्कर्षः ।

(१०) धनसञ्चये वृद्धचाणक्यमतं प्रदर्शयति, जलेति ।—क्रमशः क्रमेण, जलबिन्दुनिपातेन वारिबिन्दुपातनेन, प्रतिदिनं बिन्दुशो जलनिक्षेपेणेत्यर्थः, घटः पूर्य्यते पूरितो भवति, सः जलबिन्दूनां क्रमनिपातवत् क्रमनिपात इत्यर्थः, प्रतिदिनमल्पशः सञ्चय इति यावत्, सर्व्वविद्यानां श्रुत्यादिसर्व्वशास्त्राणां, धर्म्मस्य च धनस्य च हेतुः पूर्णे कारणमित्यर्थः, विद्याधर्म्मधनानां वर्द्धनं क्रमसाध्यमित्यर्थः ।

(ज) धुरि—यानमुखे, शकटाग्रे इत्यर्थः, ("धूः स्त्री क्लीवे यानमुखम्" इत्यमरः) ।

(ट) नानाविधद्रव्यपूर्णं—बहुविधवाणिज्यद्रव्यपूरितम् ।

(११) वर्द्धमानस्य दूरदेशगमनं समर्थयितुं वृद्धचाणक्यं प्रमाणयति, क इति ।—समर्थानां भारवहनशक्तानां, बलवतामित्यर्थः, अतिभारः कः ? किं वस्तु दुर्व्वहं भवति ? न कोऽप्यतिभारस्तेषामिति भावः ; व्यवसायिनाम् उद्यमिनां, धनमुपार्जयितुकामानां वा, किं दूरं विप्रकृष्टम् ?, उद्यमिनां जीविकार्थिनां वा देशोऽयं दूरवर्त्ती समासन्नो वा इति विचारो नास्ति इति भावः ; सविद्यानां विदुषां, विदेशः कः ? पाण्डित्यबलेन सर्व्वत्रैव प्रभावस्थापनात् सर्व्व एव जनपदस्तस्य निजाधिष्ठानवदिति भावः ; प्रियवादिनां मधुरभाषिणां, परः शत्रुः, कः ? न कोऽपि इत्यर्थः ।

(ठ) भग्नजानुः,—भग्ने जानुनी यस्य सः, भग्नपादः इत्यर्थः ।

सञ्जीवको निपतितः। एतदालोक्य वर्द्धमानोऽचिन्तयत्,—

"करोतु नाम नीतिज्ञो व्यवसायमितस्ततः।
फलं पुनस्तदेव स्याद् यद्विधेर्मनसि स्थितम् ॥ १२॥

किन्तु,—विस्मयः सर्वथा हेयः प्रत्यूहः सर्वकर्मणाम्।
तस्माद्विस्मयमुत्सृज्य साध्यसिद्धिर्विधीयते" ॥ १३॥

इति सञ्चिन्त्य सञ्जीवकं तत्र परित्यज्य वर्द्धमानः पुनः धर्म्मपुरं नाम नगरं गत्वा (ड) महाकायमन्यं वृषभमेकं समानीय धुरि नियोज्य चलितः। ततः सञ्जीवकोऽपि (ढ) कथमपि (ण) खुरत्रयेण भरं कुर्वंस्तत्रैव वने स्थितः। यतः,—

निमग्नस्य पयोराशौ पर्वतात् पतितस्य च।
तक्षकेणापि दष्टस्य आयुर्मर्माणि रक्षति ॥ १४॥

(१२) करोत्विति।—नीतिज्ञः नयवित् जनः, इतस्ततः समन्तात्, विविधं इति भावः, व्यवसायम् उद्यमं, विविधकार्य्यसाधनार्थं प्रयत्नमिति यावत्, विदधातु, [करोतु इति कामचारानुज्ञायां लोट्] नाम इति स्वीकारार्थकमव्ययम्। पुनः किन्तु, फलं व्यवसायस्य परिणामः, तदेव तथैव, स्यात् भवेत्, यत् विधेः विधातुः, मनसि चेतसि, स्थितं विद्यते; फलन्तु दैवाऽऽयत्तं, न हि दैवमतिक्रमितुं समर्थ इति भावः।

(१३) विस्मय इति।—सर्व्वकर्मणां सर्वकार्य्याणां, प्रत्यूहः अन्तरायः, स्वरूपः इत्यर्थः, विस्मयः आश्चर्य्यभावः, विमुग्धता इत्यर्थः, किंकर्त्तव्यविमूढतेति सर्वथा सर्वात्मना, सर्वतोभावेन इत्यर्थः, हेयः त्याज्यः, तस्मात् सर्वथा हेयं विस्मयम् उत्सृज्य त्यक्त्वा, साध्यसिद्धिः साध्यस्य कर्त्तव्यकर्म्मणः, सिद्धिः सिद्धिः अभीष्टसाधनमित्यर्थः, ("साध्ये सिद्धिः" इति वृद्धचाणक्योक्तः पाठः) विधीयते क्रियते, जनेनेति शेषः, विपदि अस्यां विमुग्धभावं विहाय अधुनैव उद्देश्यसिद्धये प्रयत्नः करणीय इति भावः।

(ड) महाकायं—विपुलदेहम्।

(ढ) कथंकथमपि—अतिकष्टेन।

(ण) खुरत्रयेण—पादत्रयेणेत्यर्थः।

(१४) निमग्नस्येति।—पयोराशौ समुद्रे, निमग्नस्य अन्तःप्रविष्टस्य, ...

अपरञ्च,—नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि ।
कुशाग्रेणैव संस्पृष्टः प्राप्तकालो न जीवति ॥ १५ ॥

यतः,—अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे न जीवति ॥ १६ ॥

ततो दिनेषु गच्छत्सु सञ्जीवकः (त) स्वेच्छाहारादिलाभेन

---

निपतितस्य इत्यर्थः, पर्वतात् गिरिशृङ्गात्, उच्चस्थानादिति यावत्, पतितस्य भ्रष्टस्य, तक्षकेण तीव्रविषेण सर्पविशेषेण, दष्टस्य कृतदंशनस्य अपि, आयुः विधिनियमितो जीवनकालः, मर्माणि जीवस्थानानि, जीवनानि इत्यर्थः, रक्षति पालयति, आयुश्चेद्वर्त्तते, तदा विपद्राशिनिपतितोऽपि न म्रियते इति निष्कर्षः; नाकाले म्रियते कश्चित् इति भावः ।

(१५) नेति ।—जन्तुः प्राणी, शरशतैः बहुसङ्ख्यकैः बाणैः, विद्धः ताडितः सन्नपि, अकाले अनियमितकाले, न म्रियते प्राणैः न विमुच्यते, किन्तु प्राप्तकालः आसन्नमृत्युसमयः, विधिनियमितकालः यदा समुपस्थितो भवेत् तदा इत्यर्थः, कुशाग्रेण अतिसूक्ष्मेण दर्भाग्रभागेण, संस्पृष्टः एव परामृष्ट एव, स्पर्शनात्रमेव न तु विद्ध इति भावः, न जीवति चेष्टातिशयेनापि न प्राणिति । ("नाकाले म्रियते जन्तुः" इत्यत्र "नाप्राप्तकालो म्रियते" तथा "कुशाग्रेणैव" इत्यत्र "तृणाग्रेणापि" इति भारतानुशासनपर्वीयदानधर्म्मप्रकरणोक्तपाठद्वयम् ) ।

( १६ ) अरक्षितमिति ।—अरक्षितम् अप्रतिपालितम्, अकृतयत्नमित्यर्थः, प्राणिजातमिति शेषः, दैवरक्षितं दैवेन विधिना, रक्षितं त्रातं, चेदिति शेषः, तिष्ठति निर्विघ्नं वर्त्तते, न नश्यति इत्यर्थः, सुरक्षितं सम्यक् प्रतिपालितमपि, रक्षणार्थं सम्यक्कृतप्रयत्नमपीत्यर्थः, दैवहतं विधिना विनाशितश्चेत्, विनश्यति क्षयं गच्छति । तथाहि, वने अरण्ये, विसर्जितः परित्यक्तः, अनाथः अशरणोऽपि, हिंस्रेभ्यः अरक्षितोऽपि इति भावः, जीवति प्राणिति, परन्तु गृहे भवने, कृतप्रयत्नोऽपि रक्षणार्थं विहितविविधोपायोऽपि, बन्धुसाहाय्यं लभमानोऽपि इत्यर्थः, न जीवति न प्राणिति, म्रियते एव इत्यर्थः, अतो विधिरेव बलवानिति भावः । वंशस्थबिलं वृत्तम् ।

( त ) स्वेच्छाहारादिलाभेन—स्वाभिमतं शष्पादिकमुपभुज्य ।

ताम् (थ) अरण्यानीं परिभ्रमन् (द) हृष्टपुष्टाङ्गो (ध) बलव
नाद। तस्मिन् वने पिङ्गलकनामा सिंहः (न) स्वभुजोपार्जि
राज्यसुखमनुभवन्नास्ते। यथोक्तम्,—

नाभिषेको न संस्कारः सिंहस्य क्रियते मृगैः।
विक्रमार्जितराज्यस्य स्वयमेव मृगेन्द्रता ॥ १७॥

स चैकदा (प) पिपासाऽऽकुलितः पानीयं पातुं (फ) यमु
काच्छमगच्छत्। तेन च तत्र सिंहेन (ब) अननुभूतपू
(भ) प्रलयघनगर्जितमिव (म) सञ्जीवकनर्दितमश्रावि। तच्छ्रु

---

(थ) अरण्यानीं—महारण्यं, ("महारण्यमरण्यानी" इत्यमरः)।

(द) हृष्टपुष्टाङ्गः,—हृष्टं स्फूर्त्तिमापन्नं, पुष्टं मांसलञ्च, अङ्गं यस्य सः, प्रफुल्ल कलेवरः।

(ध) बलवत्—अत्युच्चैः। ननाद—जगर्ज।

(न) स्वभुजोपार्जितराज्यसुखं—स्वकीयबाहुबलेन लब्धराज्यस्योपभोग मानन्दम्।

(१७) नाभिषेक इति।—मृगैः पशुभिः, सिंहस्य पशुराजस्य, राज्याधिकारप्राप्त्यर्थं तीर्थोदकेन स्नपनं, न क्रियते न विधीयते, तथा सं यथाविधि राज्याभिषेचनेन पवित्रतासम्पादनञ्च, न क्रियते न सम्पा तर्हि कथमस्य राजत्वम्? इत्याह, विक्रमार्जितराज्यस्य स्वभुजबलोपार्जित तस्य सिंहस्येति शेषः, मृगेन्द्रता पश्वाधिपत्यं, पशुराज इति संज्ञा इति यावत्, अन्यसाहाय्यमनपेक्ष्यैव, निजपराक्रमेणैव सिंहेन मृगेन्द्र इति संज्ञा लब्धेति भाव

(प) पिपासाऽऽकुलितः,—पिपासया जलं पातुमिच्छया, आकुलितः का

(फ) यमुनाकच्छं—यमुनातटं ("कच्छो द्रुभेदे नौकाङ्गेऽनूपप्राये तटेऽपि" इति हैमः)।

(ब) अननुभूतपूर्वकं—पूर्वमनुभूतं तन्न भवतीत्यननुभूतपूर्वं, [ततः कन्] अश्रुतपूर्वमित्यर्थः।

(भ) प्रलयघनगर्जितमिव—प्रलये कल्पान्तकाले, ये घनाः मेघाः गर्जितं ध्वनिरिव, कल्पान्तकालिकमेघगर्जनमिव अतिभीषणमित्यर्थः!

(म) सञ्जीवकनर्दितं—सञ्जीवकस्य नर्दितं गर्जितं, रवमित्यर्थः।

ऽसौ पानीयमपीत्वा (य) सचकितं (र) परिवृत्य स्वस्थानमागत्य किमिदमित्यालोचयन् तूष्णीं स्थितः। स च तथाविधः करटक-दमनकाभ्यां तन्मन्त्रिपुत्राभ्यां शृगालाभ्यां दृष्टः। तं तथाविधं दृष्ट्वा दमनकः करटकमाह,—"सखे करटक! (ल) किमित्ययम् (व) उदकार्थी स्वामी पानीयमपीत्वा सचकितो मन्दं मन्दमवतिष्ठते?"। करटको ब्रूते,—"मित्र दमनक! अस्मन्मतेनास्य सेवैव न क्रियते, तत् किमस्य (श) चेष्टानिरूपणेन? यतस्तानेन राज्ञा विनाऽपराधेन चिरदिवसम् (ष) अवधीरिताभ्यामावाभ्यां दुःखमनुभूतम्,—

सेवया धनमिच्छद्भिः सेवकैः पश्य यत् कृतम्।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम्॥ १८॥

अपरञ्च,—शीतवाताऽऽतपक्लेशान् सहन्ते यान् पराऽऽश्रिताः।
तदंशेनापि मेधावी तपस्तप्त्वा सुखी भवेत्॥ १९॥

---

(य) सचकितं—सभयसम्भ्रमं, सभयत्वरितं यथा तथेत्यर्थः। ("चकितं भयसम्भ्रमे" इत्यमरः)

(र) परिवृत्य—पराङ्मुखीभूयेत्यर्थः।

(ल) किमिति—कथम्।

(व) उदकार्थी—उदकं जलम्, अर्थयते पातुमभिलषति यः सः।

(श) चेष्टानिरूपणेन—तूष्णीमवस्थानादिरूपव्यापारस्य कारणावधारणेन।

(ष) अवधीरिताभ्याम्—अवज्ञाताभ्याम् (अवधीर+क्तः)।

(१८) सेवयेति।—सेवया प्रभुशुश्रूषया, धनम् अर्थम्, इच्छद्भिः अभिलषद्भिः, सेवकैः भृत्यैः, यत् कृतं यदनुष्ठितं, पश्य अवलोकय, तदिति शेषः; किं तत्?—शरीरस्य कायमात्रस्य, यत् स्वातन्त्र्यं स्वाच्छन्द्यं, स्वाधीनता वा, मूढैः मूर्खैः सेवकैः, तदपि स्वातन्त्र्यमपि, हारितं विलोपितं, धनाशया विक्रीतमिति भावः।

(१९) शीतेति।—पराश्रिताः पराधीनाः, जनाः इति शेषः, यान् यादृशान्, शीतवातातपक्लेशान् शीतं हिमं, वातो वायुः, आतपः द्योतः, रौद्रसन्ताप इत्यर्थः, तैः क्लेशान् दुःखानि, सहन्ते भुञ्जते, मेधावी बुद्धिमान् जनः, तेषां क्लेशानाम्, अंशेनापि

अन्यच,—एतावज्जन्मसाफल्यं यदनायत्तवृत्तिता ।
ये पराधीनतां यातास्ते चेज्जीवन्ति के मृताः ? ॥ २०॥

अपरच,—एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीड़न्ति धनिनोऽर्थिभिः ॥ २१॥

किञ्च,—अबुधैरर्थलाभाय पण्यस्त्रीभिरिव स्वयम् ।
आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥ २२॥

अन्यच,—या प्रकृत्यैव चपला निपतत्यशुचावपि ।
स्वामिनो बहु मन्यन्ते दृष्टिं तामपि सेवकाः ॥ २३॥

अल्पपरिमितेनापि, क्लेशेनेति शेषः, ("तदंशेनापि" इति पाठान्तरम्) तपः तपसा ऽऽराधनरूपतपस्यां कृत्वा, सुखी इह परत्र च सुखभाक्, भवेत् ।

(२०) एतावदिति ।—अनायत्तवृत्तिता अनायत्ता अनधीना, स्वाधीना वृत्तिः जीविका येषां ते तेषां भावः, स्वाधीनजीविता इत्यर्थः, इति यत् ए एतदेव, जन्मसाफल्यं जन्मनः सार्थकता, स्वाधीन एव सार्थकजन्मा इत्यर्थः, ये जनाः, पराधीनतां परतन्त्रतां, जीविकार्थमिति शेषः, याताः प्राप्ताः, ते चेत् जीवन्ति जीवितत्वेन गण्यन्ते, तर्हि के जनाः, मृताः ? मृतत्वेन गणनीयाः !, परा जीवन्तोऽपि मृतोपमा इति भावः ।

(२१) एहीति ।—एहि आगच्छ, गच्छ याहि, पत शेष्व, अथवा नि इत्यर्थः, भूमौ आत्मानं दण्डवत् निक्षिप इत्यर्थो वा, उत्तिष्ठ उत्थितो भव, वद मौनं समाचर तूष्णीं भव, एवम् इत्थं, धनिनो धनशालिनो जनाः, आशा ग्र एव, ग्रहः राहुः पूतनादिर्वा, ("ग्रहः—। सूर्य्यादौ पूतनादौ च सैंहिकेयोपरा इति विश्वः) तेन ग्रस्तैः आक्रान्तैः, अर्थिभिः याचकैः करणैः, क्रीड़न्ति क्रीड़ स्वेच्छया व्यवहरन्ति, तान् भ्रामयन्तीत्यर्थः ।

(२२) अबुधैरिति ।—अबुधैः मूढैः, सेवकैरित्यर्थः, अर्थलाभाय अर्थप्राप्त्यै पण्यस्त्रीभिः वाराङ्गनाभिरिव, आत्मा देहः, स्वयम् आत्मनैव, संस्कृत्य संस्कृत्य —वेशभूषणैर्गन्धादिविलेपनैश्च भूषितं कृत्वा, अन्यत्र—विशोध्य विशोध्य, वि यत्नेन आत्मनः गुणवत्तां सम्पाद्य इत्यर्थः, परोपकरणीकृतः परेषां स्वेतराणां, मित्यर्थः, उपकरणीकृतः कार्य्यसाधनार्थं सहायकतया सम्पादितः, दासीकृत इत्य

(२३) येति ।—स्वामिनः प्रभोः, प्रकृत्या स्वभावतः, चपला चञ्चला, अ

विशेषतश्च,—प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान्।

दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ? ॥२४॥

अपरञ्च,—मौनान्मूर्खः प्रवचनपटुर्वातुलो जल्पको वा

क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः।

धृष्टः पार्श्वे वसति नियतं दूरतश्चाप्रगल्भः

सेवाधर्मः परमगहनो योगिनामप्यगम्यः" ॥ २५॥

---

नैवम्, अशुचौ अपवित्रेऽपि वस्तुनि अप्रियेऽपि वा, निपतति निक्षिप्ता भवति ; धनिनां प्रायशः चारित्रहीनत्वादिति भावः ; सेवकाः अधीनाः पुरुषाः, तां तादृशीं कुपथगामपि, दृष्टिम् अवलोकनं, बहु मन्यन्ते समाद्रियन्ते, तादृशदृष्टिपातेन आत्मानं कृतार्थं मन्यन्ते इत्यर्थः।

(२४) प्रणमतीति।—उन्नतिहेतोः उन्नतिनिमित्तम्, ऐश्वर्य्यलाभार्थमित्यर्थः, प्रणमति आत्मानं नतं करोति, जीवितहेतोः जीवनरक्षार्थं, वर्त्तनादिना जीविका-निर्वाहार्थमिति यावत्, प्राणान् जीवनं, विमुञ्चति त्यजति, प्राणसङ्कटव्यापारेऽपि आत्मानं निक्षिप्य जीविकां निर्वहति इत्यर्थः, सुखहेतोः सुखनिमित्तं, सुखी-भवितुमित्यर्थः, दुःखीयति दुःखमाचरति, क्लेशं सहते इत्यर्थः, एवं स्थिते सेवकात् परिचारकात्, अन्यः अपरः, मूढः मूर्खः, कः ? न कोऽपि इत्यर्थः। आर्य्या वृत्तम्।

(२५) मौनादिति।—मौनात् तूष्णीमवस्थानात्, वाङ्नियमने कृते सति इत्यर्थः, मूर्खः मूढः, प्रवचनपटुः वाग्मी चेत्, वातुलः उन्मत्तः, जल्पकः बहुभाषी वा, क्षान्त्या क्षमया, तिरस्कारसहनेनेत्यर्थः, भीरुः भयशीलः, यदि न सहते न सहिष्णुर्भवति, अधिक्षेपमिति शेषः, तदा प्रायशः भूम्ना, नाभिजातः न सद्वंशजातः, नीचस्वभाव इत्यर्थः, अविनीत इति भावः, नियतं सततं, पार्श्वे सन्निधाने, वसति तिष्ठति चेत्, धृष्टः निर्लज्जः, उद्धतः इत्यर्थः, दूरतः दूरे स्थितश्च, अप्रगल्भः प्रतिभाविहीनः, अचतुर इत्यर्थः, कर्म्मापटुरिति यावत्, प्रभुभिर्मन्यते इति शेषः, अत एव सेवाधर्मः भृत्यभावः, परमगहनः अत्यन्तजटिलः, सर्वविधस्यैवाचरणस्य दोषावहत्वात् तथा केन वा प्रकारेण प्रभुः सन्तुष्यति, तस्यापि दुर्ज्ञेयत्वादिति भावः ; योगिनामपि वीतरागाणां सर्व्वज्ञानाम् ईश्वरसेवकानामपीति भावः, अगम्यः दुर्बोधः, ईश्वरसेवाया अपि प्रभुसेवा सुकठिनेति भावः। मन्दाक्रान्ता वृत्तम्।

दमनकोऽब्रवीत्,—"मित्र ! सर्वथा मनसाऽपि (ख) एतत् कर्त्तव्यम् । यतः,—

कथं नाम न सेव्यन्ते यत्नतः परमेश्वराः ? ।
अचिरेणैव ये तुष्टाः पूरयन्ति मनोरथान् ॥ २६ ॥

अन्यच्च,—कुतः सेवाविहीनानां चामरोद्धूतसम्पदः ।
उद्दण्डधवलच्छत्रवाजिवारणवाहिनी" ॥ २७ ॥

करटको ब्रूते,—"तथाऽपि किमनेन (ह) अव्यापारेणास्माकम् ? अव्यापारेषु व्यापारः सर्वथा (क) परिहरणीयः। पश्य,—

अव्यापारेषु व्यापारं यो नरः कर्त्तुमिच्छति ।
स भूमौ निहतः शेते कीलोत्पाटीव वानरः" ॥ २८ ॥

---

(ख) एतत्—ईदृशं चिन्तनं, प्रभुसेवोपेक्षणम् इति यावत् ।

(२६) कथमिति ।—ये परमेश्वराः प्रभवः, तुष्टाः सेवया प्रीताः स[न्तः] अचिरेणैव अनतिविलम्बेनैव, मनोरथान् अभिलाषान्, पूरयन्ति सफलीकुर्वन्ति[,] परमेश्वराः देवोपमाः स्वामिनः, कथं नाम यत्नतः यत्नेन, न सेव्यन्ते न आराध्यन्ते[?] प्रत्युत सर्वथा सेवनीया एवेत्यर्थः । [ नाम इति स्वीकारार्थकमव्ययम् ]।

(२७) कुत इति ।—सेवाविहीनानां प्रभुसेवापराङ्मुखाणां, चामरोद्धूतसम्प[दः] चामरेण राजचिह्नेन वालव्यजनेन, उद्धूताः उत्क्षिप्ता उत्कम्पिता वा, सम्प[दः] वस्त्रालङ्कारादिरूपाणि ऐश्वर्य्याणि, कुतः ? सम्भवेदिति शेषः, राजसेवया वि[ना] नैव स्यादित्यर्थः, तथा उद्दण्डम् ऊर्द्ध्वमुत्थापितः दण्डो यस्य तत् तादृशं, ध[वलं] शुभ्रं, छत्रं, वाजिनः अश्वाः, वारणाः गजाश्च यस्यां तथोक्ता वाहिनी सेना च, कुत[ः?] यद्वा—उद्दण्डं विशालदण्डयुक्तं, धवलं छत्रञ्च, वाजिनश्च वारणाश्च वाहिन्[ी] उद्दण्डधवलच्छत्रवाजिवारणवाहिनी [ "द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम्" (पा[णि] पा० ) इति द्वन्द्वैकवद्भावः ] राजसेवामन्तरेण न कथमपीदृशी सम्पत् लभ्येतेति भा[वः]

(ह) अव्यापारेण—अधिकारबहिर्भूतेन, पराधिकारचर्चया इति यावत्।

(क) परिहरणीयः,—त्यक्तव्यः ।

(२८) अव्यापारेष्विति ।—यो नरः, अव्यापारेषु स्वकर्त्तव्यातिरिक्तकार्येषु

दमनकः पृच्छति,—"कथमेतत्?"। करटकः कथयति,—

कीलोत्पाटि-वानरकथा।—

"मगधदेशे (ख) धर्मारण्यसन्निहितवसुधायां शुभदत्तनाम्ना कायस्थेन (ग) विहारः कारयितुमारब्धः। तत्र (घ) करपत्रविदार्य्यमाणकाष्ठस्तम्भस्य (ङ) कियद्दूरविदीर्णखण्डद्वयस्य मध्ये कीलकः सूत्रधारेण (च) निहितः। तत्र च वनवासी (छ) महान् (ज) वानरयूथः क्रीड़नार्थमायातः। तेषु एको वानरः (झ) कालप्रेरित इव तं कीलकं हस्ताभ्यां धृत्वोपविष्टः। ततस्तस्य (ञ) मुष्कद्वयं लम्बमानं काष्ठखण्डद्वयाभ्यन्तरे

---

व्यापारं क्रियां, कर्त्तुम् इच्छति अभिलषति, स जनः, कीलोत्पाटी कीलं शङ्कुं, विदार्य्यमाणकाष्ठस्य अन्तरावकाशरक्षार्थं प्रदत्तकाष्ठखण्डम् इति यावत्, उत्पाटयति उत्तोलयतीति तथोक्तः, वानर इव कपिरिव, निहतः विनष्टः सन्, भूमौ शेते निपतति इत्यर्थः, भूमौ निपत्य प्राणान् त्यजति इति यावत्।

(ख) धर्मारण्यसन्निहितवसुधायां—धर्म्मारण्यस्य तदाख्यारण्यविशेषस्य, सन्निहिते समीपे, या वसुधा भूमिः तस्यां, धर्मारण्याख्यारण्यनिकटवर्त्तिनि स्थाने।

(ग) विहारः,—सुगतालयः, बुद्धमन्दिर इत्यर्थः, ("विहारो भ्रमणे स्कन्धे लीलायां सुगतालये" इति मेदिनी)।

(घ) करपत्रविदार्य्यमाणकाष्ठस्तम्भस्य—करपत्रेण क्रकचेन, काष्ठविदारकास्त्रविशेषेण इत्यर्थः। ("करात" इति वङ्गभाषा) विदार्य्यमाणः पाट्यमानः, यः काष्ठस्तम्भः स्तम्भाकारकाष्ठखण्डः, छिन्नशाखामूलवृक्षप्रकाण्ड इत्यर्थः, तस्य।

(ङ) कियद्दूरविदीर्णखण्डद्वयस्य—कियद्दूरं किञ्चिद्दूरपर्य्यन्तं, विदीर्णस्य पाटितस्य, द्विधा भिन्नस्येत्यर्थः, खण्डद्वयस्य अंशद्वयस्य।

(च) निहितः,—प्रोथितः, अभ्यन्तरावकाशरक्षार्थं स्थापितः इत्यर्थः, विदीर्णांशद्वयस्य पुनः संयोगनिवारणार्थं संस्थापित इति यावत्।

(छ) महान्—वृहत्कायः महाबलो वा।

(ज) वानरयूथः,—वानरसमूहः।

(झ) कालप्रेरितः,—कालेन मृत्युना, प्रेरितः चालितः।

(ञ) मुष्कद्वयम्—अण्डकोषयुगलम्।

प्रविष्टम्। अनन्तरं स (ट) सहजचपलतया महता प्रयत्नेन तं कीलकमाकृष्टवान्। आकृष्टे च कीलके काष्ठाभ्यां चूर्णिताण्डद्वयः (ठ) पञ्चत्वं गतः। अतोऽहं ब्रवीमि,—"अव्यापारेषु व्यापारमित्यादि"।

[इति कीलोत्पाटि-वानरकथा]।

दमनको ब्रूते,—"तथाऽपि स्वामिचेष्टानिरूपणं सेवकेन कर्त्तव्यम्"। करटको ब्रूते,—"यः (ड) सर्वाधिकारे नियुक्तः प्रधानमन्त्री स करोतु। यतः (ढ) अनुजीविना (ण) पराधिकारचर्चा न कर्त्तव्या। पश्य,—

परािधकारचर्चां यः कुर्य्यात् स्वामिहितेच्छया।
स विषीदति चीत्कारात् ताड़ितो गर्दभो यथा"॥ २९॥

दमनकः पृच्छति,—"कथमेतत् ?"। करटकः कथयति,—

रजक-चौर-गर्दभ-कुक्कुरकथा।—

"आसीत् वाराणस्यां कर्पूरपटो नाम रजकः। स चैकदा (त) अभिनववयस्कया भार्य्यया सह चिरं (थ) केलिं कृत्वा

(ट) सहजचपलतया—स्वभावचाञ्चल्येन।

(ठ) पञ्चत्वं गतः,—मृतः।

(ड) सर्वाधिकारे—सर्वकार्य्यपर्य्यवेक्षणे।

(ढ) अनुजीविना—सेवकेन।

(ण) पराधिकारचर्चा—अन्येषां कर्त्तव्यकर्मानुशीलनम्, अन्येषां कर्त्तव्यकर्मणि हस्तनिक्षेप इत्यर्थः।

(२९) परेति।—यः स्वामिहितेच्छया प्रभोरिष्टसाधनाभिलाषेण, पराधिकारस्य कर्त्तव्यकर्मणः, चर्चाम् आलोचनामित्यर्थः, परकर्त्तव्यं सम्पादयितुमिच्छामिति यावत् कुर्य्यात् विदध्यात्, स जनः, चीत्कारात् उच्चैः शब्दकरणात् हेतोः, ताड़ितः आहतः रजकेन इति शेषः, गर्दभो यथा रासभ इव, विषीदति विषादमाप्नोति, म्रियते इत्यर्थः।

(त) अभिनववयस्कया—तरुणवयस्कया, युवत्या इत्यर्थः।

(थ) केलिं—क्रीड़ां विहारं वा।

(द) निर्भरं प्रसुप्तः। तदनन्तरं द्रव्याणि (ध) हर्त्तुं तद्गृहे चौरः प्रविष्टः। तस्य (न) प्राङ्गणे गर्दभो (प) बद्धस्तिष्ठति, कुक्कुरश्चोपविष्टः अस्ति। तं चौरमवलोक्य गर्दभः (फ) श्वानमाह,—"सखे! भवतस्तावदयं (ब) व्यापारः, तत् (भ) किमिति त्वमुच्चैःशब्दं कृत्वा स्वामिनं (म) न जागरयसि?"। कुक्कुरो ब्रूते,—"भद्र! मम (य) नियोगस्यास्य (र) चर्चा त्वया न कार्य्या। त्वमेव किं न जानासि (ल) यथाऽहमस्य अहर्निशं गृहरक्षां करोमि। (व) यतोऽयं चिरात् (श) निर्वृतो मम (ष) उपयोगं न जानाति, तेनाधुना ममाऽऽहारदानेऽपि मन्दादरः। विना (स) विधुरदर्शनं स्वामिनोऽनुजीविषु

---

(द) निर्भरं—गाढ़म्।

(ध) हर्त्तुम्—अपहर्त्तुम्।

(न) प्राङ्गणे—चत्वरे, गृहसम्मुखस्थभूमौ इत्यर्थः, ("उठान" "आङ्गिना" इति भाषा)।

(प) बद्धः,—रज्ज्वा रुद्धः।

(फ) श्वानं—कुक्कुरम्।

(ब) व्यापारः,—अधिकारः, चौरात् द्रव्याणि रक्षयितुं स्वामिन उद्बोधनरूपं कार्य्यमित्यर्थः।

(भ) किमिति—कथम्।

(म) न जागरयसि?—प्रबुद्धं न करोषि?

(य) अस्य नियोगस्य—एतस्य कार्य्यस्य, ममाधिकृतस्य कर्म्मण इत्यर्थः।

(र) चर्चा—विचारः, औचित्यानौचित्यचिन्तनमित्यर्थः।

(ल) यथा—येन प्रकारेण।

(व) यतः,—यस्मात् रक्षणाद्धेतोः।

(श) निर्वृतः,—सुखी, चौर्य्याद्युपद्रवराहित्यात् निरुद्विग्न इति यावत्।

(ष) उपयोगम्—उपयोगितां, प्रयोजनमित्यर्थः।

(स) विधुरदर्शनं—वैकल्यदर्शनं, विपत्सम्भावनाऽवेक्षणमिति यावत्। ("वैकल्येऽपि च विश्लेषे विधुरं विफले त्रिषु" इति त्रिकाण्डशेषः)।

(ह) मन्दाऽऽदरा भवन्ति"। गर्दभो ब्रूते,—"शृणु (क) वर्वर!—

"याचते कार्य्यकाले यः स किंभृत्यः स किंसुहृत्।"

कुक्कुरो ब्रूते,—

"यो न सम्भावयेद् भृत्यान् कार्य्यकाले स किंप्रभुः" ॥३०॥

किञ्च,—आश्रितानां भृतौ स्वामिसेवायां धर्मसेवने।

पुत्रस्योत्पादने चैव न सन्ति प्रतिहस्तकाः" ॥ ३१॥

ततो गर्दभः सकोपमाह,—"अरे दुष्टमते (ख) पापीयांस्त्वं, यद् विपत्तौ स्वामिकार्य्योपेक्षां करोषि

---

(ह) मन्दाऽऽदराः,—शिथिलप्रयत्नाः।

(क) वर्वर!—पामर!

(३०) याचते इति।—यो भृत्यः, कार्य्यकाले कार्य्यसमये, सङ्कटम् अवं दृष्ट्वा इत्यर्थः, याचते स्वामिनम् अर्थादिकं प्रार्थयते, स्वार्थमन्विष्यते इति यावत्, सः किंभृत्यः निन्दनीयसेवकः, [ निन्दार्थककिंशब्देन कर्म्मधारयः। "किमः क्षेपे" (५।४।७० पा०) इति समासान्तप्रत्ययनिषेधः] स किंसुहृत् निन्दनीयबन्धुः, प्रभुः, कार्य्यकाले भृत्यान् सेवकान्, न सम्भावयेत् न धनमानाभ्यामाद्रियेत, किम्प्रभुः निन्दनीयस्वामी, प्रभुभृत्ययोः परस्परं सार्वकालिकसमसुखदुःखत्वं श्रेयोमूलमिति भावः। "किंभृत्यः किंसुहृत् किंप्रभुः" इत्यत्र किंशब्दस्य प्रश्नार्थत्वे भृत्यः किम्? सुहृत् किम्? प्रभुः किम्? नैवेत्यर्थः। ("भृत्यान् सम्भावयेद्यस्तु कार्य्यकाले स किंप्रभुः" इति पाठे—यः कार्य्यकाले एव भृत्यान् सम्भावयेत्, कार्य्यसमाप्तौ न सम्भावयेत्, स किंप्रभुः इत्यर्थः।

(३१) आश्रितानामिति।—आश्रितानां सेवकादीनामधीनानां भरणपोषणे वा, भृतौ भरणे, स्वामिसेवायां प्रभुसेवायां, धर्मसेवने धर्मकर्मानुष्ठाने, पुत्रस्य उत्पादने जनने च विषये, प्रतिहस्तकाः चतुरूपहस्ताः, प्रतिनिधयः इति यावत्, नैव सन्ति विद्यन्ते; एतानि स्वयमेव सम्पादनीयानि नैव प्रतिनिधिभिरिति भावः।

(ख) पापीयान्—कर्त्तव्यानुष्ठाने विमुखत्वात् पापकर्मरतः, प्रभुद्रोही महापापाचार इति वा। [ पापं विद्यते अस्य इति पापवान्, अतिशयेन पापवान् इति ईयसुन्, ततः इष्ठवद्भावात् मतुपो लुक् ]।

भवतु, यथा स्वामी जागर्त्ति, तथा मया कर्त्तव्यम्। यतः,—

पृष्ठतः सेवयेदर्कं जठरेण हुताशनम्।
स्वामिनं सर्वभावेन परलोकममायया" ॥ ३२ ॥

इत्युक्त्वा सः अतीव चीत्कारं कृतवान्। ततः स रजकस्तेन चीत्कारेण (ग) प्रबुद्धो निद्राविमर्दकोपादुत्थाय गर्दभं लगुड़ेन ताड़यामास। ततस्तेन ताड़नेन गर्दभः पञ्चत्वं गतः। अतोऽहं ब्रवीमि,—"पराधिकारचर्चाम्" इत्यादि।"

[ इति रजक-चौर-गर्दभ-कुक्कुरकथा ]।

पश्य, पशूनामन्वेषणमेवास्माकं नियोगः। अतः स्वनियोगस्यैव चर्चा क्रियताम्"। पुनर्विमृश्य आह,—"किन्त्वद्य तयाऽपि चर्चया न प्रयोजनं, यतः आवयोः (घ) भक्षितशेषाहारः प्रचुरः अस्ति"। दमनकः सरोषमाह,—"कथम् (ङ) आहारमात्रार्थी भवान् नृपं सेवते? एतदयुक्तमुक्तं त्वया। यतः,—

सुहृदामुपकारकारणात् द्विषतामप्यपकारकारणात्।
नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्त्ति केवलम्?॥ ३३॥

---

(३२) पृष्ठत इति।—अर्कं सूर्य्यं, सूर्य्यकिरणमित्यर्थः, पृष्ठतः पृष्ठेन, ["आद्यादिभ्यः उपसङ्ख्यानम्" (वा०) इति तृतीयायाः तसिल् ] सेवयेत सेवेत, उपभुञ्जीतेत्यर्थः, कवीनां निरङ्कुशत्वात् अत्र णिजन्तप्रयोगः सोढव्यः; हुताशनं वह्निं, जठरेण उदरेण, स्वामिनं प्रभुं, सर्व्वभावेन सर्व्वप्रयत्नेन, मनोवाक्कायैरेवेति यावत्, सेवयेत् परिचरेत्, परलोकं पारलौकिकं धर्मानुष्ठानम् इत्यर्थः, अमायया अकापट्येन, आश्रयेत्यर्थः, हृदयेन सहेति यावत्, सेवयेत् आश्रयेदित्यर्थः।

(ग) प्रबुद्धः,—जागरितः। निद्राविमर्दकोपात्—निद्राया विमर्दः व्याघातः, तेन कोपस्तस्मात्।

(घ) भक्षितशेषाहारः,—भुक्तावशिष्टं खाद्यम्। प्रचुरः,—भूयान्।

(ङ) आहारमात्रार्थी—आहारमात्रम् अर्थयते यः सः, केवलभोजनप्रार्थी।

(३३) सुहृदामिति।—सुहृदां मित्राणाम्, उपकारकारणात् उपकारार्थं,

जीविते यस्य जीवन्ति विप्रा मित्राणि बान्धवाः ।
सफलं जीवितं तस्य आत्मार्थं को न जीवति ? ॥ ३४ ॥

अपिच,—यस्मिन् जीवति जीवन्ति बहवः स तु जीवतु ।
काकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम् ? ॥ ३५ ॥

पश्य,—
पञ्चभिर्याति दासत्वं पुराणैः कोऽपि मानवः ।
कोऽपि लक्षैः कृतः कोऽपि लक्षैरपि न लभ्यते ॥ ३६ ॥

---

हितं कर्त्तुमित्यर्थः, द्विषतामपि शत्रूणाञ्च, अपकारकारणात् अपकारार्थं, [illegible] निर्य्यातनार्थम् इत्यर्थः, बुधैः पण्डितैः, नृपसंश्रयः राजाश्रयः, इष्यते वाञ्छ्यते; [illegible] जनः, केवलं जठरं स्वोदरमात्रं, न बिभर्त्ति ? न पूरयति ? अपि तु सर्वं [illegible] अनायासलभ्येन शाकेनापि उदरपूरणसम्भवात् तदर्थं ग्वहत्तिः सेवा न बुध[illegible] अभिमता, परन्तु सुहृदः पालयितुं द्विषतश्च दमयितुमेव राजसेवा कार्या [illegible] तेषामभिमतमिति भावः। सुन्दरी वृत्तम् ।

(३४) जीवितं इति।—यस्य जनस्य, जीविते जीवने, प्राणेषु विद्य[illegible] इत्यर्थः, विप्राः ब्राह्मणाः, मित्राणि सुहृदः, बान्धवाः ज्ञातयः, जीवन्ति प्राण[illegible] परार्थमेव यस्य जीवनम् इत्यर्थः, तस्य जीवितं जीवनं, सफलं सार्थकं, स एव स[illegible] जन्मा इत्यर्थः, आत्मार्थं स्वार्थसाधनार्थं, को जनः, न जीवति ? न प्राणान् धारय[illegible] स्वार्थमात्रसाधनार्थं सर्वे एव जीवन्ति, परन्तु कस्यापि उपकाराभावात् तेषां [illegible] विफलमेव इति भावः।

(३५) यस्मिन्निति।—यस्मिन् जने, जीवति विद्यमाने सति, बहवः [illegible] इति शेषः, जीवन्ति जीवितास्तिष्ठन्ति, यमाश्रित्य अनेके जीविका निर्वाहयन्ति इ[illegible] स तु स एव, जीवतु प्राणितु, तस्य जीवनं प्रार्थनीयमेवेत्यर्थः, काकोऽपि वायसो[illegible] किं चञ्च्वा चञ्चुसाहाय्येन, हस्ताद्यभावेऽपि इति भावः ; स्वोदरपूरणं निजजठरपू[illegible] न कुरुते ? स्वोदरमात्रपूरणन्तु तिर्य्यग्जातिभिरपि क्रियमाणत्वेन वैशिष्ट्याभा[illegible] वत्वात् नितरां हेयमेव इति भावः।

(३६) पञ्चभिरिति।—कोऽपि मानवः नरः, पञ्चभिः पञ्चसङ्ख्यकैः पु[illegible] पणैः, वराटानां चतुःशतेनेत्यर्थः, ("पुराणं पञ्चलक्षणे। पणे पुंसि त्रिषु प्रत्नं" [illegible] मेदिनी। "वराटकानां दशकद्वयं यत् सा काकिणी ताश्च पणश्चतस्रः" [illegible]

अन्यच,—मनुष्यजातौ तुल्यायां भृत्यत्वमतिगर्हितम् ।
प्रथमो यो न तत्रापि स किं जीवत्सु गण्यते ? ॥ ३७ ॥

तथा चोक्तम्,—
वाजिवारणलोहानां काष्ठपाषाणवाससाम् ।
नारीपुरुषतोयानामन्तरं महदन्तरम् ॥ ३८ ॥

तथाहि,—अल्पस्नायुवसाऽवशेषमलिनं निर्मांसमप्यस्थिकं
श्वा लब्ध्वा परितोषमेति न च तत्तस्य क्षुधाशान्तये ।

---

लीलावती च ) दासत्वं भृत्यभावं, याति प्राप्नोति, स्वीकरोतीत्यर्थः, कोऽपि मानवः, लक्षैः लक्षसङ्ख्यकैः, पुराणैरिति शेषः, क्रतः दासः क्रतः, धनवद्भिरिति शेषः ; कोऽपि लक्षैरपि, पुराणैरिति शेषः, न लभ्यते न प्राप्यते, दासीकर्त्तुं न शक्यते इत्यर्थः, धनिभिरिति शेषः। ( "क्रतः" इत्यत्र "क्रती" इति पाठे—"कोऽपि" इत्यादिचतुर्थचरणे अयम् अन्वेतव्यः, तथा च, कोऽपि लक्षैः पुराणैः दासत्वं याति, कोऽपि क्रती योग्यः, कर्म्मपटुरित्यर्थः, ( "क्रती स्यात् पण्डिते योग्ये" इति मेदिनी ) लक्षैरपि न लभ्यते )।

( ३७ ) मनुष्यजाताविति।—मनुष्यजातौ मनुष्यत्वे इत्यर्थः, मानवाकारत्वे इति यावत, तुल्यायां समायां सत्यामपि, प्रभोः भृत्यस्य च मनुष्याकारत्वाविशेषेऽपि इत्यर्थः, मानवत्वसामान्येन सर्व्वेषामेव समानत्वेऽपि इति यावत, भृत्यत्वं भृत्यभावः, दासत्वमित्यर्थः, अतिगर्हितम् अतिनिन्दनीयम, अतीवावमाननाजनकमिति यावत, तत्रापि अतिगर्हिते भृत्यत्वेऽपि, यः भृत्यः, प्रथमः सर्व्वश्रेष्ठः, प्रधानत्वेन परिगणित इत्यर्थः, न, भवतीति शेषः, यस्य किमपि प्राधान्यं नास्तीत्यर्थः, सः जीवत्सु जीवन्नरेषु मध्ये, गण्यते ? सङ्ख्यायते किम् ? परिगणितो भवति किम् ? इत्यर्थः, स मृत एव इति भावः।

( ३८ ) वाजीति।—वाजिनः अश्वाः, वारणाः हस्तिनः, लोहं सर्व्वतैजसं, स्वर्णादिधातुरित्यर्थः, ( "लोहोऽस्त्री शस्त्रके लोहं जोङ्गके सर्व्वतैजसे" इति मेदिनी ) तेषां, काष्ठानि दारूणि, पाषाणाः प्रस्तराः, वासांसि वस्त्राणि तेषां, नार्य्यः स्त्रियः, पुरुषाः नराः, तोयानि जलानि च, एतेषाम्, अन्तरं परस्परपार्थक्यं, प्रत्येकेषामेषां सजातीयेषु परस्परगुणतारतम्यमित्यर्थः, महदन्तरम् अतीव भेदयुक्तम्, अत्यन्तं विसदृशमित्यर्थः।

( ३९ ) अल्पेति।—श्वा कुक्कुरः, अल्पस्नायुवसाऽवशेषमलिनम् अल्पाः स्वल्पपरि-

सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम्॥३९॥

अपरञ्च, पश्य (च) सेव्यसेवकयोः अन्तरम्,—

लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य तदनादरदर्शनञ्च।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते॥ ४०॥

---

मिताः, स्नायवः देहान्तर्वर्त्ति-अङ्गप्रत्यङ्गसन्धिवन्धनरूपसूक्ष्मशिराविशेषाः, वसाः मेदां च, ताभ्यः अवशेषः अवशिष्टं, विरहितमित्यर्थः, अत एव, यद्वा—तासाम् अवशेष अवशिष्टत्वेन, किञ्चित् संलग्नत्वेन इत्यर्थः, मलिनं मलयुक्तं, निर्मांसं मांसहीनम् अं अस्थिकं क्षुद्रास्थिखण्डम्, [ अल्पार्थे कन्प्रत्ययः ] लब्ध्वा आसाद्य, परितोषं तोषं एति गच्छति, तच्च तत्तु अस्थि, तस्य कुक्कुरस्य, क्षुधाशान्तये बुभुक्षानिवृत्तये, प्रभवति इति शेषः, सिंहः अङ्कं क्रोड़म्, अन्तिकम् इत्यर्थः, आगतं प्राप्तम् अपि जम्बुकं शृगालं, त्यक्त्वा विहाय, क्षुद्रत्वात् दुर्बलत्वाच्चेति भावः, द्विपं हस्तिनं, आत्म रूपप्रतिद्वन्द्विनमिति भावः, निहन्ति विनाशयति ; तथाहि, सर्वो जनः कृच्छ्रगतोऽपि क्लेशं प्राप्तोऽपि, धनाद्यभावजनितदुःखमनुभवन्नपीत्यर्थः, सत्त्वानुरूपं स्ववीर्यानु चित्तवृत्तिसदृशं वा, फलं लाभं, वाञ्छति प्रार्थयते। शार्दूलविक्रीडितं वृत्तम्।

(च) सेव्यसेवकयोः,—स्वामिभृत्ययोः, सेव्यौ सेवां कर्त्तुमर्हौ सेवाहर्त्तौ यौ सेवकौ भृत्यौ, प्रधानाप्रधानपरिचारकौ इत्यर्थः, तयोः इति वा, ("सेव्यसेवकयोः" इति पाठः न मनोरमः, प्रसङ्गविरोधात्) अन्तरं—प्रभेदम्, उभौ प्रति तारतम्य इत्यर्थः, स्वामिनः उत्तमाधमकिङ्करभेदेन मानापमानयोगम् इत्याशयः।

(४०) लाङ्गूलेति।—श्वा कुक्कुरः, हीनप्रकृतिरिति भावः, पिण्डदस्य अन्नदा पुरत इति शेषः, लाङ्गूलस्य पुच्छस्य, चालनं विलोलनम्, अधश्चरणयोः पादयोः अवपातं पतनं, लुठनमित्यर्थः, भूमौ भूतले, निपत्य पतित्वा, तदनादरदर्शनञ्च तस्य प्रभोः, प्रभुकृत इत्यर्थः, यः अनादरः तिरस्क्रिया, तस्य दर्शनञ्च पादपतनादावपि तदुत्क्षेपणादितिरस्कारसहनञ्चेत्यर्थः, कुरुते। ("वदनोदरदर्शनञ्च" इति पाठे—निज प्रबलबुभुक्षाज्ञापनार्थं वश्यत्वज्ञापनार्थं वा कदाचित् मुखव्यादानं कृत्वा कदाचित्त उत्तानं निपत्य वदनप्रदर्शनमुदरप्रदर्शनञ्च कारयतीत्यर्थः। अधमसेवकधर्म

किञ्च,—यज्जीव्यते क्षणमपि प्रथितं मनुष्यै-
विज्ञानविक्रमयशोभिरभज्यमानम्।
तन्नाम जीवनमिह प्रवदन्ति तज्ज्ञाः
काकोऽपि जीवति चिराय बलिञ्च भुङ्क्ते॥ ४१॥

यो नाऽऽत्मजे न च गुरौ न च भृत्यवर्गे
दीने दयां न कुरुते न च बन्धुवर्गे।

दर्शयित्वा उत्तमसेवकचेष्टितं प्रदर्शयति, गजपुङ्गव इति।—गजपुङ्गवः गजेन्द्रस्तु, धीरं प्रशान्तं यथा तथा, भोजनार्थं किञ्चिदपि व्यग्रताप्रदर्शनमकृत्वेत्यर्थः, स्वानुरूपं सम्मानं संरक्ष्येति भावः, विलोकयति पश्यति, पिण्डदमिति शेषः, चाटुशतैः बहुविधैः प्रियवचनैश्च, पिण्डदस्य इति शेषः, भुङ्क्ते खादति, भोग्यवस्तूनि इति शेषः, हीनोत्तमयोः सेवकयोरेतदेवान्तरमिति भावः। वसन्ततिलकं वृत्तम्।

(४१) यदिति।—विज्ञानविक्रमयशोभिः विज्ञानं शिल्पशास्त्रयोरभिज्ञता, ("विज्ञानं शिल्पशास्त्रयोः" इत्यमरः) विज्ञानं विशेषज्ञानं, लोकहितकरं कर्म्म वा, ("विज्ञानं ज्ञानकर्म्मणोः" इति मेदिनी) विक्रमः पराक्रमः, यशः कीर्त्तिश्च, तैः अभज्यमानम् अभिद्यमानं, तैराघ्रातम् इत्यर्थः, अविरहितमिति यावत्, सुप्रतिष्ठितमिति भावः, अत एव प्रथितं विख्यातं यथा तथा, क्षणं मुहूर्त्तमपि. मनुष्यैर्यत् जीव्यते, इह जगति, तज्ज्ञाः जीवनरहस्यविदः पण्डिताः, तत् तादृशमेव जीवनं, जीवनं प्रशस्तजीवनं, प्रवदन्ति कथयन्ति, नाम इति स्वीकारार्थकमव्ययम्; तथाहि, काकोऽपि चिराय दीर्घकालं, जीवति प्राणिति, बलिं खाद्यञ्च, भुङ्क्ते खादति, आहारमात्रं न जीवनफलं, परन्तु विज्ञानादिभिः प्रथितत्वमेवेति भावः। वसन्ततिलकं वृत्तम्।

(४२) यो नाऽऽत्मजे इति।—यो जनः, आत्मजे स्वतनये, न, गुरौ गुरुजने च, जनकादिषु चेत्यर्थः, न, भृत्यवर्गे अनुजीविनिचये च, न, दीने दरिद्रे, अकिञ्चने इत्यर्थः, न, तथा, बन्धुवर्गे च स्वजनसमूहे च, भ्रात्रादौ परिजने मित्रादौ वा इत्यर्थः, न दयाम् अनुग्रहं, कुरुते आचरति, एषां पुत्रादीनां दुःखं दृष्ट्वाऽपि तदपनेतुं न यतते इत्यर्थः, मनुष्यलोके मर्त्त्यभूमौ, तस्य दयाहीनस्य जनस्य, जीवितफलेन जीवितं जीवनम् एव फलं तेन, प्राणधारणेन, किम्? किं प्रयोजनम्? न किमपि, तस्य जीवनधारणं निष्प्रयोजनमेवेत्यर्थः, [ वारणार्थकिंशब्दयोगात् "फलेन" इत्यत्र तृतीया ] मरणमेव तस्य श्रेयः इति भावः; तथाहि, काकोऽपि वायसोऽपि, अनपेक्षित-

किं तस्य जीवितफलेन मनुष्यलोके ?
काकोऽपि जीवति चिराय बलिञ्च भुङ्क्ते ॥ ४२ ॥

अपरञ्च,—अहितहितविचारशून्यबुद्धेः
श्रुतिविषयैर्बहुभिर्बहिष्कृतस्य ।
उदरभरणमात्रकेवलेच्छोः
पुरुषपशोश्च पशोश्च को विशेषः ?" ॥ ४३ ॥

करटको ब्रूते,—"आवां तावत् अप्रधानौ, आवयोः किम् (छ) अनया विचारणया ?"। एतदा... दमनकः पुनराह,—"भ्रातः ! (ज) कियता कालेन अमा...

बन्धुबान्धवोऽपि इति भावः, चिराय चिरं, दीर्घकालमित्यर्थः, जीवति प्राणिति, ... उपहारञ्च, भोज्यञ्चेत्यर्थः, ("करोपहारयोः पुंसि बलिः प्राण्यङ्गे स्त्रि... इत्यमरः) भुङ्क्ते खादति, यदि केवलं पानभोजनादिकं प्राणधारणञ्च ... प्रयोजनं तदा काकादिभ्यः तिर्य्यग्जातिभ्यः मनुष्यस्य को भेदः ? इति निष्कर्षः।

(४३) अहितेति।—अहितञ्च हितञ्च अहितहितौ अनिष्टेष्टौ, [अल्पा... परनिपातः] तयोः विचारे विवेके, शून्या हीना, बुद्धिः मतिर्यस्य तस्य, ... विवेकशून्यस्य, बहुभिः बहुविधैः, श्रुतिविषयैः शास्त्रगोचरैः, शास्त्रज्ञानै... बहिष्कृतस्य रहितस्य, यद्वा—श्रुतिः शास्त्रमेव, विषयः गोचरः, उपलब्धि... मित्यर्थः, येषां तैः, विद्वद्भिरित्यर्थः, बहिष्कृतस्य निराकृतस्य, अवज्ञात... ("श्रुतिसमये बहुभिस्तिरस्कृतस्य" इति पाठे—तन्नामश्रवणसमकालमेव बहु... अनादृतस्य इत्यर्थः) उदरभरणमात्रकेवलेच्छोः उदरभरणमात्रे जठरपोषणे... ("मात्रं कार्त्स्न्येऽवधारणे" इत्यमरः) नान्यस्मिन् विषये इति मात्रशब्दार्थः, ... एकम्, इच्छा वाञ्छा यस्य तस्य केवलम् उदरपूरणपरायणस्य, पुरुषपशोः ... मनुष्यस्य च, पशोश्च छागादेश्च, विशेषः प्रभेदः, कः ? शास्त्रज्ञानविहीनः उदर... मात्रार्थी पुरुषः पशुरेवेत्यर्थः। पुष्पिताग्रा वृत्तम्।

(छ) अनया विचारणया—अनेन स्वामिचेष्टानिरूपणाविषयक... कर्त्तव्याकर्त्तव्यरूपेण वितर्केण।

(ज) कियता कालेन—किञ्चिदेव कालेन, कियत्कालमध्ये ... अमात्यः,—यः कश्चिदेको मन्त्रीत्यर्थः।

(भ) प्रधानतामप्रधानतां वा लभेत । यतः,—

न कस्यचित् कश्चिदिह स्वभावात्
भवत्युदारोऽभिमतः खलो वा ।
लोके गुरुत्वं विपरीततां वा
स्वचेष्टितान्येव नरं नयन्ति ॥ ४४ ॥

किञ्च,—आरोप्यते शिला शैले यत्नेन महता यथा ।
निपात्यते क्षणेनाधस्तथाऽऽत्मा गुणदोषयोः ॥ ४५ ॥

तद्भद्र ! (ञ) स्वयत्नायत्तो हि आत्मा सर्वस्य,—

(भ) प्रधानतामप्रधानतां वा लभेत—कार्य्यनैपुण्येन प्राधान्यं कार्य्याक्षमतया च अप्राधान्यं लब्धुमर्हेत् इत्यर्थः, अप्रधानामात्योऽपि कार्य्यकुशलतया प्रधानामात्यपदं प्रधानामात्योऽपि कार्य्यापाटवेन अप्रधानतां यातुं सम्भवेत् इति भावः ।

(४४) नेति ।—इह जगति, कश्चित् जनः, कस्यचित् जनस्य, स्वभावात् निसर्गादेव, अकारणमेवेत्यर्थः, जन्मन एव इति वा, न उदारः औदार्य्यगुणयुक्तः, महिमान्वितः इत्यर्थः, अत एव अभिमतः प्रियः, यद्वा—अभिमतः प्रियः, अत एव उदारः महान्, सम्मानभाजनमित्यर्थः, वा अथवा, खलः नीचः, अधम इत्यर्थः, अत एव अनभिमतत्वात् असम्मानभाजनमिति भावः ; ("खलो भूस्थानकल्केषु नीचक्रूराधमे त्रिषु" इति मेदिनी) भवति जायते, लोके जगति, स्वचेष्टितानि स्वव्यापारा एव, निजकर्म्माण्येवेत्यर्थः, नरं गुरुत्वं श्रेष्ठत्वं, सम्मानभाजनमित्यर्थः, वा अथवा, विपरीततां लघुत्वम्, असम्मानास्पदत्वमित्यर्थः, नयन्ति प्रापयन्ति, स्वकार्य्यानुसारेणैव नराः प्राधान्यम् अप्राधान्यं वा लभन्ते इति निष्कर्षः । उपजातिः वृत्तम् ।

(४५) आरोप्यते इति ।—महता यत्नेन बह्वायासेन, यथा यद्वत्, शिला प्रस्तरः, शैले पर्वतोपरि, आरोप्यते उत्थाप्यते, क्षणेन अल्पकालेन, अनायासेनेत्यर्थः, यथा च अधः निम्ने, भूमाविति यावत्, निपात्यते निक्षिप्यते, लोकैरिति शेषः, तथा आत्मा स्वं, स्वभावो वा, चित्तं वा ("आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्त्तनेऽपि च" इति धरणिः) गुणदोषयोः, आरोप्यते निपात्यते चेति पूर्व्वेणान्वयः, जनैरिति शेषः, महता प्रयत्नेन गुणे आरोप्यते उन्नीयते, क्षणेन च दोषे निपात्यते अधःपात्यते इत्यर्थः ; आत्मनः उन्नतिरायाससाध्या अवनतिश्च अनायासेनैव भवतीति भावः ।

(ञ) स्वयत्नाऽऽयत्तः,—स्वस्य यत्नः चेष्टा, तस्य आयत्तः अधीनः, स्वचेष्टानुसारेणैव

यात्यधोऽधो व्रजत्युच्चैर्नरः स्वैरेव कर्मभिः ।
कूपस्य खनिता यद्वत् प्राकारस्येव कारकः" ॥ ४६ ॥

करटको वदति,—(ट)"अथ भवान् किं ब्रवीति ?"। दमनक आह,—"अयं तावत् स्वामी पिङ्गलकः पानीयमपीत्वा (ठ) कुतोऽपि भयात् सचकितं परिवृत्योपविष्टः"। करटको ब्रूते,—"किं तत् त्वं जानासि ?"। दमनको वदति,—"किं (ड) प्रज्ञावताम् (ढ) अविदितमस्ति ? उक्तञ्च,—

न यत्रास्ति गतिर्वायोः रश्मीनाञ्च विवस्वतः ।
तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतां सदा ॥ ४७ ॥

---

आत्मनः उन्नतिरवनतिर्वा भवति इत्यर्थः ।

(४६) यातीति ।—नरः मनुष्यः, कूपस्य खनिता विदारकः, कूपखननकारक इत्यर्थः, यद्वत् यथा, प्राकारस्य प्राचीरस्य, कारकः निर्माता इव च, स्वैः स्वकीयैरेव, आत्मकृतैरेवेत्यर्थः, कर्मभिः दोषगुणवत्क्रियाभिः, अधोऽधः अधोऽप्यधः, सर्वाध इत्यर्थः, ["उपर्य्यध्यधसः सामीप्ये" (८।१।७पा०) इति द्विरुक्तिः] याति गच्छति, उच्चैः उन्नतिञ्च, व्रजति लभते, कूपखननकारकः स्वकर्म्मानुरोधेन क्रमशः अध एव, प्राकारनिर्म्माता च तथैव क्रमशः ऊर्द्धमेव गच्छति, एवं लोकोऽपि स्वकर्म्मवशादेव नीचैः उच्चैः वा गच्छति इति निष्कर्षः ।

(ट) अथ—प्रश्ने ।

(ठ) कुतोऽपि भयात्—कस्मादपि जन्तोर्भयेन, कस्माच्चिदविज्ञातात् भयादिति भावः ।

(ड) प्रज्ञावतां—बुद्धिमताम् । [ "क्तस्य च वर्त्तमाने" (२।३।६७ पा०) इति कर्त्तरि षष्ठी ] ।

(ढ) अविदितम्—अपरिज्ञातम् । [ "मतिबुद्धिपूजार्थेभ्यश्च" (३।२।१८८ पा०) इति वर्त्तमाने क्तः ] ।

(४७) न यत्रेति ।—यत्र यस्मिन् स्थाने, वायोः पवनस्य, गतिः सञ्चारः तथा विवस्वतः सूर्य्यस्य, रश्मीनाञ्च किरणानाञ्च, गति प्रवेशः, सञ्चारावकाश इत्यर्थः, न अस्ति न विद्यते, तत्रापि वातातपदुष्प्रवेशेऽपि स्थाने, बुद्धिमतां पण्डितानां बुद्धिः मतिः, सदा नियतकालम्, आशु क्षिप्रं, प्रविशति गन्तुमर्हति, प्रज्ञावन्तो हि पण्डिताः सर्व्वमवगच्छन्ति इति भावः ।

अपरञ्च,—उदीरितोऽर्थः पशुनाऽपि गृह्यते
हयाश्च नागाश्च वहन्ति देशिताः ।
अनुक्तमप्यूहति पण्डितो जनः
परेङ्गितज्ञानफला हि बुद्धयः ॥ ४८ ॥
अपिच,—आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च ।
नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः ॥ ४९ ॥

तदत्र (ण) भयप्रस्तावेऽहमेनं (त) प्रज्ञाबलेन (थ) आत्मीयं करिष्यामि । यतः,—

---

(४८) उदीरित इति ।—उदीरितः कथितः, सम्यक् बोधितः इत्यर्थः, अर्थः वस्तु अभिधेयं वा, पशुना चतुष्पदेनापि, अज्ञानेन जन्तुनाऽपि इति यावत्, गृह्यते स्वीक्रियते, बुध्यते इत्यर्थः, यतः हयाश्च अश्वाश्च, नागाश्च हस्तिनश्च, देशिताः आदेशिताः सन्तः, चालकेन चालिताः सन्तः इति यावत्, वहन्ति नयन्ति, वोढव्यमिति शेषः, पण्डितो जनः विद्वान् पुरुषः, अनुक्तम् अकथितम् अपि, हृद्गतमपि भावमित्यर्थः, ऊहति वितर्केण जानाति, हि तथाहि, बुद्धयः मतयः, प्रज्ञा इत्यर्थः, परेषाम् अन्येषाम्, इङ्गितम् अभिप्रायानुरूपचेष्टाविशेषः, चेष्टाविशेषद्वारा हृद्गतो भावः इति यावत्, तस्य ज्ञानम् अवबोधः, तदेव फलं परिणामः यासां ताः ; सैव बुद्धिः प्रशस्ता, यया अन्येषां मनोगतं परिज्ञातुं शक्यते, स्पष्टतया उक्तस्य पशूनामपि सुबोध्यत्वात् इति भावः । वंशस्थविलं वृत्तम् ।

(४९) चित्तपरीक्षणोपाये पौराणिकश्लोकं प्रदर्शयति, आकारैरिति ।—आकारैः मुखरागादिभिः बहिर्भावैः, इङ्गितैः हृदयस्थितभावावेदकचेष्टाविशेषैः, गत्या गमनेन, गमनभङ्ग्या इत्यर्थः, चेष्टया कायिकव्यापारविशेषेण, भाषणेन च कथनेन च, नेत्रञ्च वक्त्रञ्च तयोः नयनाननयोः, विकारः विकृतिः, अन्यथाभावः इत्यर्थः, तेन, दृष्टिपातप्रकारेण मुखभङ्ग्या च, अन्तर्गतं मनः अन्येषां हृदयस्थितः भावः, लक्ष्यते ज्ञायते, प्रज्ञावद्भिरिति शेषः । ( मात्स्यचतुर्नवत्यधिकशततमाध्याये "नेत्रवक्त्रविकारेण लक्ष्यते" इत्यत्र "नेत्रवक्त्रविकारैश्च गृह्यते" इति पाठान्तरम् ) ।

(ण) भयप्रस्तावे—भीतिप्रसङ्गे, उपस्थितभयविषये इत्यर्थः ।

(त) प्रज्ञाबलेन—बुद्धिप्रभावेण ।

(थ) आत्मीयं—स्वायत्तं, मदाश्रिताऽऽपन्नम् इत्यर्थः ।

प्रस्तावसदृशं वाक्यं सद्भावसदृशं प्रियम् ।
आत्मशक्तिसमं कोपं यो जानाति स पण्डितः" ॥ ५०॥

करटको वदति,—"सखे ! त्वं (द) सेवाऽनभिज्ञः । पश्य,—

अनाहूतो विशेद् यस्तु अपृष्टो बहु भाषते ।
आत्मना मन्यते प्रीतो भूपालो वै स दुर्मतिः" ॥ ५१॥

दमनको ब्रूते,—"भद्र ! कथमहं सेवाऽनभिज्ञः ? पश्य,—

किमप्यस्ति स्वभावेन सुन्दरं वाऽप्यसुन्दरम् ? ।
यदेव रोचते यस्मै भवेत् तत्तस्य सुन्दरम् ॥ ५२॥

---

(५०) इङ्गितज्ञस्य प्रशंसाप्रस्तावे वृद्धचाणक्योक्तं पण्डितलक्षणमाह, प्रस्ता —यो जनः, प्रस्तावसदृशं प्रसङ्गानुरूपं, प्रस्तुतविषयसम्बद्धमित्यर्थः, अवसरोचित यावत्, वाक्यं वचनं, जानाति अवगच्छति, वक्तुमिति शेषः, सद्भावसदृशं प्रण प्रियं हृद्यं, जानाति, आचरितुमिति शेषः, येन यादृशः प्रणयः तं प्रति व्यवहारं कर्त्तुं जानाति, न तस्मादधिकं न्यूनं वेत्यर्थः, आत्मनः स्वस्य, शक्त्या सम समं सदृशं, कोपं क्रोधञ्च, जानाति अवगच्छति, प्रकाशयितुमिति शेषः, क्रो दण्डयितुं शक्तिरस्ति न वा, कीदृशी वा अस्ति इति विचार्य प्रवर्त्तते इत्यर्थः, सः तादृशो जन एव, पण्डितः विद्वान्, प्राज्ञ इति यावत् ।

(द) सेवाऽनभिज्ञः,—स्वामिसेवां कर्त्तुं न जानासीत्यर्थः ।

(५१) अनाहूत इति ।—यः सेवकजनः, अनाहूतः अनाकारितः सन् प्रविशेत्, गच्छेदित्यर्थः, भूपालस्य समीपमिति शेषः, अपृष्टः अजिज्ञासित भूपालेनेति शेषः, बहु अनेकं, भाषते ब्रवीति, तथा भूपालः नरपतिः, आत्म मां प्रति इत्यर्थः, प्रीतः प्रसन्नतामापन्नः, इत्येवं मन्यते बुध्यते, स सेवकजनः दुर्बुद्धिः, वै किल । ("अनाहूतः प्रविशति अपृष्टो बहु भाषते । अविश्वस्ते वि मूढचेता नराधमः ॥" इति भारतोद्योगपर्व्वीयपाठभेदः) ।

(५२) किमिति ।—स्वभावेन प्रकृत्या, किमपि किञ्चिदपि वस्तु, मनोरमं, वा अथवा, असुन्दरम् अप्रीतिकरम, अस्ति अपि ? विद्यते नैव इत्यर्थः, अपि इति प्रश्ने, ("अपि सम्भावनाप्रश्नशङ्कागर्हासमुच्चये" इति यत् वस्तु, यस्मै रोचते रुचिजनकं भवति, यत् यं प्रीणयति इत्यर्थः, ["रुच्य प्रीयमाणः" (१।४।३३ पा०) इति सम्प्रदानात् चतुर्थी] तदेव वस्तु, तस्य

यतः,—यस्य यस्य हि यो भावस्तेन तेन हि तं नरम्।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत्॥ ५३॥

अन्यच्च,—कोऽत्रेत्यहमिति ब्रूयात् सम्यगादेशयेति च।
आज्ञामवितथां कुर्य्यात् यथाशक्ति महीपतेः॥ ५४॥

किञ्च,—अल्पेच्छुर्धृतिमान् प्राज्ञश्छायेवानुगतः सदा।
आदिष्टो न विकल्पेत स राजवसतिं वसेत्" ॥ ५५ ॥

करटको ब्रूते,—"कदाचित् त्वाम् (ध) अनवसरप्रवेशात् (न) अवमन्यते स्वामी"। दमनक आह,—"अस्त्वेवम्;

---

सुन्दरं कुत्सितमपि मनोहरं, भवेत् स्यात्, मनःप्रवृत्तिरेव सुन्दरकुत्सितदर्शने हेतुरिति भावः, "इष्टत्वमिष्टत्वमपव्यवस्थम्" इति तात्पर्य्यम्।

(५३) यस्येति।—मेधावी बुद्धिमान् जनः, यस्य यस्य जनस्य, यो हि यादृशः एव, भावः अभिप्रायः, तेन तेन हि तेन तेनैव भावेन, तं नरं मनुष्यम्, अनुप्रविश्य अनुगम्येत्यर्थः, तस्य च्छन्दोऽनुवर्त्तनं कृत्वेति यावत्, क्षिप्रं शीघ्रम्, आत्मवशं स्वायत्ततां, नयेत् प्रापयेत्, चित्तानुरूपकार्य्यकरणेन वशं कुर्य्यादित्यर्थः।

(५४) कामन्दकनीतेः पञ्चमसर्गोक्तश्लोकमनुसृत्य सेवकधर्म्ममाह, कः इति।—अत्र स्थाने, कः ? तिष्ठतीति शेषः, इति स्वामिना एवं पृष्टः सन्नित्यर्थः, अहमिति अहमस्मीति, तथा सम्यक् समीचीनं, यथेष्टमित्यर्थः, आदेशय आदेशं कुरु, इति च, ब्रूयात् कथयेत्, सेवक इति शेषः, तथा यथाशक्ति शक्तिमनतिक्रम्य, साध्यानुसारेणेत्यर्थः, [अव्ययीभावः] महीपतेः राज्ञः, आज्ञां नियोगम्, आदेशमित्यर्थः, अवितथाम् अमोघां, सफलामित्यर्थः, प्रतिपालनमिति यावत्, कुर्य्यात्, एष एव सेवकधर्मः यत् आदेशानन्तरमेव कार्य्यं साधयेत् इति भावः।

(५५) अल्पेति।—यः अल्पेच्छुः अलुब्धः, स्वल्पसन्तुष्ट इत्यर्थः, धृतिमान् धैर्य्यशीलः, प्राज्ञः बुद्धिमान्, सदा नित्यं, छाया इव स्वप्रतिबिम्बमिव, अनुगतः प्रभोः अनुगामी, तथा आदिष्टः किमपि कार्य्यं साधयितुमाज्ञप्तः सन्, न विकल्पेत न वितर्कयेत्, अविचार्य्यैव आदेशं प्रतिपालयेत् इत्यर्थः, स तादृशः सेवकः, राजवसतिं राजभवनं, वसेत् तिष्ठेत्, ईदृश एव भृत्यः राजसेवां कर्त्तुमर्हेत् इत्यर्थः।

(ध) अनवसरप्रवेशात्—असमये समीपगमनात्।

(न) अवमन्यते—अनाद्रियते, तिरस्करोति इत्यर्थः।

(प) तथाऽप्यनुजीविना (फ) सान्निध्यमवश्यं करणीयम्। यतः,

दोषभीतेरनारम्भः तत् कापुरुषलक्षणम्।
कैरजीर्णभयाद् भ्रातः! भोजनं परिहीयते ?॥ ५६॥

पश्य—

आसन्नमेव नृपतिर्भजते मनुष्यं
विद्याविहीनमकुलीनमसङ्गतं वा।
प्रायेण भूमिपतयः प्रमदा लताश्च
यः पार्श्वतो वसति तं परिवेष्टयन्ति" ॥ ५७॥

करटको ब्रूते,—"अथ तत्र गत्वा किं वक्ष्यसि ?"। दमनक आह,—"शृणु, किमनुरक्तो विरक्तो वा मयि स्वामीति ज्ञास्ये तावत्।" करटको ब्रूते,—"किं (ब) तज्ज्ञानलक्षणम्?

---

(प) तथाऽपि—स्वामिसकाशादपमानाशङ्कायां सत्यामपि।

(फ) सान्निध्यं—सन्निधौ अवस्थानम्।

(५६) दोषेति।—दोषभीतेः अनिष्टभयात्, क्षतिशङ्कया इत्यर्थः, अनारम्भः अप्रवृत्तिः, कार्य्यपराङ्मुखता इति यावत्, इति यत् तदेव कापुरुषस्य पुरुषकारहीनस्य इति यावत्, लक्षणं चिह्नं, कापुरुषा एव वैफल्यमाशङ्क्य साधने विमुखा भवन्तीत्यर्थः, हे भ्रातः करटक! अजीर्णभयात् अपाकाशङ्कया "खाद्यमिदम् उदरस्थं सत् न पच्यते चेत्" इति भयेनेत्यर्थः, कैर्जनैः, भोजनं आहारः, परिहीयते त्यज्यते ? न कैरपीत्यर्थः।

(५७) आसन्नेति।—नृपतिः राजा, विद्याविहीनं मूर्खम्, अकुलीनम् अज्ञातम्, असङ्गतं वा सौहार्द्दविरहितं वा, अप्रियमपीति यावत्, आसन्नं सन्निहितमेव, मनुष्यं यं कञ्चिदेव नरं, भजते आश्रयति, अनुगृह्णातीति तथाहि, भूमिपतयः राजानः, प्रमदाः नार्य्यः, लताश्च व्रतत्यश्च, प्रायेण भूयसा, बाहुल्येनेति यावत्, यः जनः वृक्षादिर्वा, पार्श्वतः पार्श्वे, वसति तिष्ठति, तं जनं वृक्षादिं परिवेष्टयन्ति अवलम्बन्ते, तमेव आश्रित्य वर्त्तन्ते इत्यर्थः; अतः सर्व्वथा राजसान्निध्यं कर्त्तव्यमिति भावः। वसन्ततिलकं वृत्तम्।

(ब) तज्ज्ञानलक्षणं—तयोरनुरागविरागयोः, ज्ञानं बोधः, तस्य लक्षणं चि[ह्नम्]

दमनको ब्रूते,—"शृणु,—

दूरादवेक्षणं हासः सम्प्रश्नेष्वादरो भृशम्।
परोक्षेऽपि गुणश्लाघा स्मरणं प्रियवस्तुषु॥ ५८॥
तत्सेवकेऽनुरक्तिश्च दानं प्रीतिविवर्द्धनम्।
सुरक्तेश्वरचिह्नानि दोषेऽपि गुणसङ्ग्रहः॥ ५९॥
[युग्मकम्]

अन्यच्च,—कालयापनमाशानां वर्द्धनं फलखण्डनम्।
विरक्तेश्वरचिह्नानि जानीयान्मतिमान् नरः॥ ६०॥

एतज्ज्ञात्वा (भ) यथा चायं ममायत्तो भविष्यति, तद् वक्ष्यामि। यतः,—

---

(५८) मत्स्यपुराणीयराजधर्म्मवर्णनप्रसङ्गे उक्तं श्लोकमवलम्ब्य युग्मकेन तल्लक्षणं कथयति, दूरादिति।—दूरात् दूरत एव, अनुरागास्पदे सेवके दूरं स्थिते एवेत्यर्थः, अवेक्षणं साभिलाषदृष्टिपातः, हासः हास्यं, तं दृष्ट्वैव इति भावः, सम्प्रश्नेषु कुशलादिपृच्छासु, भृशम् अतिशयितं यथा तथा, आदरः यत्नः, परोक्षेऽपि असमक्षेऽपि, सेवकस्य अप्रत्यक्षेऽपीत्यर्थः, गुणश्लाघा स्वामिभक्तिकर्म्मकुशलित्वादिगुणप्रशंसा, प्रियवस्तुषु अभिमतवस्तुषु दृष्टेष्वित्यर्थः, स्मरणं स्मृतिः, अनुरक्तस्येति शेषः।

(५९) तदिति।—तत्सेवके तस्मिन् भृत्ये, अनुरक्तिः अनुरागः, आनुकूल्यमिति यावत्, दानं धनादीनां वितरणं, प्रीतिविवर्द्धनं सन्तोषवर्द्धनं, सदयव्यवहारैः सेवकस्य तुष्टिजननमित्यर्थः, ("सुप्रियभाषणम्" इति पाठे—प्रियभाषणेन मधुरवचनेन सह दानम् इत्यर्थः) दोषेऽपि अपराधसत्त्वेऽपि, गुणसङ्ग्रहः तम् अगणय्य गुणग्रहणम्, एतानि सुरक्तेश्वरचिह्नानि अनुरक्तस्य प्रभोः लक्षणानि।

(६०) मत्स्यपुराणीयराजधर्म्मवर्णनप्रसङ्गे कथितश्लोकस्य छायामवलम्ब्य विरक्तप्रभोर्लक्षणमाह, कालयापनमिति।—कालयापनं ददामि करोमि इति कृत्वा अनुग्रहप्रदर्शने समयातिपातः, आशानां तृष्णानां, वर्द्धनं वृद्धिजननम्, अनुकूलकार्य्यमकृत्वा प्रत्यहमाशाप्रदानमित्यर्थः, फलखण्डनम् आशानुगतस्य वस्तुनः अप्रदानं, सुसम्पादितस्यापि कार्य्यस्य अस्वीकरणमित्यर्थो वा, मतिमान् बुद्धिमान्, नरः जनः, एतानि विरक्तेश्वरचिह्नानि विरक्तस्य विरागभावापन्नस्य, ईश्वरस्य स्वामिनः, चिह्नानि लक्षणानि, जानीयात् बुध्येत ; अप्रसन्ने स्वामिनि एतानि लक्षणानि भवन्ति इत्यर्थः।

(भ) यथा चायं समायत्तो भविष्यति—यथा येन प्रकारेण, षाड्गुण्याद्याः

अपायसन्दर्शनजां विपत्तिमुपायसन्दर्शनजाञ्च सिद्धिम्।
मेधाविनो नीतिविधिप्रयुक्तां पुरः स्फुरन्तीमिव दर्शयन्ति॥६१॥

अपरञ्च,—दोषा गुणा गुणा दोषा दोषा दोषा गुणा गुणाः।
रक्ते विरक्ते मध्यस्थे स्वामिनि त्रिविधा गुणाः" ॥६२॥

करटको ब्रूते,—"तथाऽपि (म) अप्राप्ते प्रस्तावे न वक्तुमर्हसि। यतः,—

---

वक्तव्यनेनेत्यर्थः, अयं स्वामी, मम आयत्तः अधीनः, वशीभूत इत्यर्थः, मयि प्रयुक्त इति यावत्, भविष्यति, मद्वचनमनुसृत्यैव सर्वं विधास्यतीत्यर्थः। ("तद्वक्ष्यामि" इत्य "तथा करिष्यामि" इति पाठान्तरम्)।

(६१) यादृशेनोपायेन स्वामिनं वशीकर्त्तुं शक्नोति तत्प्रदर्शयितुमाह अपायमिति।—मेधाविनः पण्डिताः, नीतिविधिप्रयुक्तां नीतिशास्त्रोक्ताम्, अपाय अनिष्टस्य, सन्दर्शनात् सङ्घटनात्, जायते उत्पद्यते या तथोक्तां, कुपथावलम्बने अनिष्टजन्यामित्यर्थः, ["पञ्चम्यामजातौ" (३।२।९८ पा०) इति पञ्चम्युपपदे जनेर्डः] विपत्तिं विपदम्, उपायसन्दर्शनजाम् उपायस्य अनिष्टप्रतीकारसाधन सन्दर्शनात् आश्रयणात्, जायते इति तथोक्तां, प्रतीकारसङ्घटितां, [पूर्ववत् डः] सि कार्य्यसाफल्यञ्च, पुरः समीपे, प्रत्यक्षे इत्यर्थः, स्फुरन्तीमिव आविर्भवन्तीमिव तु परोक्षामित्याशयः, दर्शयन्ति प्रमाणयन्ति, प्रभुमिति शेषः, अनिष्टजनकेन ए मार्गेण कार्य्यारम्भे कृते ते विपत्तिरवश्यम्भाविनी एतेन मार्गेण कार्य्ये कृते च सिद्धि करायत्ता एव इति नीतिशास्त्रोक्तप्रमाणोल्लेखपुरःसरं प्रत्यक्षमिव स्वामिनं प्र कौशलेन स्वायत्तः करणीय इति भावः। उपजातिः वृत्तम्।

(६२) दोषा इति।—स्वामिनि प्रभौ, रक्ते अनुरागवति, विरक्ते अपद मध्यस्थे उदासीने, अपक्षपातिनि इत्यर्थः, नापि विरक्ते नाप्यनुरक्ते इति त्रिविधाः त्रिप्रकाराः, गुणाः भावा इत्यर्थः, भवन्ति इति शेषः। कीदृशां इत्याह,—दोषाः दूषणानि ; सर्व्वत्र अपरिध्याहार्य्यः, गुणाः अदोषवत् प्रतीताः विद्यावत्त्वादयः, दोषाः अगुणसमानाः ; दोषाः दोषा एव, गुणाः गुणा यथाक्रमेण जायन्ते इति शेषः, अनुरक्ते दोषा अपि गुणाः, विरक्ते गुणा अपि दो मध्यस्थे दोषा दोषा एव, गुणाश्च गुणा एव, इति स्वामिनः त्रिविधासु आनुकूल्य कूल्यौदासीन्याभिधेयासु अवस्थासु त्रिविधं भृत्यस्य दोषगुणयोस्तारतम्यं भवेदित्यर्थः।

(म) अप्राप्ते प्रस्तावे—अनुपस्थिते प्रसङ्गे, वचनावसरे अनुपस्थिते सतीत्

अप्राप्तकालवचनं बृहस्पतिरपि ब्रुवन्।
प्राप्नुयाद् बुद्ध्यवज्ञानमपमानञ्च शाश्वतम्" ॥ ६३ ॥

दमनको ब्रूते,—"मित्र! (य) मा भैषीः, नाहमप्राप्तावसर-वचनं वक्ष्यामि। यतः,—

आपद्युन्मार्गगमने कार्य्यकालात्ययेषु च।
अपृष्टेनापि वक्तव्यं भृत्येन हितमिच्छता ॥ ६४ ॥

यदि च (र) प्राप्तावसरेणापि मया (ल) मन्त्रो न वक्तव्य-स्तदा मन्त्रित्वमेव मम (व) अनुपपन्नम्। यतः,—

---

(६३) भारतोद्योगपर्व्वीयवचनमनुसृत्य अनवसरोक्तेः दोषमाह, अप्राप्तेति।—बृहस्पतिः देवगुरुः अपि, नीतिशास्त्रप्रणेताऽपीत्यर्थः, अप्राप्तः अनागतः, कालः अवसरः यस्य तत् तादृशम्, अप्रासङ्गिकं, वचनं वाक्यं, ब्रुवन् कथयन्, बुद्ध्यवज्ञानं बुद्धिनान् इति ख्यातौ अनादरं, तथा शाश्वतं नित्यं, चिरायेत्यर्थः, अपमानञ्च अवसरानभिज्ञत्व-दोषात् तिरस्कारञ्च, अवहास्यतामिति यावत्, प्राप्नुयात् लभेत; अतादृशस्तु सुतरामेव इति भावः। ("लभते बुद्ध्यवज्ञानमवमानञ्च भारत!" इति उत्तरार्द्धस्य भारतीयः पाठः)।

(य) मा भैषीः,—न विभीहि, न शङ्कां कुरु इत्यर्थः, [ भी+लुङ्-स, "माङि लुङ्" (३।३।१७५ पा०) इति लुङ् "न माङ्योगे" (६।४।७४ पा०) इति अड़ागमप्रतिषेधश्च ]।

(६४) आपदीति।—आपदि विपत्तिकाले, उन्मार्गगमने असत्पथावलम्बने, तथा कार्य्यकालस्य अवश्यकर्त्तव्यकर्म्मणः समयस्य, अत्ययेषु च अतिपातेषु च, व्यतिक्रमेषु च इत्यर्थः, सर्व्वत्र प्रभोरिति शेषः, हितं कल्याणम्. इच्छता अभिलषता, स्वामि-शुभकामेन इत्यर्थः, भृत्येन सेवकेन, अपृष्टेनापि अजिज्ञासितेनापि, अनवसरेऽपि इत्यर्थः, वक्तव्यं कथयितव्यं, हितमिति शेषः। (अत्र द्वितीयार्द्धे—"अपृष्टोऽपि हितान्वेषी ब्रूयात् कल्याणभाषितम्" इति शुक्रनीतौ द्वितीयाध्याये कामन्दकनीतौ ५म सर्गे च पाठान्तरम्)।

(र) प्राप्तावसरेण—लब्धावकाशेन, समागतवचनयोग्यकालेनेत्यर्थः।

(ल) मन्त्रः,—इतिकर्त्तव्यताऽवधारणार्थं गुह्यभाषणम्; उपदेश इति भावः।

(व) अनुपपन्नम्—अयुक्तं, विफलमित्यर्थः।

कल्पयति येन वृत्तं येन च लोके प्रशस्यते सद्भिः।
स गुणस्तेन च गुणिना रक्ष्यः संवर्द्धनीयश्च ॥ ६५ ॥

तद्भद्र! (श) अनुजानीहि मां, पिङ्गलकसमीपमहं गच्छामि"। करटको ब्रूते,—"शुभमस्तु, (ष) यथाऽभिप्रेतमनुष्ठीयताम्,—

गम्यतामर्थलाभाय क्षेमाय विजयाय च।
शत्रुपक्षविनाशाय पुनरागमनाय च" ॥ ६६ ॥

ततो दमनको (स) विस्मित इव पिङ्गलकसमीपं गतः। अथ दूरादेव राज्ञा दृष्टः सादरं प्रवेशितस्तं (ह) साष्टाङ्ग

---

(६५) कल्पयतीति।—येन, गुणेन इति शेषः; वृत्तं चरितं, कल्पयति सङ्घटयति, निर्माति इत्यर्थः, जन इति शेषः, ("वृत्तम्" इत्यत्र "वृत्तिम्" इति पाठे—वृत्तिं जीविकां, जीवनोपायमित्यर्थः, कल्पयति निरूपयति इत्यर्थः, अद प्रभुर्व्वा इति शेषः) येन च गुणेन, लोके जगति, सद्भिः साधुभिः, प्रशस्यते समादियते, लोक इति शेषः, स तादृशः गुणः एव, गुणः गुणत्वेन परिगणितः, तेन च इतना, गुणिना गुणवता जनेन, गुणः उत्कर्षाधायको धर्म्मविशेषः, रक्ष्यः सर्वप्रयत्नेन रक्षणीयः, संवर्द्धनीयश्च वृद्धिं प्रापणीयश्च, गुणानां रक्षणे वर्द्धने च गुणवता सर्वदा प्रयतितव्यमित्यर्थः। आर्य्या वृत्तम्।

(श) अनुजानीहि—अनुमोदय, अनुज्ञां देहीत्यर्थः, [अनु+ज्ञा+लोट् हि]।

(ष] यथाऽभिप्रेतम् अनुष्ठीयतां—यथाऽभिलषितं विधीयताम्।

(६६) गम्यतामिति।—अर्थलाभाय धनार्जनाय, प्रयोजनसिद्ध्यर्थं वा, क्षेमाय श्रेयसे, उन्नतिलाभरूपमङ्गलाय इत्यर्थः, विजयाय जयसिद्धये च, स्वामिवशीकरणरूपार्थेत्यर्थः, शत्रुपक्षविनाशाय रिपुकुलपराभवार्थं, पुनरागमनाय इहैव स्थाने प्रत्यागमनाय च, गम्यतां प्रस्थीयतां, त्वयेति शेषः, सर्वथा तेऽभीष्टसिद्धिर्भवतु इत्यर्थः।

(स) विस्मित इव—विस्मयाविष्ट इव।

(ह) साष्टाङ्गम्—अष्टाभिरङ्गैः "जानुभ्याञ्च तथा पद्भ्यां पाणिभ्यामुरसा धिया। शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः ॥" इत्युक्तलक्षणैरवयवैः सह वर्त्तमानं यथा तथा।

प्रणम्योपविष्टः। राजाऽऽह,—(क) "चिरात् दृष्टोऽसि"। दमनको ब्रूते,—"यद्यपि मया सेवकेन श्रीमद्देवपादानां न किञ्चित् प्रयोजनमस्ति, तथाऽपि (ख) प्राप्तकाले (ग) अनुजीविना (घ) सान्निध्यमवश्यं कर्त्तव्यमित्यागतोऽस्मि। यतः,—

दन्तस्य निर्घर्षणकेन राजन्!
कर्णस्य कण्डूयनकेन वाऽपि।
तृणेन कार्य्यं भवतीश्वराणां
किमङ्ग! वाक्पाणिमता नरेण? ॥ ६७ ॥

यद्यपि देवपादैः (ङ) चिरावधीरितस्य मे बुद्धिविनाशः शङ्क्यते, तदपि न। यतः,—

(क) चिरात्—बहोः कालात् परम्।

(ख) प्राप्तकाले—उचितसमये, कार्य्यकाले समागते इत्यर्थः।

(ग) अनुजीविना—अनुजीवितुम् आश्रयितुं शीलमस्य, अनु हीनतया, ("अनु हीने सहार्थे च" इति मेदिनी) जीवितुं प्राणान् धर्त्तुं शीलमस्येति वा तेन, सेवकेन, भृत्येन इत्यर्थः। [अनु+जीव+णिनिः]।

(घ) सान्निध्यं—सन्निधौ अवस्थानम्।

(६७) आवश्यके सति सामान्यमपि वस्तु कार्य्यं निर्वाहयति, अतः अकिञ्चित्करैरपि अस्मदादिभिः सेवकधर्म्मानुसारेण भवत्सकाशमुपस्थातव्यमेव इत्याह, दन्तस्येति।—अङ्ग! भोः!, [सम्बोधनसूचकमव्ययम्। "अथ सम्बोधनार्थकाः। स्युः पाट् प्याडङ्ग हे है भोः" इत्यमरः। यद्वा—अङ्गशब्दः पुनरर्थकमव्ययम्। "पुनरर्थेऽङ्ग" इत्यमरः। वाक्पाणिमता नरेण किमङ्ग किं पुनः? तेन कार्य्यं सिध्यति इत्यत्र किं पुनर्वक्तव्यमित्यर्थः]। राजन्! दन्तस्य निर्घर्षणकेन मार्जनसाधनेन, दन्तशोधनार्थमित्यर्थः, वा अथवा, कर्णस्य श्रवणस्य, कण्डूयनकेन कण्डूतिसाधनेन, कर्णखर्जनार्थमित्यर्थः, तृणेनापि "खड़िका" इति भाषया प्रसिद्धेन वस्तुनाऽपि, अतितुच्छेनापीति भावः; ईश्वराणां प्रभूणां, कार्य्यं भवति, वाक्पाणिमता वाक्शक्तियुक्तेन हस्तविशिष्टेन च, नरेण मानवेन, किं तद्द्वारा कार्य्यसिद्धिविषये किमु वक्तव्यम्? तेन कार्य्यं भवत्येवेत्यर्थः। उपजातिः वृत्तम्।

(ङ) चिरावधीरितस्य—बहुदिनं कर्म्मणि अनियोगात् अवज्ञातस्य।

कदर्थितस्यापि च धैर्य्यवृत्ते-
बुद्धेर्विनाशो न हि शङ्कनीयः ।
अधःकृतस्यापि तनूनपातो
नाधः शिखा याति कदाचिदेव ॥ ६८ ॥

देव ! तत् सर्वथा (च) विशेषज्ञेन स्वामि-
भवितव्यम् । यतः,—

मणिर्लुठति पादेषु काचः शिरसि धार्य्यते ।
क्रयविक्रयवेलायां काचः काचो मणिर्मणिः ॥ ६९ ॥

---

(६८) अथ अनादृता अपि समादरणीया मनीषिणः न हि प्रज्ञा... जायन्ते, इति वर्णयितुमाह, कदर्थितस्येति ।—कदर्थितस्य अवज्ञातस्य... धैर्य्यवृत्तेः धैर्य्यशीलस्य, सुधिया इति यावत्, अत एव स्वामिकृतमनादरस्य... इति भावः ; बुद्धेर्विनाशः बुद्धिहानिः, न हि नैव, शङ्कनीयः तर्क्य... अनादृतोऽपि मनस्वी न हि स्वकीयनैसर्गिकमनीषातो विच्युतो भवतीत्यर्थः ; अ... अधःकृतस्य निम्नाभिमुखं कृत्वा धृतस्यापि, तनूनपातः वह्नेः, प्रज्वलितस्य... यावत्, [ तनूं शरीरं न पातयति, किन्तु जाठररूपेण शरीरं धारयति इति त... णिच् + क्विप् । पाणिनीयास्तु—"नप्त्राण्नपात्—" (६।३।७५ पा०) इति निपात... वदन्ति । यद्वा—तनूं स्वं स्वरूपं न पाति न रक्षति, आशुविनाशित्वात्... पा + शतृ । यद्वा—तन्वा ऊनं कृशं पाति इति तनूनपं घृतादि, तदत्ति इति त... पात् "अदोऽनन्ने" (३।२।६८ पा०) इति विट् ] अग्नेः जठरस्थस्यापि ... भुक्तान्नपाचनाद् देहापातकत्वं सिद्धम् ; शिखा ज्वाला, कदाचिदेव कस्मि... कथमपीत्यर्थः, न अधो याति न निम्नाभिमुखं गच्छति, प्रत्युत ऊर्द्ध्वमेव ज्वलती... अत माघः,—"प्रसिद्धमूर्द्ध्वज्वलनं हविर्भुजः" इति । उपजातिः वृत्तम् ।

(च) विशेषज्ञेन—अभिज्ञेन, सगुणनिर्गुणयोः भेदविज्ञाने विचक्षणेनेत्यं...

(६९) अनादृता अपि रत्नादयः कदाऽपि न स्वाभाविकगौरवं... भवन्तीत्याह, मणिरिति ।—मणिः रत्नं, पादेषु चरणेषु, ( "पादाग्रे" इति हस्त... धृतः पाठः ) लुठति विदलितो भवतीत्यर्थः, पादाभरणेषु धार्य्यते इति... यदीति शेषः, पादाभरणेषु यदि व्यवह्रियते इत्यर्थः, काचः भङ्गप्रवणः स्व... स्वनामप्रसिद्धः तुच्छः पदार्थविशेषः, च यदि शिरसि धार्य्यते शिरो...

अन्यच,—निर्विशेषो यदा राजा समं सर्वेषु वर्त्तते ।
तदोद्यमसमर्थानामुत्साहः परिहीयते ॥ ७० ॥

किञ्च,—त्रिविधाः पुरुषा राजन्! उत्तमाधममध्यमाः ।
नियोजयेत् तथैवैतांस्त्रिविधेष्वेव कर्मसु ॥ ७१ ॥

यतः,—स्थान एव नियुज्यन्ते भृत्याश्चाभरणानि च ।
न हि चूडामणिः पादे नूपुरो न च मूर्द्धनि ॥ ७२ ॥

---

व्यवह्रियते, तथाऽपि, क्रयविक्रयवेलायाम् (अत्र "यथैवास्ते तथैवास्ताम्" इति पाठान्तरम्) क्रयस्य मूल्यदानपूर्वकग्रहणस्य, विक्रयस्य मूल्यादानपूर्वकार्पणस्य, समये उपस्थिते सतीत्यर्थः, काचः काचः काचत्वेनैव परिगणितः, काचोचितस्वल्पमूल्य एवेत्यर्थः, मणिः मणिः रत्नत्वेनैव समादृतः, रत्नोचितबहुमूल्य एवेत्यर्थः, भवेदिति शेषः; अनादृतानामप्यस्माकं गुणवत्ता कार्य्यकाले मणिवत् प्रस्फुरत्येव, न काचवदकिञ्चित्करता इति तात्पर्य्यम् ।

(७०) उत्तमाधमेषु समवर्त्तिता राज्ञां दोष एव इत्याह, निर्विशेष इति ।—यदा यस्मिन् समये, यदि इत्यर्थो वा, राजा नृपतिः, निर्विशेषः निः नास्ति, विशेषः पार्थक्यं, सगुणनिर्गुणयोरिति भावः, यस्य तादृशः, गुणागुणविचारपराङ्मुखः सन् इत्यर्थः, सर्वेषु जनेषु, समं समानं, वर्त्तते आचरति, सगुणनिर्गुणयोस्तुल्यभावेनैव व्यवहरति इत्यर्थः, तदा तर्हि, उद्यमसमर्थानां उद्योगक्षमाणाम्, उत्साहवतामित्यर्थः, कार्य्यकुशलानामिति यावत्, भृत्यानाम् इति शेषः, उत्साहः अध्यवसायः, प्रभुकार्य्यसम्पादने दृढ़सङ्कल्प इति यावत्, परिहीयते क्षीयते, विनश्यति इति यावत्, गुणेषु गौरवप्रदर्शनाभावादिति भावः ।

(७१) योग्यमेव योग्यकर्म्मणि नियोजयेत् इत्याह, त्रिविधा इति ।—हे राजन्! पुरुषाः लोकाः, उत्तमाधममध्यमाः उत्कृष्टाः अपकृष्टाः नाप्युत्कृष्टाः न चाप्यपकृष्टाः उभयोर्मध्यवर्त्तिन इत्यर्थः, त्रिविधाः त्रिप्रकाराः, सन्ति इति शेषः, तथैव तेनैव हेतुना, पुरुषाणाम् उत्तमाधममध्यमत्वेनैव हेतुनेत्यर्थः, एतान् त्रिविधान् पुरुषान्, ("तथैवैतान्" इत्यत्र "यथावत् तान्" इति महाभारतोद्योगपर्वोक्तः पाठः) त्रिविधेषु उत्तमाधममध्यमेषु त्रिप्रकारेषु एव, कर्मसु कार्य्येषु, नियोजयेत् प्रवर्त्तयेत्, योग्यताऽनुसारेणेति भावः ।

(७२) अस्थाने योग्यस्य संस्थापनं न प्रशस्तम् इत्याह, स्थाने इति ।—भृत्याः सेवकाश्च, आभरणानि रत्नभूषणादीनि च, स्थाने एव यथोचितसन्निवेशे

अपि च,—कनकभूषणसङ्ग्रहणोचितो
यदि मणिस्त्रपुणि प्रणिधीयते ।
न स विरौति न चापि विशोभते
भवति योजयितुर्वचनीयता ॥ ७३ ॥
अन्यच्च,—मुकुटे रोपितः काचश्चरणाभरणे मणिः ।
न हि दोषो मणेरस्ति किन्तु साधोरविज्ञता ॥ ७४ ॥
पश्य,—

एव, नियुज्यन्ते प्रयुज्यन्ते, स्वामिनेति शेषः, नियुक्तानि भवितुमर्हन्तीत्य ("नियोज्यन्ते" इति पाठेऽपि स एवार्थः। "हि युज्यन्ते" इति पाठे—हि निश्चि अत्यर्थमित्यर्थः, युज्यन्ते शोभन्ते, प्रयुक्तानि सुदर्शनानि भवन्ति इत्यर्थः) ; तथाहि, चूडामणिः शिरोरत्नं, मुकुटादिकमिति भावः, पादे चरणे, न, नू मञ्जीरश्च, चरणाभरणविशेषः इति यावत्, मूर्द्धनि मस्तके, न,उभयत्रापि नियु युज्यते वा इति शेषः। अनुष्टुब्वृत्तम्।

(७३) ननु हीनकार्य्यनियोगे न केवलं नियुक्तस्य गौरवहानिः, नियोक्तु अनभिज्ञताकलङ्कः स्यात्, इत्याह, कनकेत्यादिद्वाभ्याम्।—कनकभूषणसङ्ग्र णोचितः कनकभूषणस्य सुवर्णाभरणस्य, सङ्ग्रहणं निबन्धनमित्यर्थः, सङ्घटन यावत्, औत्कर्ष्यसम्पादनमिति भावः ; यद्वा—कनकभूषणे सङ्ग्रहणं संस्थापनमित्य विन्यासः इति यावत्, तस्मिन् उचितः अभ्यस्तः, युक्तः इत्यर्थः, मणिः रत्नं, चेत्, त्रपुणि सीसधातौ रङ्गधातौ वा, सीसकाभरणे रङ्गाभरणे वा इत्य ("त्रपु सीसकरङ्गयोः" इति मेदिनी) प्रणिधीयते संयोज्यते, अलङ्कारकर्त्रेति शेषः, तदा स मणिः, न विरौति न शब्दायते, न सङ्क्रन्दतीत्यर्थः, न चापि विशो नैव वा दर्शनीयो भवति, यद्वा—स न विशोभते, अपि च किञ्च, अथ शोभाभावेऽपीति यावत्, न विरौति ; यद्वा—स न विरौति नापि च विशो विगतशोभो भवति, स्वकीयनैसर्गिकद्युतितो न परिभ्रष्टो भवतीत्यर्थः, प्रत्युत योज सङ्घटयितुः, सीसधातौ निधापयितुरलङ्कारकर्त्तुरेवेत्यर्थः, वचनीयता निन्दा, जायते, अस्थाने स्थापनं हि स्थापयितुः स्थापयितव्यस्य च द्वयोरपि न्यूनताव्यञ्ज मिति भावः। द्रुतविलम्बितं वृत्त,—"द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणा

(७४) मुकुटे इति।—मुकुटे किरीटे, यदि काचः अयत्नसुलभः तुच्छपदा

बुद्धिमाननुरक्तोऽयमयं शूर इतो भयम् ।
इति भृत्यविचारज्ञो भृत्यैरापूर्य्यते नृपः ॥ ७५ ॥

तथाहि,—अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
प्राप्य मनुष्यविशेषं भवन्ति योग्या अयोग्याश्च ॥ ७६ ॥

अन्यच्च,—किं भक्तेनासमर्थेन ? किं शक्तेनापकारिणा ? ।
भक्तं शक्तञ्च मां राजन् ! नावज्ञातुं त्वमर्हसि ॥ ७७ ॥

विशेष इत्यर्थः, चरणाभरणे पादभूषणे च, यदि मणिः महामूल्यं रत्नम् इत्यर्थः, रोपितः आरोपितः, संयोजितः इत्यर्थः, स्यात् इति शेषः, तदा मणेः रत्नस्य, दोषः निन्दा, न हि अस्ति नास्त्येवेत्यर्थः, किन्तु साधोः आरोपयितुरिति यावत्, अत्र विपरीतलक्षणया असाधोरित्यर्थः, मूढस्येति भावः, अविज्ञता अलङ्करणानभिज्ञता, प्रकटीभवति इति शेषः। वृत्तमनुष्टुप् ।

(७५) सर्व्वथा विविच्य भृत्यनियोजनं नरेन्द्राणां सम्पन्निदानम् इत्याह, बुद्धिमानिति।—अयं भृत्यः, बुद्धिमान् प्राज्ञः, अयम् अनुरक्तः अनुरागी, प्रभुपरायण इत्यर्थः, तथा अयं भृत्यः, शूरः बलवान्, इतः अस्मात् भृत्यात्, भयं त्रासः, अनिष्टाशङ्का इति यावत्, अस्तीति शेषः, ("अयं शूर इतो भयम्" इत्यत्र "इहोभयगुणो जनः" इति पाठे—इह अस्मिन् भृत्ये, उभयगुणः बुद्धिमत्त्वानुरक्तित्वरूपः द्विविधगुण इत्यर्थः) इति एवं, भृत्यविचारज्ञः भृत्यगुणागुणविचारे निपुणः, नृपः राजा, भृत्यैः सेवकैः, गुणवद्भिरिति भावः; आपूर्य्यते वृद्धिं नीयते, सर्व्वसम्पत्तिभिः परिपूर्णः क्रियते इति यावत्, तस्य सर्वाभीष्टसिद्धिः जायते इति भावः। अनुष्टुप् वृत्तम् ।

(७६) आश्रयस्य हीनोत्कर्षादिगुणतारतम्येन आश्रितानामपि हीनत्वोत्कर्षत्वे जायेते इति प्रदर्शयन् आह, अश्व इति।—अश्वः घोटकः, शस्त्रं खड्गादिप्रहरणं, शास्त्रं स्मृत्यादि, वीणा वल्लकी, वादनयन्त्रम् इत्यर्थः, वाणी वाक्यं, नरश्च पुरुषश्च, नारी च स्त्री च, एते सप्त, मनुष्यविशेषं गुणवन्तमगुणवन्तं वा पुरुषमाश्रयं, प्राप्य आसाद्य, योग्याः कार्य्यक्षमाः, अयोग्याः कार्य्याक्षमाः च, भवन्ति जायन्ते, गुणवन्तं पुरुषं प्राप्य योग्याः निर्गुणाश्रयणे च अयोग्याः सम्पद्यन्ते इत्यर्थः। "सङ्क्रान्तिमाधारवशं गुणानाम्" इति "संसर्गजा दोषगुणा भवन्ति" इति वा भावः।

(७७) अथावसरज्ञो दमनकः प्राप्तावसरतया इदानीं सर्व्वथा निजोपयोगित्वमाह, किमिति।—असमर्थेन अशक्तेन, भक्तेन अनुरक्तेन, प्रभुपरायणेन इत्यर्थः,

यतः,—अवज्ञानाद्राज्ञो भवति मतिहीनः परिजनः
ततस्तत्प्राधान्याद्भवति न समीपे बुधजनः।
बुधैस्त्यक्ते राज्ये न हि भवति नीतिर्गुणवती
विपन्नायां नीतौ सकलमवशं सीदति जगत् ॥ ७८ ॥

अपरञ्च देव !—
जनं जानपदा नित्यमर्चयन्ति नृपार्चितम्।
नृपेणावमतो यस्तु स सर्वैरवमन्यते ॥ ७९ ॥

---

भृत्येन इति शेषः, किम् ? किंप्रयोजनम् ? अनुरक्तमात्रेण न कार्यसिद्धिः इत्यर्थः, तथा अपकारिणा विद्वेषवता, अननुरक्तेन इत्यर्थः, शक्तेन कार्यक्षमेण किम् ? किं प्रयोजनम् ? न वा केवलसामर्थ्यं प्रभोरुपकारकं भवति इत्यर्थः, इ... त्वं भक्ताम् अनुरक्तं, शक्तं कार्य्यसाधननिपुणञ्च, माम् अवज्ञातुम् ... अर्हसि न युज्यसे, भक्तानुरक्तानाञ्च मादृशाम् उपेक्षणं न देवपादानां श्रेयस्कर... गूढाभिप्रायः। अनुष्टुप् वृत्तम्।

(७८) हितैषिणामवज्ञा हि सर्व्वदोषमूलम् इति प्रदर्शयन्नाह, अवज्ञा... —राज्ञः नृपतेः, राजकर्तृकादित्यर्थः, अवज्ञानात् अनादरात्, अवमान... परिजनः अनुजीविगणः, मतिहीनः बुद्धिभ्रष्टः, भवति जायते, गुणे समाद... कोऽपि स्वं गुणवन्तं कर्त्तुं नोत्सहते, तेन च मतिहीनता आयाति इति भा... अनन्तरं, तत्प्राधान्यात् निर्बुद्धिपरिजनानां बाहुल्यात्, मूर्खप्राबल्य... बुधजनः प्राज्ञः, समीपे राजसन्निधौ, न भवति न तिष्ठति, न गच्छतीत्य... पण्डितैः, त्यक्ते परिहीने, राज्ये राष्ट्रे, नीतिर्नयः, गुणवती गुणयुक्ता, ... यावत्, न हि भवति, नैव सम्पद्यते, गुणवदमात्याभावात् यथावदप्रयुज्यमान... विफला भवेदित्यर्थः, नीतौ नये, विपन्नायां स्खलितायां, विफलायां सत्यां... सकलं कृत्स्नं, जगत् राज्यम्, अवशम् उच्छृङ्खलं, शासनशैथिल्यात् स्वेच्छा... इति यावत्, सीदति अवसन्नं भवति ; अहो ! समूलघातिनी राजावज्ञा ... इति भावः। शिखरिणी वृत्तम्। तल्लक्षणन्तु—"रसैरुद्रैश्छिन्ना य म न स भ ल... शिखरिणी" इति ॥

(७९) राजकृतसम्माननावमाननयोरेव गुणदोषावाह, जनमिति।—... जनाः, जनपदवासिनो लोकाः इत्यर्थः, ("भवेज्जनपदो जानपदोऽपि ...

किञ्च,—बालादपि ग्रहीतव्यं युक्तमुक्तं मनीषिभिः।
रवेरविषये किं न प्रदीपस्य प्रकाशनम् ?" ॥ ८० ॥

पिङ्गलको ब्रूते,—"भद्र दमनक! किमेतत्? त्वमस्माकं प्रधानामात्यपुत्रः सुधीः, (छ) इयत्कालं यावत् (ज) कुतोऽपि पिशुनवचनान्नाऽऽगतोऽसि? इदानीं (झ) यथाऽभिमतं ब्रूहि।"

दमनको ब्रूते,—"देव! पृच्छामि किञ्चित्, उच्यताम्; उदकार्थी स्वामी पानीयमपीत्वा किमिति विस्मित इवावतिष्ठते?"।

पिङ्गलकोऽवदत्,—"भद्रमुक्तं त्वया, किन्तु एतद्रहस्यं वक्तुमस्माकं क्वचित् (ञ) विश्वासभूमिर्नास्ति, त्वन्तु (ट) तथाविधः,

---

(पृथिवि मेदिनी) नित्यं सर्वदा, नृपार्चितं नृपसम्मानितं, जनम् अर्चयन्ति स्तुवन्ति, समाद्रियन्ते इत्यर्थः, यस्तु जनः, नृपेण राज्ञा, अवमतः अवज्ञातः, स जनः, सर्वैः जनैः, अवमन्यते अवज्ञायते, राजसम्मानं हि सम्मानमूलं सर्वेषामिति भावः। अनुष्टुप् वृत्तम्।

(८०) सुभाषितस्य ग्राह्यत्वे पात्रापात्रविचारस्यानुपयोगित्वं प्रकटयन्नाह, बालादिति।—मनीषिभिः स्थिरधीभिः, विद्वद्भिरिति यावत्, बालादपि बालकादपि, युक्तं न्याय्यम्, उक्तं वचः, ग्रहीतव्यं ग्रहणीयम्। अत्र अर्थान्तरमाह,—रवेः सूर्य्यस्य, अविषये अगोचरे, सूर्य्याभावे इत्यर्थः, सूर्य्यकिरणप्रवेशायोग्यस्थाने इत्यर्थो वा, किं प्रदीपस्य प्रकाशनं दीप्तिः, न? दीपालोकेन रूपदर्शनं न भवति किम्? अपि तु भवत्येव इत्यर्थः, बालकस्यापि मे न्याय्यमेतत् वचनं त्वया अवश्यमेव श्रोतव्यमिति भावः। तथाहि दिवाकरसदृशास्त्वपितुः महासत्त्विणः अभावे प्रदीपसदृशः तत्तनयः कार्य्यविशेषेषु कथं न समादरणीयः? इति निष्कर्षः। वृत्तमनुष्टुप्।

(छ) इयत्कालं यावत्—एतावन्तं कालं व्याप्य। ("यावत्" इत्यत्र "नीत्वा" इति पाठे—यापयित्वा इत्यर्थः, अतिवाहयित्वेति यावत्)।

(ज) कुतोऽपि—कस्मादपि, अस्माभिरविज्ञातादित्यर्थः। पिशुनवचनात्—खलवाक्यात्, खलस्य वचनं श्रुत्वेत्यर्थः।

(झ) यथाऽभिमतं—यथाऽभिलषितं, तव ईप्सितं वाक्यमित्यर्थः।

(ञ) विश्वासभूमिः,—विश्वासपात्रं, प्रत्ययभाजनमित्यर्थः।

(ट) तथाविधः,—तादृशः विश्वासभूमिः।

अतस्त्वं शृणु कथयामि,—सम्प्रति वनमिदम् (ठ) अपूर्वसत्त्वाधिष्ठितम्, अतोऽस्माकं त्याज्यम्। तथा च श्रुतस्त्वया (ड) अपूर्वः शब्दो महान्, शब्दानुरूपेण च तस्य प्राणिनो बलेनापि सुमहता भवितव्यम्।" दमनको ब्रूते,—"देव! अस्ति तावदयं महान् भयहेतुः, स शब्दोऽस्माभिरप्याकर्णितः। किन्तु स (ढ) किंमन्त्री, यः प्रथमं (ण) मन्त्राभावेण भूपरित्यागं युद्धोद्योगं वा उपदिशति। अपरञ्च देव! अस्मिन्नेव (त) कार्य्यसन्देहे भृत्यानाम् (थ) उपयोगः ज्ञातव्यः। यतः,—

बन्धुस्त्रीभृत्यवर्गस्य बुद्धेः सत्त्वस्य चात्मनः।
आपन्निकषपाषाणे नरो जानाति सारताम्" ॥ ८१॥

सिंहो ब्रूते,—"भद्र! (द) महती शङ्का मां बाधते"। द

---

(ठ) अपूर्वसत्त्वाधिष्ठितम्—अपूर्वम् अश्रुतपूर्वम् अदृष्टपूर्वञ्च, यत् सत्त्वं जन्तुः, तेन अधिष्ठितम् अधिकृतम्।

(ड) अपूर्वः,—अश्रुतपूर्वः।

(ढ) किंमन्त्री—निन्दितामात्यः, मन्त्रिनामायोग्य इत्यर्थः। ("किं सर्वे" इत्यसमस्तपाठे—मन्त्री किम्? नैवेत्यर्थः)।

(ण) मन्त्राभावेण—मन्त्रणामन्तरेणेवेत्यर्थः।

(त) कार्य्यसन्देहे—कर्त्तव्यावधारणसंशये।

(थ) उपयोगः,—उपयोगिता, कार्य्यनैपुण्यम् इत्यर्थः।

(८१) बन्धुप्रभृतीनामुपयोगितापरीक्षायाः कालमाह, बन्धुस्त्रीति।—नरः आपन्निकषपाषाणे आपत् विपत्तिरेव, निकषपाषाणः सुवर्णस्य उत्कर्षापकर्षपरीक्षोपयोगिप्रस्तरविशेषः तत्र, बन्धुप्रभृतीनां सारत्वासारत्वनिर्णये विपत्तिरूपकषबन्धवः मित्राणि, स्त्रियः नार्य्यः, दाराः इति भावः, भृत्याः अनुजीविनः, तेषां समूहस्य, आत्मनः स्वस्य, बुद्धेः प्रज्ञायाः, तथा सत्त्वस्य बलस्य च स्वभावस्य सत्त्वगुणस्य च वा, सारताम् उत्कर्षं, जानाति परीक्षते, आपद्येव एषाम् अनुविरक्तत्वं वा कृत्रिमत्वमकृत्रिमत्वं वा बुध्यते इत्यर्थः। वृत्तमनुष्टुप्।

(द) महती शङ्का मां बाधते—इत्यस्य भयपीड़ितोऽस्मीत्यर्थः।

नकः (ध) स्वगतमाह,—"अन्यथा राज्यसुखं परित्यज्य स्थानान्तरं गन्तुं कथं मां सम्भाषसे ?"। (न) प्रकाशं ब्रूते,—"देव! यावदहं जीवामि, तावद्भयं न कर्त्तव्यम्। किन्तु करटकादयोऽपि आश्वास्यन्ताम्; यस्मादापत्प्रतीकाराय दुर्लभः (प) पुरुषसमवायः।"

ततस्तौ दमनक-करटकौ राज्ञा (फ) महाप्रसादेन पूजितौ भयप्रतीकारं प्रतिज्ञाय चलितौ। करटको गच्छन् दमनकमाह,—"सखे! किं (ब) शक्यप्रतीकारोऽयं भयहेतुरशक्यप्रतीकारो वेति न ज्ञात्वा भयोपशमं प्रतिज्ञाय कथमयं महाप्रसादो गृहीतः? यतः (भ) अनुपकुर्वाणो न कस्यापि (म) उपायनं गृह्णीयात्, विशेषतो राज्ञः। पश्य,—

यस्य प्रसादे पद्माऽऽस्ते विजयश्च पराक्रमे।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः॥ ८२॥

---

(ध) स्वगतम्—आत्मगतम्, अन्यैः अश्राव्यम् इत्यर्थः। ("अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्" इति दर्पणकारः)।

(न) प्रकाशं—स्पष्टम्।

(प) पुरुषसमवायः,—पुरुषाणामेकत्र समावेशः, सहायपुरुषसङ्घ इत्यर्थः।

(फ) महाप्रसादेन—युद्धाय प्रतिष्ठापयिषवे कस्मैचित् सेनापतये प्रीत्या यत् वस्त्रालङ्कारखाद्यादिकं दीयते स महाप्रसादस्तेन।

(ब) शक्यप्रतीकारः,—शक्यः साध्यः, कर्त्तुं पार्य्यः इत्यर्थः, प्रतीकारः प्रतिविधानं यस्य सः।

(भ) अनुपकुर्वाणः,—उपकारमकुर्व्वन्, उपकारमकृत्वेत्यर्थः।

(म) उपायनम्—उपहारम्।

(८२) मनुवचनं समुद्धृत्य राज्ञः स्वरूपमाह द्वाभ्यां, यस्येति।—यस्य राज्ञः, प्रसादे अनुग्रहे सति, पद्मा लक्ष्मीः, ऐश्वर्य्यमित्यर्थः, आस्ते वसति, भवतीति यावत्, ("आस्ते" इत्यत्र "श्रीः" इति मनूक्तः पाठः) पराक्रमे शौर्य्ये च, प्रभावे इत्यर्थः, विजयः जयलाभः, क्रोधे रोषे च, मृत्युः मरणं, वसति ध्रियते, यस्मिन् प्रसन्ने सर्व-

तथाहि,—बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति" ॥ ८३ ॥

दमनको विहस्याऽऽह,—"मित्र ! (य) तूष्णीमास्यताम्, ज्ञातं मया भयकारणं, (र) बलीवर्दनर्दितं तत्। वृषभाश्चास्माकमपि भक्ष्याः, किं पुनः सिंहस्य ?"। करटको ब्रूते,—"यद्येवं, तदा स्वामित्रासस्तत्रैव किं नापनीतः ?"। दमनकोऽवदत्—"यदि स्वामित्रासस्तत्रैव मुच्यते, तदा कथमयं मत्प्रसादलाभः स्यात् ? अपरञ्च,—

निरपेक्षो न कर्त्तव्यो भृत्यैः स्वामी कदाचन ।
निरपेक्षं प्रभुं कृत्वा भृत्यः स्याद्दधिकर्णवत्" ॥ ८४ ॥

करटकः पृच्छति,—"कथमेतत् ?"। दमनकः कथयति,—

---

जीविनां सम्पल्लाभो भवति, रणक्षेत्रे असन्निहितस्यापि यस्य च प्रताप एव सैन्यं विजयं लभन्ते, यस्मिंश्च कुपिते प्रजानां मृत्युरवश्यम्भावीत्यर्थः, हि निश्चितं राजा, सर्वतेजोमयः निखिलतेजःसम्पन्नः ; "अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः" इति स्मरणादिति भावः।

(८३) बाल इति।—भूमिपः राजा, बालोऽपि शिशुरपि, मनुष्य इति मनुष्यबोधेन इत्यर्थः, न अवमन्तव्यः न अवज्ञातव्यः, हि यतः, एषा राजरूपा, प्रधाना, देवता नररूपेण मनुष्यवेशेन उपलक्षिता, तिष्ठति पृथिव्यां वर्त्तते, इत्यर्थः, सुरेन्द्रमात्राऽऽश्रितत्वात् राजावमानने सर्वे देवा एव अवमानिता भवन्ति इति भावः। अनुष्टुप् वृत्तम्।

(य) तूष्णीमास्यतां—मौनं स्थीयताम्।

(र) बलीवर्दगर्ज्जितं—वृषभगर्ज्जितम्, उद्दण्डवृषेण कृतं गर्ज्जनम् इत्यर्थः।

(८४) निरपेक्ष इति।—भृत्यैः अनुजीविभिः, स्वामी प्रभुः, कदाचन कदाचिदपि, निरपेक्षः निराकाङ्क्षः, स्वसाहाय्यस्य प्रयोजनीयताबोधपरिशून्य इत्यर्थः, भृत्यसाहाय्यनिरपेक्षोऽपि यावत्, न कर्त्तव्यः न विधेयः, भृत्यः सेवकः, प्रभुं स्वामिनं निरपेक्षं सहायताऽऽवश्यकताबोधपरिशून्यं, स्वेन अनावश्यकताबोधवन्तमित्यर्थः, विधाय, दधिकर्णवत् दधिकर्णनामा बिडाल इव, स्यात् भवेत्, विपन्नः इति शेषः। अत्रायं भावः,—यावत् प्रभोः भृत्येन प्रयोजनं वर्त्तते, तावदेव भृत्ये समादरः

सिंह-मार्जार-मूषिककथा।—

"अस्ति (ल) उत्तरापथे अर्बुदशिखरनाम्नि पर्वते दुर्दान्तो नाम महाविक्रमः सिंहः। तस्य (व) पर्वतकन्दरमधिशयानस्य (श)केशराग्रं मूषिकः कश्चित् प्रत्यहं छिनत्ति। स सिंहः केशराग्रं (ष) लूनं बुद्ध्वा कुपितो विवरान्तर्गतं मूषिकम् (स) अलभमानोऽचिन्तयत्,—"किं विधेयमत्र? भवत्वेवं श्रूयते,—

क्षुद्रशत्रुर्भवेद् यस्तु विक्रमान्नैव लभ्यते।
तमाहर्त्तुं पुरस्कार्य्यः सदृशस्तस्य सैनिकः" ॥ ८५ ॥

इति आलोच्य तेन ग्रामं गत्वा दधिकर्णनामा विड़ालः प्रयत्नादानीय मांसाद्याहारेण सन्तोष्य स्वकन्दरे स्थापितः। ततस्तद्भयात् मूषिको वहिर्न निःसरति। तेनासौ सिंहः

---

वर्त्तते प्रभूणां, समाप्ते च प्रयोजने पुनर्नाऽऽद्रियते प्रभुभिर्भृत्यः, अतः समादराकाङ्क्षिणा जीविकैषिणा च भृत्येन प्रभुः नैव आत्मसाहाय्यनिरपेक्षः करणीय इति। अनुष्टुप् वृत्तम्।

(ल) उत्तरापथे—उत्तरस्यां दिशि।

(व) पर्व्वतकन्दरं—पर्व्वतगुहां, पर्व्वतकन्दरे इत्यर्थः। ["अधिशीङ्स्थासां कर्म्म" (१।४।४६ पा०) इति अधिकरणस्य कर्म्मसंज्ञा]।

(श) केशराग्रं—जटाग्रभागम्।

(ष) लूनं—छिन्नम्।

(स) अलभमानः,—अप्राप्नुवन्, आक्रमितुमसमर्थः इति यावत्।

(८५) क्षुद्रेति।—यस्तु ("यस्य" इति पाठे—यस्य, जनस्येति शेषः) क्षुद्रशत्रुः मूषिकादिवत् अल्पप्राणी रिपुः, भवेत् स्यात्, तादृशः शत्रुः चेत् विक्रमात् पराक्रममवलम्ब्य, [ल्यब्लोपे ५मी] नैव लभ्यते प्राप्यते, विक्रमेण वशीकर्त्तुमनर्हः भवतीत्यर्थः, तदा तं शत्रुम्, आहर्त्तुं वशीकर्त्तुम्, ("आहन्तुम्" इति पाठे—विनाशयितुमित्यर्थः) तस्य सदृशः तस्य शत्रोः तुल्यः, क्षुद्रप्राणी इत्यर्थः, सैनिकः सेनां समवैति इति सेनापुरुषः, ["सेनाया वा" (४।४।४५ पा०) इति द्वितीयान्तात् पाक्षिकः ठक्] पुरस्कार्य्यः अग्रे स्थापनीयः, कार्य्यसाधकत्वेन नियोक्तव्यः इत्यर्थः, शृगालवत् योधयेदिति भावः। अनुष्टुप् वृत्तम्।

(इ) अचतकेसरः सुखं स्वपिति। मूषिकशब्दं यदा यदा शृणोति, तदा तदा तं विड़ालं मांसाहारदानेन सविशेषं (क) संवर्द्धयति।

अथैकदा स मूषिकः क्षुधापीड़ितो वहिः सञ्चरंस्तेन मार्जारेण प्राप्तो व्यापादितः खादितश्च। अनन्तरं स सिंहो यदा कदाचिदपि मूषिकशब्दं न शुश्राव, तदा (ख) उपयोगाभावात् तस्य विड़ालस्य आहारदाने (ग) मन्दाऽऽदरो बभूव"। अतोऽहं ब्रवीमि,—"निरपेक्षो न कर्त्तव्यः" इत्यादि।

[ इति सिंह-मार्ज्जार-मूषिककथा ]।

ततो दमनक-करटकौ सञ्जीवकसमीपं गतौ। तत्र करटकस्तरुतले (घ) साटोपमुपविष्टः। दमनकः सञ्जीवकसमीपं गत्वाऽब्रवीत्,—"अरे वृषभ! एषोऽहं राज्ञा पिङ्गलकेनारण्यरक्षार्थं नियुक्तः। सेनापतिः करटकः समाज्ञापयति,—'सत्वरमागच्छ, नो चेदस्मादरण्यात् (ङ) दूरमपसर। अन्यथा ते (च) विरुद्धं फलं भविष्यति'। न जाने क्रुद्धः स्वामी (छ) किं विधास्यति।" तत् श्रुत्वा सञ्जीवकस्तायात्। यतः,—

आज्ञाभङ्गो नरेन्द्राणां ब्राह्मणानामनादरः।
पृथक्शय्या च नारीणामशस्त्रविहितो बधः॥ ८६॥

(इ) अचतकेसरः,—अच्छिन्नसटः।
(क) संवर्द्धयति—समाद्रियते।
(ख) उपयोगाभावात्—निष्प्रयोजनत्वात्, उपकारिताविरहात् इत्यर्थः।
(ग) मन्दादरः,—शिथिलप्रयत्नः।
(घ) साटोपं—सगर्व्वम्।
(ङ) दूरमपसर—विप्रकृष्टस्थानं गच्छ, दूरीभवेत्यर्थः।
(च) विरुद्धं फलं—विपरीतः परिणामः, अनिष्टमित्यर्थः।
(छ) किं विधास्यति—किं करिष्यति, किंविधं शासनं करिष्यति इत्यर्थः।
(८६) आज्ञाभङ्ग इति।—नरेन्द्राणां राज्ञां, प्रभूणाम् इत्यर्थः, आज्ञा...

ततो (ज) देशव्यवहारानभिज्ञः सञ्जीवकः सभयमुपसृत्य (झ) साष्टाङ्गपातं करटकं प्रणतवान्। तथा चोक्तम्,—

मतिरेव बलाद्गरीयसी
यदभावे करिणामियं दशा।
इति घोषयतीव डिण्डिमः
करिणो हस्तिपकाऽऽहतः क्वणन् ॥८७॥

अथ सञ्जीवकः सशङ्कमाह,—"सेनापते! किं मया कर्त्तव्यं, तदभिधीयताम्"। करटको ब्रूते,—"वृषभ! यद्यत्र कानने

---

चाद्देशलङ्घनं, ब्राह्मणानां विप्राणाम्, अनादरः अयत्नः, अवज्ञा इत्यर्थः, नारीणां स्त्रीणाञ्च, पृथक् भिन्ना, स्वामिशय्याऽन्तरशय्यायामित्यर्थः, शय्या शयनस्थानम्, अशस्त्रविहितः शस्त्रं विना अनुष्ठितः, वधः विनाशः, मृत्युतुल्य इत्यर्थः, भवतीति शेषः; तथाऽऽचरणस्य नितरामवमाननाजनकत्वात् इति भावः। ईदृशाचरणानां हत्या-सङ्घटनतुल्यतया राजहत्याब्रह्महत्यास्त्रीहत्यारूपमहापापजनकत्वमवमन्तव्यमिति तात्पर्य्यम्।

(ज) देशव्यवहारानभिज्ञः,—अविदितदेशाचारः।

(झ) साष्टाङ्गपातम्—अष्टानां जानुपादादीनाम् अङ्गानां पातः, तेन सह वर्त्तमानं यथा तथा।

(८७) मतिरिति।—बलात् सामर्थ्यात् स्थौल्याद्वा, मतिः बुद्धिरेव, गरीयसी श्रेष्ठतरा, यदभावे यस्याः मतेरभावे, करिणां हस्तिनां, महाकायानां बलीयसाञ्चेति भावः; इयम् ईदृशी, पराधीनतारूपा इत्यर्थः, दशा अवस्था, इति एतद्वचनं, हस्तिपकाऽऽहतः हस्तिचालकताड़ितः, गजचालकेन वादित इत्यर्थः, करिणः गजस्य, पृष्ठस्थित इति शेषः, यद्वा—करिणः सम्बन्धे, इति घोषयतीवेत्यन्वयः; डिण्डिमः वाद्यविशेषः, यं वादयित्वा राजभृत्याः सर्व्वंच राजादेशं घोषयन्ति "ढेँड़ा" इति यस्य वङ्गभाषा; क्वणन् शब्दायमानः, घोषयतीव प्रचारयतीव; बुद्धिर्यस्य बलं तस्य अबोधस्य कुतो बलम्? इति भावः। (केचित्तु "करिणो हस्तिपकाऽऽहताः" इति पठन्ति, व्याख्यानयन्ति चैवं यत्,—करिणः हस्तिपकेन आहताः भवन्ति, इति क्वणन् इति। तदसभ्यं न रोचते)। अत्र सुन्दरी वृत्तम्। तल्लक्षणं यथा—"अयुजोर्यदि सौ जगौ युजोः सभरा लगौ सुन्दरी तदा" इति।

स्थातुमिच्छा वर्त्तते, तदा (ञ) देवपादारविन्दं गत्वा प्रणम" । सञ्जीवको वदति,—"तदभयवाचं प्रयच्छ गच्छामि" । करटकेनोक्तम्,—"शृणु रे बलीवर्द ! (ट) अलमनया शङ्कया । यतः,—

प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभुजे ।
अनुहुङ्कुरुते घनध्वनिं न हि गोमायुरुतानि केसरी ॥८८॥

अपरञ्च,—तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः ।

---

(ञ) देवपादारविन्दं—देवस्य राज्ञः, ("राजा भट्टारको देवः" इत्यमरः) पादारविन्दं चरणकमलम् ।

(ट) अलं—निषिद्धं, निष्प्रयोजनमित्यर्थः, शङ्कया किमपि साध्यं नास्ति इति भावः, काऽपि ते शङ्का नास्तीति समुदितार्थः । ("अलं भूषणपर्य्याप्तिशक्तिवारणवाचकम्" इत्यमरः) । ["गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका" इति नियमात् क्रियाऽपेक्षया शङ्कायाः करणत्वेन तृतीया ] ।

(८८) दुर्व्वलो बलीवर्द्दः सिंहस्य अवज्ञापात्रत्वात् विक्रमप्रदर्शनार्हः न बोधयितुं शिशुपालवधस्य षोड़शसर्गोक्तं केशवशिशुपालयोर्दृष्टान्तमुपन्यस्यति प्रतिवाचमिति ।—केशवः युधिष्ठिरस्य राजसूययज्ञसभायाम् आसीनः श्रीकृष्णः, शपमानाय आक्रोशते, रोषेण अवाच्यं वदते इत्यर्थः, चेदिभुभुजे चेदिदेशाधिपतये शिशुपालाय इत्यर्थः, प्रतिवाचम् उत्तरम्, न अदत्त न ददौ, शिशुपालप्रयुक्तदुर्वाक्यस्य प्रत्युत्तरे किमपि नाकथयदित्यर्थः ; कथं नादत्त ? इत्याह,—केशरी सिंहः, घनध्वनिं मेघगर्ज्जितम्, अनुहुङ्कुरुते अनु पश्चात्, घनध्वनिश्रवणानन्तरमित्यर्थः, हुङ्कुर्वन् हुमित्याकारकं गर्जनं करोति, मेघगर्जनस्य स्वगर्जनतुल्यत्वादसहिष्णुतयेति भावः, यद्वा—अनुकरोति इत्यर्थः, गोमायुरुतानि शृगालरवान्, अतिक्षीणान् तुच्छान् इति भावः ; न हि नैव, अनुहुङ्कुरुते इति योजना ; स्वसमानप्रतिद्वन्द्विनो वीर्य्यवन्तः, अतः हीनबलस्य अतितुच्छस्य ते मृगाधिपसमीपे काऽपि शङ्का नास्तीति भावः । सुन्दरी वृत्तम् ।

(८९) तृणानीति ।—प्रभञ्जनः प्रबलो वायुः, सर्व्वतः चतुर्दिक्षु, सर्व्वप्रकारेण वा, प्रणतानि प्रभञ्जनाक्रोड़नेन भूमिसन्नतानि, नीचैः ह्रस्वानि क्षुद्राणि वा, मृदूनि

समुच्छ्रितानेव तरून् प्रबाधते
महान् महत्येव करोति विक्रमम्" ॥ ८९ ॥

ततस्तौ सञ्जीवकं नातिदूरे संस्थाप्य पिङ्गलकसमीपं गतौ। ततो राज्ञा सादरमालोकितौ प्रणम्य उपविष्टौ। राजाऽऽह,—(ठ) "अपि दृष्टः सः ?"। दमनको ब्रूते,—"देव ! दृष्टः, यद्देवेनाकर्णितं तत्तथैव ; महाबलोऽसौ देवं द्रष्टुमिच्छति, तत् (ड) सज्जीभूय उपविश्यताम्। किन्तु (ढ) शब्दमात्रान्न भेतव्यम्। यतः,—

अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षितः।
पैशुन्याद्भिद्यते स्नेहो वाग्भिर्भिद्यो हि कातरः ॥ ९० ॥

तथा चोक्तम्,—

---

कोमलानि, अनुन्नतानीति यावत्, तृणानि न उन्मूलयति न उत्पाटयति ; विक्रमप्रदर्शनस्यायोग्यपात्रत्वादिति भावः ; किन्तु समुच्छ्रितान् समुन्नतान्, तरून् वटादीन् एव, प्रबाधते पीडयति, उन्मूलयतीत्यर्थः, तथाहि, महान् प्रबलः, महति प्रबले जने एव, विक्रमं शौर्य्यं, करोति प्रदर्शयति, गजे सिंह इव इति भावः। सिंहविक्रमस्य अयोग्यत्वात् काऽपि ते शङ्का नास्तीति निष्कर्षः। वंशस्थविलं वृत्तम्,—"वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात्।

(ठ) अपि—प्रश्नार्थकमव्ययम्।

(ड) सज्जीभूय—भूषितो भूत्वा, राजोचितेन उपवेशनप्रकारेणेत्यर्थः ; यद्वा—सन्नद्धो भूत्वा, आक्रमितुं क्रमं बद्धा इत्यर्थः, युद्धार्थमुद्युक्तः सन्निति यावत्।

(ढ) शब्दमात्रात्—अस्य गर्जनश्रवणादेव, वाक्यश्रवणादेव वा।

(९०) अम्भसेति।—अम्भसा जलेन, जलवेगेनेत्यर्थः, सेतुः आलिः, भिद्यते स्वयमेव भिन्नो भवति, तथा किञ्च, अरक्षितः अगोपितः चेत्, मन्त्रोऽपि गुह्यवादोऽपि, भिद्यते इत्यन्वयः, स्वयं प्रकाशते इत्यर्थः, "षट्कर्णो भिद्यते मन्त्रः" इति भावः ; पैशुन्यात् खलतायाः, स्नेहः प्रणयः, भिद्यते विच्छिद्यते, भग्नो भवतीत्यर्थः, कातरः लघुचित्तः, भीतो वा, वाग्भिः वचनैः, भीतिजनकवाक्यप्रयोगेणैवेत्यर्थः, भेद्यः भेदं प्रापणीयः, वशीकार्य्य इत्यर्थः, हि निश्चये ; अतः वीरेण भवता शब्दमात्रात् न भेतव्यमिति भावः। अनुष्टुप् वृत्तम्।

शब्दमात्रान्न भेतव्यमज्ञात्वा शब्दकारणम्।
शब्दहेतुं परिज्ञाय कुट्टनी गौरवं गता" ॥ ९१ ॥

राजाऽऽह,—"कथमेतत् ?" । दमनकः कथयति,—

कुट्टनी घण्टाकर्णराक्षसकथा ।—

"अस्ति श्रीपर्वतमध्ये ब्रह्मपुराख्यं नगरम्। तत्र (ण) शैलशिखरे घण्टाकर्णो नाम राक्षसः प्रतिवसतीति (त) जनप्रवादः श्रूयते। एकदा घण्टामादाय पलायमानः कश्चिच्चौरो व्याघ्रेण व्यापादितः। (थ) तत्पाणिपतिता घण्टा वानरैः प्राप्ता। ते वानरास्तां घण्टाम् (द) अनुक्षणं वादयन्ति। ततो नगरजनैर्मनुष्यः खादितो दृष्टः, प्रतिक्षणं (ध) घण्टाऽऽरावश्च श्रूयते। अनन्तरं "घण्टाकर्णः कुपितो मनुष्यान् खादति घण्टाञ्च वादयति" इत्युक्त्वा जनाः सर्वे नगरात् पलायिताः। ततः करालया नाम कुट्टन्या (न) विमृश्य—(प) "अनवसरोऽयं घण्टावादः, तत् कि

(९१) शब्दमात्रादिति।—शब्दकारणं कुतः कस्य वा शब्दोऽयमायातीति इति शब्दस्य हेतुम्, अज्ञात्वा अनिर्णीय, शब्दमात्रात् केवलशब्द श्रुत्वैव, न भेतव्यं न शङ्कितव्यं, तथाहि, शब्दहेतुं शब्दकारणं, परिज्ञाय विदित्वा, कुट्टनी काचित् शम्भली, वृद्धा दूतीति यावत्, गौरवं राजसम्मानं लोकसम्मानञ्च, गता प्राप्ता। अनुष्टुप् वृत्तम।

(ण) शैलशिखरे—पर्व्वतशृङ्गे।

(त) जनप्रवादः,—जनश्रुतिः, किंवदन्ती इत्यर्थः।

(थ) तत्पाणिपतिता—व्याघ्रहतचौरहस्तभ्रष्टा।

(द) अनुक्षणं—प्रतिक्षणं, सर्वदैव इत्यर्थः।

(ध) घण्टाऽऽरावः,—घण्टावादनशब्दः।

(न) विमृश्य—विचिन्त्य।

(प) अनवसरः,—असामयिकः, अधुना अरण्यमध्ये घण्टारवोत्पत्तेः कारणं सम्भावनां न पश्यामीत्यर्थः।

मर्कटा घण्टां वादयन्ति ?" इति स्वयं (फ) विज्ञाय राजा विज्ञापितः,—"देव ! यदि (ब) कियद्धनोपचयः क्रियते, तदाऽहमेनं घण्टाकर्णं (भ) साधयामि"। ततो राज्ञा तुष्टेन तस्मै धनं दत्तम्। कुट्टन्या च (म) मण्डलं कृत्वा (य) गणेशादिपूजा-गौरवं दर्शयित्वा स्वयं (र) वानरप्रियफलानि आदाय वनं प्रविश्य तत्र फलानि (ल) आकीर्णानि। ततो घण्टां परित्यज्य वानराः (व) फलाऽऽसक्ता बभूवुः। कुट्टनी च घण्टां गृहीत्वा नगरमागता सकललोकपूज्या अभवत्। अतोऽहं ब्रवीमि,—"शब्दमात्रान्न भेतव्यम्" इति।

[ इति कुट्टनी-घण्टाकर्णराक्षसकथा ]।

ततः सञ्जीवकमानीय दर्शनं (श) कारितवन्तौ। पश्चात् स तत्रैव वने चिरम् (ष) अतिप्रणयेन निवसति। अथ

---

(फ) विज्ञाय—विशेषेण ज्ञात्वा, अनुसन्धानेन निश्चित्येत्यर्थः।

(ब) कियद्धनोपचयः,—किञ्चिदर्थव्ययः।

(भ) साधयामि—मन्त्रादिभिः वशीकरोमि, मारयामीति वा। ("मारणे मृतसंस्कारे गतौ द्रव्योपपादने। निर्व्वर्त्तनोपकरणानुव्रज्यासु च साधनम्॥" इत्यमर-वचनात् साधधातोर्मारणार्थेऽपि प्रयोगदर्शनात्)। अथवा "प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते" इति नियमात् साधयामि गच्छामि, तत्त्वान्वेषणाय गच्छामि, गत्वा च मारयामीति वा अर्थः।

(म) मण्डलं—हरिद्रादीनां चूर्णैः पञ्चवर्णात्मकैः कृतं देवतापूजार्थं सर्व्वतो-भद्रादिमण्डलाख्यं रेखाविशेषम्।

(य) गणेशादिपूजागौरवं—गणेशादिपूजनच्छलेन आत्मनो बहुमत्वमित्यर्थः।

(र) वानरप्रियफलानि—रम्भादिफलानि।

(ल) आकीर्णानि—सर्व्वतः विक्षिप्तानि।

(व) फलासक्ताः,—रम्भादिफलग्रहणतत्पराः।

(श) कारितवन्तौ—सम्पादितवन्तौ, दमनककरटकौ सिंहमिति शेषः।

(ष) अतिप्रणयेन—सिंहेन सह प्रेमातिशयेन।

कदाचित् तस्य सिंहस्य भ्राता स्तब्धकर्णो नाम सिं[हः]
समायातः। तस्याऽऽतिथ्यं कृत्वा समुपवेश्य पिङ्गलकस्तदाहार[ाय]
पशून् हन्तुं चलितः। अत्रान्तरे सञ्जीवको वदति,—"देव! अ[द्य]
हतमृगाणां मांसानि क्व ?"। राजाऽऽह,—"दमनक-करट[कौ]
जानीतः"। सञ्जीवको ब्रूते,—"ज्ञायतां किमस्ति ना[स्ति]
वा ?"। सिंहो विहस्याऽऽह,—"नास्त्येव तत्।" सञ्जीव[को]
ब्रूते,—"कथमेतावन्मांसं ताभ्यां खादितम् ?"। राजाऽऽह,—
(स) "खादितं व्ययितम् अवधीरितञ्च। प्रत्यहमेष (ह) क्रम[ः]।"
सञ्जीवको ब्रूते,—"कथं श्रीमद्देवपादानामगोचरे[णैव]
क्रियते ?"। राजाऽऽह,—"मदीयागोचरेणैव क्रियते।"
सञ्जीवको ब्रूते,—"नैतदुचितम्। तथा चोक्तम्,—

नानिवेद्य प्रकुर्वीत भर्त्तुः किञ्चिदपि स्वयम्।
कार्य्यमापत्प्रतीकारादन्यत्र जगतीपतेः॥ ९२॥

अपरञ्च,—कमण्डलूपमोऽमात्यस्तनुत्यागो बहुग्रहः।
नृपते! किंक्षणो मूर्खो दरिद्रः किंवराटकः॥ ९[३]॥

(स) खादितं—भक्षितम्। व्ययितम्—अन्येभ्यो दत्तम् अपचितं वा। अवधी[रितम्]
:—अवज्ञातम्, अनुपादेयत्वात् अयत्नात् वा हेलया परित्यक्तं, दूरे निक्षिप्तमित्य[र्थः]।

(ह) क्रमः,—कल्पः, अनुष्ठाननियमः इत्यर्थः, एवमेवाचरतः इति या[वत्]।

(९२) शुक्रकामन्दकादिनीतिशास्त्रात् सारमाहृत्य कोषाधिकारिकर्त[व्यं]
विभिः, नेति।—जगतीपतेः महीपतेः, ("जगतीपते!" इति पाठे—भो मही[पते!]
इति सिंहस्यामन्त्रणम्) भर्त्तुः प्रभोः सकाशे, भर्त्रे इत्यर्थः, [सम्बन्धविवक्षया(?)]
अनिवेद्य अविज्ञाप्य, आपत्प्रतीकारात् विपत्तिनिवारणात्, अन्यत्र अन्यत्, [किं]
किमपि, कार्य्यं कर्म्म, स्वयम् आत्मना, स्वातन्त्र्येणेत्यर्थः, न प्रकुर्वीत न [कु]
राज्ञ आज्ञाम् अप्राप्य अपि तस्य आपत्प्रतीकाराय यतेत, अन्यकार्य्यसम्पा[दने]
अवश्यमेवानुमतिरपेक्षणीयेत्यर्थः; यद्वा—जगतीपतेः आपत्प्रतीकारादन्यत्र कि[मपि]
कार्य्यं भर्त्तुरनिवेद्य स्वयं न प्रकुर्वीत इति योजनीयम्। अनुष्टुप् वृत्तम्।

(९३) कमण्डलुधर्मः मन्त्रिभिः ग्राह्य इति दर्शयति, कमण्डल्विति।—

स ह्यमात्यः सदा श्रेयान् यः काकिन्याऽपि वर्द्धयेत्।
कोषः कोषवतः प्राणाः प्राणाः प्राणा न भूपतेः ॥ ९४ ॥
किच्चान्यैर्न कुलाचारैः सेव्यतामेति पूरुषः।
धनहीनः स्वपत्न्याऽपि त्यज्यते किं पुनः परैः ? ॥ ९५ ॥

हे राजन्! अमात्यः सचिवः, कमण्डलूपमः कुण्डीसदृशः, व्रतिनां जलपात्रविशेष इत्यर्थः, तनुत्यागः तनुः स्वल्पः, त्यागः एकत्र—सञ्चितस्य धनस्य दानम्, अन्यत्र—जलनिर्गमः यस्य तादृशः, तथा बहुग्रहः एकत्र—बहुः भूरिः, ग्रहः प्रजाभ्यः करग्रहणं यस्य तादृशः, प्रजाभ्यः निःशेषेण करग्रहणतत्पर इत्यर्थः, सञ्चयशील इति यावत्, अपरत्र—बहुः ग्रहः जलस्य ग्रहणं यत्र तादृशः, भवेदिति शेषः, कमण्डलुर्यथा बहुजलं गृह्णाति ददाति च स्वल्पश एव, तद्वदमात्येनापि करग्रहणतत्परेण स्वल्पव्ययिना च भाव्यम् इत्यर्थः ; तथाहि मूर्खः किंचणः कुत्सितसमयः, समयमूल्यानभिज्ञः, समयः व्यवहारानभिज्ञो वा, समयोऽयं न वृथा अतिवाहयितव्यः, अस्य कार्य्यस्यायमुचितावसरः इत्यादिविचारबुद्धिपरिहीन इत्यर्थः, तथा दरिद्रः निर्धनः, किंवराटकः कपर्दकमूल्यानभिज्ञः कपर्दकव्यवहारानभिज्ञो वा, कियान् सञ्चयः कर्त्तव्यः व्ययोऽपि कुत्र वा कर्त्तव्यः इत्यादिविवेकविहीन इत्यर्थः, भवतीति शेषः ; मूर्खो दरिद्रश्च यतः समयस्य अर्थस्य च अपचयं करोति, अतः अमात्यस्तादृशो न प्रशस्तः, दरिद्राविमौ दमनककरटकौ नामात्यार्हौ इत्याशयः। वृत्तमनुष्टुप्।

(९४) प्रशस्तमन्त्रिलक्षणमाह, स इति।—यः काकिन्या वराटकानां दशक-द्वयेनापि, विंशतिसङ्ख्यककपर्दकेनापीत्यर्थः, ("वराटकानां दशकद्वयं यत् सा काकिनी" इति लीलावतीवचनात्) अत्यल्पेनापि धनेन इति यावत्, (मूर्द्धण्यान्तोऽप्ययं दृश्यते) वर्द्धयेत् वृद्धिं प्रापयेत्, कोषमिति शेषः, काकिणीनाविणापि मूलेन यः प्रभूतसञ्चयं कुर्य्यादित्यर्थः ; ("काकिणीं यः प्रवर्द्धयेत्" इति पाठान्तरम्) ["शकि लिङ्" (३।३।१७२पा०) इति लिङ्] सः अमात्यः सदा सर्व्वदा, श्रेयान् श्रेष्ठः, सर्व्वामात्यप्रधान इत्यर्थः, हि यतः, कोषवतः धनशालिनः, भूपतेः राज्ञः, कोषः धनं, ("कोषाः" इति पाठान्तरम्) प्राणाः प्राणतुल्यः, प्राणाः जीवनं, न प्राणाः ; कोषाभावे राज्यप्राणादिरक्षाऽसम्भवादिति भावः ; प्राणेभ्योऽपि कोषः यत्नेन रक्षणीय इत्यर्थः, अतः तनुत्यागो बहुग्रही हि अमात्यः राज्ञः प्राणेभ्योऽपि प्रियतम इति भावः। अनुष्टुप् वृत्तम्।

(९५) धनस्य प्रयोजनमाह, किञ्चेति।—अन्यैः यदुक्तं तद्व्यतिरिक्तैः, बहुभिः

(क) एतच्च राज्ञः प्रधानदूषणम्। पश्य,—

अतिव्ययोऽनपेक्षा च तथाऽर्जनमधर्मतः।
मोषणं दूरसंस्थानं कोषव्यसनमुच्यते ॥ ९६ ॥

यतः,—क्षिप्रमायमनालोच्य व्ययमानः स्ववाञ्छया।
क्षीयते एवासौ धनी वैश्रवणोपमः" ॥ ९७ ॥

द्भक्तैरिति शेषः, किम्? किं फलम्? एतदेव धनस्य प्रधाननीयतायोधने … मित्यर्थः, धनहीनः निर्धनः, पुरुषः कुलाचारैश्च वंशपरम्परागतसदाचारैः … सेव्यतां पूज्यतां, न एति न लभते, न पूजनीयो भवतीत्यर्थः; सत्स्वपि वंशपरम्परागत… प्रशस्ताचारादिषु गौरवकारणेषु बहुषु न समादरं प्राप्नोतीत्यर्थः, यद्वा—किञ्च … कुलाचारैः तथा अन्यैः कुलाचारव्यतिरिक्तैः गुणवत्त्वादिभिः गौरवकारणैः … यद्वा—अन्यैः कुलाचारैः धनव्यतिरिक्तैः केवलैः कुलाचारैरित्यर्थः. धनहीनः पु… सेव्यतां न एति; अत्र "पश्य" इति ऊहनीयम्; स्वपक्षाऽपि आत्मनः भार्य्यया… त्यज्यते हीयते; धनहीनः पुरुषः इति शेषः, परैः अन्यैरनुजीविप्रभृतिभिः, किं पु… तेषां त्यागे किं वैचित्र्यम्? वक्तव्यञ्च? इत्यर्थः, अवश्यमेव त्यज्यते इति … अनुष्टुप् वृत्तम्।

(क) एतत्—वक्ष्यमाणम्।

(९६) शुक्रकामन्दकादीनां मतमनुसृत्य कोषस्य दूषणं दर्शयति, अतिव्यय… —अतिव्ययः अत्यधिकधनव्ययः, अनपेक्षा सञ्चये औदासीन्यम्, उपेक्षा… यातु आयातु वा इत्येवमास्थाभावः इति यावत्, ("अनवेक्षा" इति पाठान्तरम्)। अधर्मतः धर्ममुल्लङ्घ्य, अर्जनम् उपार्जनं, मोषणम् अपहरणं, निपुण… कृतं चौर्य्यमित्यर्थः, दूरसंस्थानञ्च दूरवर्त्तिस्थाने धनरक्षणञ्च, कार्य्यकाले प्राप्त… मिति यावत्, एतत् सर्व्वं कोषव्यसनम् अर्थदूषणं, धनविषयिणी विपत्ति… उच्यते कथ्यते, पण्डितैरिति शेषः। अनुष्टुप् वृत्तम्।

(९७) क्षिप्रमिति।—आयं धनागमम्, अनालोच्य अविविच्य, कियान् मे … इति विवेचनामकृत्वा इत्यर्थः, स्ववाञ्छया स्वेच्छया, यथेच्छमि… अमितमिति यावत्, व्ययमानः व्ययं कुर्व्वन्, व्ययशीलः इत्यर्थः, असौ प्रभुः … राजेत्यर्थः, वैश्रवणोपमः वैश्रवणः विश्रवसस्तनयः कुबेरः, उपमा तुलना … तादृशः, धनी धनवान् अपि, क्षिप्रं सहसा, श्रमणायते एव श्रमणः भिक्षुकः, … आचरतीव दरिद्राति, भिक्षां चरति इत्यर्थः। अनुष्टुप् वृत्तम्।

तदाकर्ण्य स्तब्धकर्णो ब्रूते,—"शृणु भ्रातः! चिराऽऽश्रिता-वेतौ दमनक-करटकौ (ख) सन्धिविग्रहकार्य्याधिकारिणौ कदाचित् (ग) अर्थाधिकारे न नियोक्तव्यौ। अपरञ्च (घ) नियोगिप्रस्तावे मया यत्किञ्चित् (ङ) श्रुतं, तत् कथयामि,—

ब्राह्मणः क्षत्रियो बन्धुर्नाधिकारे प्रशस्यते।
ब्राह्मणः सिद्धमप्यर्थं कृच्छ्रेणापि न यच्छति ॥ ९८ ॥
नियुक्तः क्षत्रियो द्रव्ये खड्गं दर्शयते ध्रुवम्।
सर्वांथं ग्रसते बन्धुराक्रम्य ज्ञातिभावतः ॥ ९९ ॥

---

(ख) सन्धिविग्रहकार्य्याधिकारिणौ—सन्धिः नृपाणां परस्परमेलनाय मित्रीकरणं, विग्रहः युद्धः, परमण्डले दाहलुण्ठनच्छेदादिरिति यावत्, तौ एव कार्य्ये सम्पाद्ये इत्यर्थः, अधिकर्त्तुं शीलमनयोः तौ, तत्र अधिकारः नियोगः प्रभुत्वं वा अस्त्यनयोरिति तौ इति वा, यद्वा—सन्धिविग्रहयोः कार्य्ये कर्त्तव्ये, कर्त्तव्याकर्त्तव्यविनिश्चये इत्यर्थः, अधिकारिणौ युद्धसचिवौ इत्यर्थः।

(ग) अर्थाधिकारे—धनाध्यक्षत्वे।

(घ) नियोगिप्रस्तावे—कस्मिन् कार्य्ये कीदृशोऽमात्यः नियोक्तव्य इति प्रसङ्ग

(ङ) श्रुतम्—आकर्णितं, परिज्ञातम् इति यावत्।

(९८) इत आरभ्य एकादशभिः श्लोकैः शुक्रकामन्दकादिनीतिशास्त्रेभ्यः सारं समाहृत्य नियोगिव्यवस्थामाह, ब्राह्मण इत्यादिभिः।—ब्राह्मणः विप्रः, क्षत्रियः राहुतः, योद्धृपुरुषः इत्यर्थः, बन्धुः आत्मीयः, पितृव्यादिः ज्ञातिवर्ग इति यावत्, अधिकारे राजकर्मणि, प्रस्तुतत्वात् धनाधिकारे इत्यर्थः, न प्रशस्यते न शोभते, न नियोगमर्हतीत्यर्थः, नैव एतेषु कार्य्यभारः अर्पणीय इति यावत्। कुतः? इत्याह,—ब्राह्मणः सिद्धं विद्यमानमपि, यद्वा—सिद्धं निष्पन्नमपि, कस्मैचिद्दातुं कार्य्यविशेषार्थं व्ययितुं वा राज्ञा अनुमतत्वात् प्राप्तप्रायमपीत्यर्थः, अर्थं धनं, कृच्छ्रेणापि अतिकष्टेनापि, लङ्घुमाग्रहातिशयेनापीत्यर्थः, न यच्छति न अर्पयति, कृपणस्वभावत्वादिति भावः। अनुष्टुप् वृत्तम्।

(९९) नियुक्त इति।—क्षत्रियः राजन्यः, योद्धृपुरुषः इत्यर्थः, द्रव्ये धने, धनरक्षणे इत्यर्थः, नियुक्तः अधिकृतश्चेत्, ध्रुवं निश्चितं, खड्गं कृपाणं, दर्शयते गुप्तं धनदानेन

अपराधेऽपि निःशङ्को नियोगी चिरसेवकः ।
स स्वामिनमवज्ञाय चरेच्च निरवग्रहः ॥ १०० ॥

उपकर्त्ताऽधिकारस्थः स्वापराधं न मन्यते ।
उपकारं ध्वजीकृत्य सर्वमेव विलुम्पति ॥ १०१ ॥

उपांशुक्रीड़ितोऽमात्यः स्वयं राजायते यतः ।
अवज्ञा क्रियते तेन सदा परिचयाद्ध्रुवम् ॥ १०२ ॥

---

सर्व्वान् आयत्तीकृत्य राज्यग्रहणार्थं खड्गमुत्तोलयति इति भावः; बन्धुः आत्मीय ज्ञातिवर्ग इत्यर्थः, ज्ञातिभावतः आत्मीयत्वात्, आत्मीयतया ममत्वं प्रभुत्वं प्रकटय्य इत्यर्थः, आक्रम्य आक्रमणं कृत्वा, निःशङ्कमभ्यन्तरं प्रविश्येत्यर्थः, सर्व्वसम्पत्तिं, ग्रसते आत्मसात् करोति, सर्व्ववेदित्वादिति भावः। अनुष्टुप् वृत्तम् ।

(१००) अपराधे इति ।—नियोगी प्रस्तुतत्वात् धनाधिकारे नियुक्तः, चिरसेवकः पुरातनः भृत्यः, चेत् इति शेषः, अपराधेऽपि दोषेऽपि, अपकारं कुर्व्वन् इत्यर्थः, निःशङ्कः निर्भयः, भवतीति शेषः, स चिरसेवकः, निरवग्रहः अप्रतिबन्ध निर्बाधः सन् इत्यर्थः, स्वामिनं प्रभुम् अवज्ञाय अवमत्य, चरेत् आचरेत्, स्वं स्वेच्छया धनव्ययादिकं कुर्य्यादित्यर्थः। अनुष्टुप् वृत्तम् ।

(१०१) उपकर्त्ता इति ।—उपकर्त्ता उपकारकः, अधिकारस्थः अधिकार सम्पन्नः, धनाधिकारे अन्यस्मिन्नधिकारे वा नियुक्तश्चेदित्यर्थः, ("अधिकारस्थः" इति पाठान्तरम्) स्वापराधमात्मदोषं, न मन्यते न जानाति, न गणयतीत्यर्थः, उप पूर्व्वकृतनानुकूल्यं, ध्वजीकृत्य अग्रे कृत्वा, स्मारयित्वेति यावत्, सर्व्वमेव दोषं धनजातं वा, विलुम्पति लोपं प्रापयति, चालयति हरति वा इत्यर्थः ।

(१०२) उपांश्विति ।—अमात्यः मन्त्री, उपांशुक्रीड़ितः रहसि एकत्र क्रीडा सर्व्वरहस्यक्रीड़ासु इत्यर्थः, नर्म्मसहायः चेत् इति यावत्, यतः यस्मात् कारण स्वयं राजायते राजवत् आचरति, सर्व्वत्र प्रभुत्वं दर्शयतीत्यर्थः, तत उपांशुक्रीड़ि अत एव सदा सर्व्वदा, परिचयात् सहयोगित्वात्, तेन अमात्येन, ध्रुवं निश्चि अवज्ञा अवमानना, प्रभोरिति शेषः, क्रियते विधीयते; यद्वा—सदा परिच बहुकालावधि एकत्र वासादित्यर्थः, उपांशुक्रीड़ितः अमात्यः यतः स्वयं राजायते ततः तेन ध्रुवम् अवज्ञा क्रियते; यद्वा—यतः सदा परिचयात् उपांशुक्रीड़ितः अ स्वयं राजायते, ततः परिचयात् तेन ध्रुवमवज्ञा क्रियते ।

अन्तर्दुष्टः क्षमायुक्तः सर्वानर्थकरः किल।
शकुनिः शकटारश्च दृष्टान्तावत्र भूपते! ॥ १०२ ॥

(१०२) दुर्मन्त्रिणं निर्द्धारयति, अन्तरिति।—भूपते! हे राजन्! अन्तर्दुष्टः अन्तः मनसि, दुष्टः अनिष्टचिन्तापरत्वात् सापराधः, मनसि अनिष्टचिन्तकः, पराचे कार्य्यहन्तेत्यर्थः, क्षमायुक्तः बहिः क्षमापरः, समक्षे हितैषितां प्रकटयन् इत्यर्थः, सचेव इति शेषः, पयोमुखविषकुम्भवत् इति भावः, किल निश्चये, यद्वा—किल इति दृष्टान्तौ इत्यनेनान्वीयते, प्रसिद्धौ वार्त्तायां वा; सर्व्वानर्थकरः सर्व्वाशुभसम्पादकः, अत्र अस्मिन् विषये, शकुनिः दुर्य्योधनस्य मन्त्री मातुलश्च, तथा शकटारश्च तन्नामकः नन्दराज-मन्त्री च, दृष्टान्तौ उदाहरणभूतौ। दुर्य्योधनो हि स्वमातामहं गान्धारराजं सपरिजनं केनचिदपराधमिषेण कारायां निचिक्षेप, भक्ष्यश्च तस्मै अतीव स्वल्पं अनेकस्यापि क्षुत्प्रशमनानर्हमेककालं ददौ, स्वल्पमितेन तेन सर्व्वेषां जीवनधारणमसम्भवं मन्यमानः प्रकुपितः गान्धाराधिपः एवं शकुनिं दुर्य्योधनविनाशाय अङ्गीकारयन् तेनान्नेन जीवयामास, स्वयञ्च सहान्यपरिजनः अनाहारेण प्राणांस्तत्याज। ततः तथा कृतप्रतिज्ञः शकुनिः कालेन कारागारात् विमुक्तः महाबलं दुर्य्योधनं पराक्रमेण विनाशयितुमशक्नुवन् अमात्यापदेशेन दुर्य्योधनसभाश्रमवस्थाय छन्दोऽनुवर्त्तनेन तं वशीकृत्य च मित्रभावेण विविधकुमन्त्रणाश्च प्रदाय श्रीकृष्णसहायैः पाण्डवैः वैरतामुत्पाद्य विनाशयामास ससर्व्वपरिजनं दुर्य्योधनमिति। एवममात्यः शकटारोऽपि मृगयागतं प्रभुं नन्दमनुगच्छन् पिपासातुरस्य तस्य पानार्थं जलमानेतुं कस्मिंश्चित् सरसि अवतीर्य्य तत्र एकस्मिन् शिलाखण्डे उत्कीर्णं श्लोकविशेषं वाचयित्वा तेन च स्वप्रभावपरिक्षयशङ्कया सञ्जातेर्ष्यः सहसा प्रभुं निजघान। कालेन च विदितवृत्तान्ताः नन्दात्मजाः सपुत्रदारं तं कारायां निक्षिप्य पलपञ्चकमितं पुराण-चणकं वृत्तिं निर्द्धारयामासुः। तेन प्रकुपितश्च शकटारः नन्दवंशं समूलघातं हन्तुम् अङ्गीकार्य्य कनिष्ठपुत्रं विकटारनामानं तेन भोज्येन जीवयामास, स्वयञ्च सहान्यपरिजनः प्राणांस्तत्याज। कालेन च कृपार्द्रैः नन्दात्मजैः विकटारं कारागारात् विमुच्य कस्मिंश्चिदधिकारे नियोजयामास। अपमानितः स्थिरप्रतिज्ञश्च विकटारः स्वसङ्कल्पादविचलितः बहिः सन्तोषं प्रदर्शयन् रन्ध्रमन्विष्य च तत्रैव स्थितः। कालेन च चाणक्येन वैरमुत्पादयन् तेनैव नन्दान्वयं समूलघातं निजघान इति च वार्त्ता। शकटारविवरणन्तु विस्तरेण अस्मदीयमुद्राराक्षसपूर्व्वपीठिकायां द्रष्टव्यम्।

सदाऽमात्यो न साध्यः स्यात् समृद्धः सर्व्व एव हि ।
सिद्धानामयमादेशः ऋद्धिश्चित्तविकारिणी ॥ १०४ ॥
प्राप्तार्थग्रहणं द्रव्यपरिवर्त्तोऽनुरोधनम् ।
उपेक्षा बुद्धिहीनत्वं भोगोऽमात्यस्य दूषणम् ॥ १०५ ॥
नियोग्यार्थग्रहापायो राज्ञां नित्यं परीक्षणम् ।
प्रतिपत्तिप्रदानञ्च तथा कर्म्मविपर्य्ययः ॥ १०६ ॥

(१०४) समृद्धोऽमात्यः राजवशे न तिष्ठतीति ज्ञापयति, सदेति ।—अमात्य: मन्त्री, तथा सर्व्व एव जनः, यद्वा—सर्व्व एव उत्तममध्यमाधमः सर्व्व एवेत्यर्थः, अमात्यः, समृद्धः धनशाली चेत्, सदा चिरकालम्, अधिकदिनमित्यर्थः, साध्यः राज्ञाम् आयत्तः, न स्यात् न भवेत्, राज्ञः वशे न तिष्ठेदित्यर्थः, ( सदाऽमात्य-साध्यः स्यात्” इति पाठान्तरम् ) हि निश्चये ; यतः ऋद्धिः ऐश्वर्य्यं, चित्तविकारिणी चित्तप्रमाद‌विधायिनी, औद्धत्यादिसम्पादिकेति यावत्, अयम् ईदृशः, सिद्धानाम् अव्याहतवाचां मुनीनाम्, आदेशः उपदेशः ।

(१०५) अमात्यस्य दूषणमाह, प्राप्तेति नियोग्येति च द्वाभ्याम् ।—प्राप्तानां प्रजाभ्यः लब्धानाम्, अर्थानां राजकररूपाणां, ग्रहणं मङ्गूहः, आत्मसात्करणमित्यर्थः, ( “प्राप्तार्थाग्रहणम्” इति पाठे—प्राप्तस्य अर्थस्य पारितोषिकस्य इत्यर्थः. अग्रहणम् अनङ्गीकारः ) द्रव्यपरिवर्त्तः द्रव्याणां राजकोषधनादीनां, परिवर्त्तः विनिमयः, बहुमूल्यद्रव्यग्रहणपूर्व्वकं तत्स्थाने स्वल्पमूल्यद्रव्यसंरक्षणमित्यर्थः, अनुरोधनं प्रियजनानुसरणं, न्यायविचारे पक्षपातित्वमित्यर्थः, उपेक्षा प्रभुकार्य्येषु औदासीन्यं, बुद्धिहीनत्वम् अविवेकता, भोगः विषयासक्तिः, कामिन्यादिसम्भोगः इत्यर्थः, एतत् सर्व्वम् अमात्यस्य मन्त्रिणः, दूषणं दोषः ; नैतद्दोषयुक्तः मन्त्रिपदमर्हतीति भावः ।

(१०६) नियोग्यार्थेति ।—नियोग्यस्य प्रभोः, अर्थग्रहस्य अर्थसञ्चयस्य, सञ्चितधनस्येत्यर्थः, अपायः नाशः, नियोग्यस्य अर्थग्रहे धनागमे, अपायः विघ्नभूतः इति वा, नित्यं सर्वदा, राज्ञां परीक्षणं “किमयं मयि सन्दिग्धो विश्वस्तो वा” इति परीक्षा, जिज्ञासा इत्यर्थः, सन्दिग्धचित्तता इति यावत्, प्रतिपत्तेः स्वगौरवस्य, प्रदानं प्रदर्शनं, प्रभुसमीपे निजपटुत्वप्रख्यापनमित्यर्थः, तथा कर्म्मविपर्य्ययः कर्त्तव्यकर्म्मणः विपरीतानुष्ठानम् उपेक्षा वा, एतत् सर्व्वम् अमात्यस्य दूषणमिति पूर्व्वेणान्वयः । ( “नियोगार्थग्रहोपायः” इति पाठे—नियोगस्य नियुज्यते अस्मिन्निति व्युत्पत्त्या कार्य्यस्य, भृत्यानुष्ठेयकर्म्म

निपीड़िता वमन्त्युच्चैरन्तःसारं महीपतेः।
दुष्टव्रणा इव प्रायो भवन्ति हि नियोगिनः॥ १०७॥
मुहुर्नियोगिनो बोध्या वसुधारा महीपतेः।
सकृत् किं पीड़ितं स्नानवस्त्रं मुञ्चेद्बहूदकम्?॥ १०८॥

इत्यर्थः, अर्थग्रहे तात्पर्य्यग्रहणे, किमुद्दिश्यानेन एतदनुष्ठितमिति मर्म्मावबोधे इत्यर्थः, उपायः प्रयत्नः, विधेय इति लिङ्गव्यत्ययेन सर्वत्राध्याहार्य्यः। नित्यं परीक्षणम् अमात्येषु कः किमाचरतीति अनुसन्धानम्; प्रतिपत्तिप्रदानं प्रतिपत्तेः गौरवस्य, प्रदानम् अर्पणं, भृत्यानां प्रीत्यर्थं तेषां कार्य्यस्य प्रशंसाकरणं धनदानादिकञ्च कर्त्तव्यमित्यर्थः, तथा कर्म्मविपर्य्ययः अमात्यानां चातुर्य्यपरीक्षणार्थम् अन्तराऽन्तरा कार्य्यान्तरे नियोगः पुत्येतत् सर्वं राज्ञाम् अवश्यकर्त्तव्यमिति गूढ़ार्थः। "नियोग्यर्थग्रहोपायः" इति पाठे—नियोगिनां भृत्यानाम्, अर्थग्रहे धनागमविषयकज्ञाने, उपायः प्रयत्नः, कर्त्तव्य इति शेषः, यद्वा—नियोगिभिः अर्थग्रहः राजकोषात् धनापहारः, राज्ञाम् अपायः विनाशहेतुभूतः, अत एव नित्यं परीक्षणं कर्त्तव्यम्)।

(१०७) निपीड़ितेति।—नियोगिनः कार्य्यकारिणः सेवकाः, निपीड़िताः अत्यर्थं शासिताः सन्त इत्यर्थः, महीपतेः राज्ञः, [सम्बन्धे ६ष्ठी] ("महीपते!" इति निर्विसर्गपाठे—भो महीपते! इत्यर्थः) अन्तःसारम् अन्तः स्वीकृतम्, आत्मसात् कृतमित्यर्थः, ("अन्तः स्वीकारमध्ययोः" इति मेदिनी) सारं धनम्, उच्चैः अत्यर्थं, वाहुल्येनेत्यर्थः, वमन्ति उद्गिरन्ति, वहिष्कृत्य ददति इत्यर्थः, अन्तःसारं स्वकीयमाभ्यन्तरिकं कार्य्यपटुत्वादिकं, वमन्ति प्रकाशयन्ति इत्यर्थौ वा। ("निपीड़िताः" इत्यत्र "नापीड़िताः" इति पाठे—अपीड़िता अनिग्रहीताः सन्तः, उच्चैः अन्तःसारं न वमन्ति इति अन्वयः) हि यतः, ते प्रायः वाहुल्येन, दुष्टव्रणा इव अन्तःस्थितपूया दूषितव्रणा इव, भवन्ति जायन्ते, आचरन्तीति यावत्; दुष्टव्रणा हि अनिपीड़िताः अन्तः क्लिश्नन्ति, निपीड़िताश्च पूयादिकम् उद्गिरन्ति इति तत्साम्यम्।

(१०८) असन्नियोगिपीड़नस्य नित्यावश्यकतामाह, मुहुरिति।—नियोगिनः सेवकस्य, आत्मसात्कृतराजधनस्य इति भावः; वसुधाराः अर्थसमूहाः, सञ्चितानि धनानीत्यर्थः, महीपतेः राज्ञः, [कर्त्तुः] मुहुः पुनः पुनः, बोध्याः ज्ञातव्याः, प्राप्तवेतनानुरूपः तस्यार्थसञ्चयः भवति अधिको वा इति भूयो भूयः परीक्षा कर्त्तव्या इत्यर्थः, तथात्वे तस्य साधुत्वासाधुत्वयोः ज्ञानं भविष्यतीत्याशयः; ("मुहुर्नियोगिनो बाध्या वसुधारा महीपते!" इति पाठे—भो महीपते! बाध्या पीड्या, पीड़यित्वा

एतत् सर्वं ज्ञात्वा (च) यथाऽवसरं व्यवहर्त्तव्यम्।" पिङ्गलको ब्रूते,—"अस्ति तावदेवं, किन्तु एतौ सर्वथा मम वचनकरौ।" स्तब्धकर्णो ब्रूते,—"एतत् सर्वथाऽनुचितम्, यतः,—

आज्ञाभङ्गकरान् राजा न क्षमेत सुतानपि।
विशेषः को नु राज्ञश्च राज्ञश्चित्रगतस्य च ? ॥ १०९ ॥

अन्यच्च,—स्तब्धस्य नश्यति यशो विषमस्य मैत्री
नष्टेन्द्रियस्य कुलमर्थपरस्य धर्मः।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ ११० ॥

विशेषतश्च,—

---

ग्रहीतव्या इत्यर्थः) ननु द्विविधावबोधेनैव दुष्टसिद्धौ मुहुर्बोधस्य को हेतुः मुहुर्बोधनस्य वा ? इत्यत आह, सकृदिति।—स्नानवस्त्रं स्नानकाले परिहितवस्त्रम् आर्द्रवस्त्रमिति यावत्, सकृत् एकवारं, पीड़ितं निष्पीड़ितं सत्, बहूदकं प्रभूतजलं मुञ्चेत् किम् ? त्यजेत् किम् ? न कदाऽपीत्यर्थः, ("बहूदकम्" इत्यत्र "द्रुतं पयः" इति पाठे—द्रुतं शीघ्रं, पयः जलं, मुञ्चेत् किम् ?) अतो मुहुः बोध्या बाध्या ... अन्यथा धनबाहुल्यात् प्रभुमप्यवमन्यन्ते इति निष्कर्षः।

(च) यथाऽवसरं—कालोचितमित्यर्थः। व्यवहर्त्तव्यम्—आचरितव्यम्।

(१०९) आज्ञेति।—राजा नृपतिः, आज्ञाभङ्गकरान् अनाश्रवान्, ... लङ्घिनः इत्यर्थः, सुतान् पुत्रानपि, किमुत भृत्यान् ? इत्यपेरर्थः, न क्षमेत न सहेत ... राज्ञश्च नृपतेश्च, क्षमेत चेत् तादृशस्य व्याहताज्ञस्य वास्तवस्य नृपस्य इत्यर्थः, चित्रगतस्य चित्रार्पितस्य, अचेतनस्य इत्यर्थः, राज्ञश्च को नु विशेषः ? कः प्रभेदः ? ... तादृशः आज्ञाभङ्गसहिष्णुः हि राजा अकर्मण्य एवेति भावः।

(११०) स्तब्धेति।—स्तब्धस्य निश्चेष्टस्य, दीर्घं दृष्ट्वाऽपि अप्रतिकुर्वतः ... मौनिन इत्यर्थो वा, अवाक्पटोरिति यावत्, यशः कीर्त्तिः, नश्यति भ्रंशते, विषमस्य ... समतायून्यस्य, पक्षपातिनः, अव्यवस्थितचित्तस्य वा इत्यर्थः, खलस्य इत्यर्थो वा, ... मित्रता, नष्टेन्द्रियस्य पुंस्त्वशून्यस्य, दुष्टेन्द्रियस्येत्यर्थो वा, अजितेन्द्रियस्येति ... कुलं वंशः, वंशगौरवमित्यर्थो वा, अर्थपरस्य अर्थगृध्नोः, धर्मः, ...

तस्करेभ्यो नियुक्तेभ्यः शत्रुभ्यो नृपवल्लभात्।
नृपतिर्निजलोभाच्च प्रजा रक्षेत् पितेव हि ॥ १११ ॥

भ्रातः! सर्वथाऽस्मद्वचनं (छ) क्रियताम्। (ज) व्यवहारोऽप्यस्माभिः कृत एव। अयं शस्यभक्षकः सञ्जीवको (झ) भोजनाधिकारे नियुज्यताम्।" एतद्वचनात् तथाऽनुष्ठिते सति तदारभ्य पिङ्गलकसञ्जीवकयोः (ञ) सर्वबन्धुपरित्यागेन महता स्नेहेन कालोऽतिवर्त्तते। ततोऽनुजीविनामप्याहारदाने (ट) शैथिल्यदर्शनात् दमनक-करटकौ (ठ) अन्योऽन्यं चिन्तयतः।

---

वृताद्यासक्तस्य, विद्याफलं विद्यायाः शास्त्रज्ञानस्य, फलं परिणतिः, विनयादिकम् इत्यर्थः, कृपणस्य व्ययकुण्ठस्य, सौख्यं सुखजातं, प्रमत्तः अनवहितः, अविवेक इति यावत्, सचिवः मन्त्री यस्य तस्य दुष्टामात्यस्य, नराधिपस्य राज्ञः, राज्यं राष्ट्रं, सद्यैव नश्यतीत्यनेनान्वयः। वसन्ततिलकं वृत्तम्।

(१११) कामन्दकनीतेः प्रसर्गोक्तश्लोकमवलम्ब्य राज्ञः तस्कराद्युपद्रवात् प्रजारक्षणस्य कर्त्तव्यतामाह, तस्करेभ्य इति।—नृपतिः राजा, तस्करेभ्यः चौरेभ्यः, नियुक्तेभ्यः अधिकृतेभ्यः, राजकर्मणि प्राप्ताधिकारपुरुषेभ्य इति यावत्, शत्रुभ्यः द्विषद्भ्यः, विपक्षनृपेभ्य इत्यर्थः, नृपवल्लभात् राज्ञः प्रियजनात्, श्यालादेरिति यावत्, निजलोभात् आत्मलुब्धतायाश्च, पिता इव जनक इव, प्रजाः लोकान्, हि निश्चयेन, रक्षेत् प्रतिपालयेत्।

(छ) क्रियताम्—अनुष्ठीयताम्, अस्मदुपदेशानुयायि कर्म्म क्रियतामित्यर्थः।

(ज) व्यवहारोऽप्यस्माभिः,—अस्माभिरपि एवमेवाचरणमित्यर्थः।

(झ) भोजनाधिकारे—खाद्यद्रव्याणां रक्षणव्यापारे इत्यर्थः, शस्यभोजित्वेन अस्मद्भोज्येषु मांसेषु निस्पृहत्वादिति भावः। ("अर्थाधिकारे" इति पाठेऽपि—भोजनाधिकारे इत्येवार्थः, पशूनां भोज्यरूपार्थव्यतिरिक्तार्थाभावात्)।

(ञ) सर्व्वबन्धुपरित्यागेन—सर्वेषां बन्धूनां परित्यागः तेन, सर्व्वबन्धुपरित्यागपूर्व्वकमित्यर्थः; सर्व्वबन्धूनां परित्यागो यत्र तादृशेन इति वा।

(ट) शैथिल्यदर्शनात्—मन्दादरदर्शनात्।

(ठ) अन्योऽन्यं—परस्परम्। चिन्तयतः,—भावयतः, मन्त्रयतः इति यावत्।

तदाह दमनकः करटकम्,—"मित्र! किमत्र (ड) विधेयम्! आत्मकृतोऽयं दोषः। स्वयं कृतेऽपि दोषे (ढ) परिदेवनमप्यनुचितम्। तथा चोक्तम्,—

स्वर्णरेखामहं स्पृष्ट्वा बद्ध्वाऽऽत्मानञ्च दूतिका।
आदित्सुश्च मणिं साधुः स्वदोषाद्दुःखिता इमे"॥११२॥

करटक पृच्छति,—"कथमेतत्?"। दमनकः कथयति,—

राज-राजपुरुष-परिव्राजक-साधु-गोप-गोपवधू-नापित-नापितवधूकथा।—

"अस्ति काञ्चनपुरनाम्नि नगरे वीरविक्रमो नाम राजा। तस्य (ण) धर्माधिकारिणा कश्चिन्नापितो (त) वध्यभूमिं नीयमानः कन्दर्पकेतुनाम्ना (थ) परिव्राजकेन साधुद्वितीयेन "नायं वध्यः" इत्युक्त्वा वस्त्राञ्चले धृतः। राजपुरुषा ऊचुः,— "किमिति नायं वध्यः?"। स आह,—"श्रूयताम्। स्वर्णरेखामहं स्पृष्ट्वा" इत्यादि पठति। ते आहुः,—"कथमेतत्?" परिव्राजकः कथयति,—"अहं सिंहलद्वीपस्य भूपतेर्जीमूतकेतोः पुत्रः कन्दर्पकेतुर्नाम। एकदा (द) केलिकाननावस्थितेन मया

(ड) विधेयं—कर्त्तव्यम्।

(ढ) परिदेवनं—विलपनम्, अनुताप इति यावत्।

(११२) स्वर्णरेखामिति।—अहं स्वर्णरेखां चित्रगतां तन्नामविद्याधरीप्रतिकृतिं स्पृष्ट्वा करेणावमृश्य, स्पर्शं कृत्वा इत्यर्थः, तथा दूतिका काचित् दूती च, आत्मानं बद्ध्वा रज्जुसंयतं कृत्वा, साधुः कश्चित् परिव्राजकस्य, मणिं पुत्तलिकायां रत्नं, आदित्सुः आदातुमिच्छुः, गृहीष्यन्नित्यर्थः, इमे एते वयः, स्वदोषात् आत्मकृतापराधात्, दुःखिताः विषादमापन्नाः, सन्ति इति शेषः।

(ण) धर्माधिकारिणा—धर्माधिकरणे नियुक्तेन, विचारकेण इत्यर्थः।

(त) वध्यभूमिं—वधसाधनस्थानम्।

(थ) परिव्राजकेन—सन्न्यासिना। साधुद्वितीयेन,—साधुः वणिक्, द्वितीयः सहायः यस्य सः तेन वणिक्सहायेन इत्यर्थः। वध्यः,—वधार्हः [अर्हार्थे यत्]। वस्त्राञ्चले—वसनप्रान्ते। [अवच्छेदे सप्तमी]।

(द) केलिकाननावस्थितेन—क्रीडोद्यानवर्त्तिना।

(ध) पोतवणिङ्मुखात् श्रुतं यत्, 'अत्र समुद्रमध्ये चतुर्दश्याम् (न) आविर्भूतकल्पतरुतले (प) मणिकिरणावलीकर्बुरपर्य्यङ्के स्थिता सर्वालङ्कारभूषिता लक्ष्मीरिव वीणां वादयन्ती कन्या काचिद् दृश्यते' इति। ततोऽहं तं पोतवणिजमादाय (फ) पोतमारुह्य तत्र गतः। अनन्तरं तत्र गत्वा मया तथैव सा अवलोकिता। ततः (ब) तल्लावण्यगुणाऽऽकृष्टेन तत्पश्चा-दहमपि झम्पो दत्तः। तदनन्तरं (भ) कनकपत्तनं प्राप्य सुवर्णप्रासादे तथैव सा पर्य्यङ्कस्था विद्याधरीभिः (म) अभिनव-यौवनाभिः उपास्यमाना मया अवलोकिता। तयाऽपि अहं दूरादेव दृष्ट्वा सखीं प्रस्थाप्य सादरं सम्भाषितः। ततस्तत्सख्या च मया पृष्टया (य) समाख्यातम्—"एषा कन्दर्पकेलिनाम्नो (र) विद्याधरचक्रवर्त्तिनः पुत्री रत्नमञ्जरी नाम। अनया

(ध) पोतवणिङ्मुखात्—सांयात्रिकवचनात्, अर्णवयानारोहणेन वाणिज्यार्थं द्वीपान्तरविचरणकारिणां सकाशात् इत्यर्थः। ("सांयात्रिकः पोतवणिक्" इत्यमरः)।

(न) आविर्भूतकल्पतरुतले—प्रकाशितकल्पवृक्षनिम्ने।

(प) मणिकिरणावलीकर्बुरपर्य्यङ्के—मणीनां पर्य्यङ्कनिबद्धरत्नानां, किरणावल्या प्रभापटलेन, कर्बुरः विचित्रः, पर्य्यङ्कः खट्वा तस्मिन्।

(फ) पोतं—वहित्रं, वृहदाकारजलयानमित्यर्थः।

(ब) तल्लावण्यगुणाकृष्टेन—तस्याः कन्यायाः, लावण्यं सौन्दर्य्यम् एव, गुणः रज्जुः, रज्जुस्वरूप इत्यर्थः, तेन आकृष्टः तेन, तत्सौन्दर्य्यविमोहितचित्तेन इत्यर्थः। झम्पः,—लम्फनम्।

(भ) कनकपत्तनं—सुवर्णमयीं पुरीम्। सुवर्णप्रासादे—सुवर्णनिर्मित-सौधे।

(म) अभिनवयौवनाभिः,—अचिरोद्गतयौवनाभिः, तरुणीभिरित्यर्थः। उपास्य-माना—सेव्यमाना।

(य) समाख्यातम्—अभिहितम्।

(र) विद्याधरचक्रवर्त्तिनः,—विद्याधरः देवयोनिविशेषः, तेषु चक्रवर्त्ती सार्वभौमः तस्य, विद्याधरजातीयराजमण्डलानां श्रेष्ठ इत्यर्थः।

प्रतिज्ञातम्,—'यः कनकपत्तनं स्वचक्षुषाऽऽगत्य पश्यति, स मां परिणेष्यति' इति। तदिमां (ल) गन्धर्वविधानेन परि भवान्।" अथ (व) वृत्ते गन्धर्वविवाहे तत्र तया सह रममाणश्चिरं तिष्ठामि। ततः एकदा रहसि तया उक्त 'स्वामिन्! स्वेच्छया सर्वमिदमुपभोक्तव्यम्; किन्तु चित्रगता स्वर्णरेखा नाम विद्याधरी न कदाचित् स्पृष्ट ततः पश्चात् (श) उपजातकौतुकेन सा स्वर्णरेखा हस्तेन स्पृष्टा। तया च चित्रगतयाऽपि अहं तथा ज्ञात्वा चरण (ष) आहतः यथा आगत्य स्वराष्ट्रे पतितः। अतो दुःखार्त्तो प्रव्रजितः पृथिवीं परिभ्रमन् इमां नगरीमनुप्राप्तः। अत्र अतिक्रान्ते दिवसे गोपगृहे (स) सुप्तः सन् अपश्य (ह) प्रदोषसमये स गोपो (क्ष) गोष्ठादागतः स्ववधूं दूत्या मन्त्रयन्तीमपश्यत्। ततस्तां गोपीं ताड़यित्वा स्तम्भे बद्धा ततोऽर्द्धरात्रे (ख) अस्य नापितस्य वधूर्दूती पुनस्तां गोपीं अवदत्,—'तव वियोगानलदग्धोऽसौ स्मरशरजर्ज मुमूर्षुरिव वर्त्तते। तथा चोक्तम्,—

---

(ल) गन्धर्वविधानेन—"इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वर गान्धर्वः स तु विज्ञेयः" इत्युक्तलक्षणकेन वरकन्ययोः परस्परमनुरक्तयोः विनिमयरूपविवाहविधिना इत्यर्थः।

(व) वृत्ते—निष्पन्ने।

(श) उपजातकौतुकेन—उपजातं कौतुकं कुतूहलं यस्य तेन, आक्रान्तेन।

(ष) आहतः,—ताड़ितः। स्वराष्ट्रे—निजराज्ये।

(स) सुप्तः,—शयितः। ("स्वापः शयननिद्रयोः" इति मेदिनी)।

(ह) प्रदोषसमये—रजनीमुखे, सायंकाले इत्यर्थः।

(क्ष) गोष्ठात्—गोचारणस्थानात्।

(ख) अस्य नापितस्य—भवद्भिर्बधाय नीयमानस्य क्षुरिणः इत्यर्थः।

रजनीचरनाथेन खण्डिते तिमिरे निशि।
यूनां मनांसि विव्याध दृष्ट्वा दृष्ट्वा मनोभवः॥ ११२॥

तस्य तादृशीमवस्थामवलोक्य परिक्लिष्टमनाः त्वाम् (ग) अनुवर्त्तितुमागता। तदहमात्मानमत्र बद्ध्वा तिष्ठामि, त्वं तत्र गत्वा तं सन्तोष्य सत्वरमागच्छ।' तथाऽनुष्ठिते सति स गोपः प्रबुद्धोऽवदत्,—'इदानीं (घ) जारान्तिकं कथं न यासि?'। ततो यदा सा दूती न किञ्चित् ब्रूते, तदा क्रुद्धो गोपः,—दर्पात् मम वचनस्योत्तरमपि न ददासि?' इत्युक्त्वा (ङ) कर्त्तरिकामादाय तस्यास्तेन नासिका छिन्ना। तथा कृत्वा पुनः सुप्तो गोपो निद्रामुपगतः। अथाऽऽगत्य सा गोपी दूतीमपृच्छत्,—'का (च) वार्त्ता?'। दूती उवाच,—'पश्य, मम मुखमेव वार्त्तां कथयति।' अनन्तरं सा गोपी तथैव आत्मानं बद्ध्वाऽवस्थिता। इयञ्च दूती तां छिन्ननासिकां गृहीत्वा निजगृहं प्रविश्य स्थिता। ततः प्रभाते अनेन नापितेन स्ववधूः क्षुरभाण्डं याचिता सती सा अस्मै क्षुरभाण्डमदत्त्वा क्षुरमेकं प्रादात्। ततः असमग्रभाण्डे प्राप्ते समुपजातकोपोऽयं नापितः तं क्षुरं दूरादेव गृहे प्रक्षिप्तवान्। अथ (छ) कृताऽऽर्त्तनादेयं,—

(११२) रजनीति।—निशि रात्रौ, रजनीचरनाथेन रजनीचराणां निशाविहारिणां, नाथेन प्रियेणेत्यर्थः, चन्द्रेण, तिमिरे तमसि, खण्डिते विनाशिते सति, मनोभवः कामः, यूनां तरुणानां, मनांसि चेतांसि, दृष्ट्वा दृष्ट्वा तेनैवालोकेन पुनः पुनरवलोक्य, विव्याध विद्धवानिवेति योजना।

(ग) अनुवर्त्तितुम्—अनुसर्त्तुम्, अनुवर्त्तयितुमित्यर्थः। [अन्तर्भूतण्यर्थः]। अनुनेतुमित्यर्थो वा। अनुरोधं कर्त्तुमित्यर्थो वा। ("अनुरोधोऽनुवर्त्तनम्" इत्यमरः)।

(घ) जारान्तिकम्—उपपतिसमीपम्।

(ङ) कर्त्तरिकां—"काटारी" इति ख्यातमस्त्रविशेषम्।

(च) वार्त्ता—वृत्तान्तः, समाचारः इत्यर्थः।

(छ) कृतार्त्तनादा—कृतः आर्त्तनादः कातरध्वनिः यया सा, उच्चैः क्रन्दन्ती इत्यर्थः।

'विनाऽपराधेनानेन मम नासिका छिन्ना' इत्युक्त्वा धर्माधि- समीपमेनमानीतवती।

सा च गोपी तेन गोपेन पुनः पृष्टोवाच,—'अरे पापा- को मां (ज) महासतीं (झ) विरूपयितुं समर्थः ? मम व्यवहारम् (ञ) अकल्मषमष्टौ लोकपाला एव जानन्ति। यतः,

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥ ११४॥

यद्यहं परमसती स्यां, त्वां विहाय अन्यं न पुरुषान्तरं स्वप्नेऽपि न हि भजे, तेन धर्मेण छिन्नाऽपि नासिका (ट) अच्छिन्नाऽस्तु। मया त्वं भस्म कर्त्तुं शक्यः

(ज) महासतीं—महापतिव्रताम्।

(झ) विरूपयितुं—विकृतां कर्त्तुम्। ("निरूपयितुम्" इति पाठे- मम माहात्म्यं परिज्ञातुमित्यर्थः)।

(ञ) अकल्मषं—निष्पापम्।

(११४) लोकपालानां लोकव्यवहारज्ञत्वोक्तिं समर्थयितुं महाभा- पर्वीयदुष्मन्तोपाख्यानोक्तं श्लोकं प्रमाणयति, आदित्येति।—आदित्यचन्द्रौ सूर्य- अनिलः वायुः, अनलः वह्निश्च, द्यौः आकाशं, भूमिः पृथिवी, आपः जलं, चित्तं, यमः अन्तकश्च, अहः दिनञ्च, रात्रिश्च निशा च, उभे सन्ध्ये सायंप्रातः- धर्मश्च सुकृतञ्च आत्मा वा, ("धर्म्म आत्मा" इति वाचस्पत्यम्) नरस्य वृत्तं चरितं, जानाति वेत्ति। श्लोकोऽयं वीरमित्रोदये व्यवहाराध्याये दि- मन्त्ररूपेण लिखितोऽस्ति। तत्रास्य एवं कल्पो निर्दिष्टः,—यदर्थमभियुक्तः मन्त्रेणानेन सह पत्रे लिखित्वा अभियुक्तस्य शिरसि संस्थाप्य प्राड्विवाकः कारयेत्। तथाच—"यमर्थमभियुक्तः स्यात्लिखित्वा तन्तु पत्रके। मन्त्रेणानेन- युक्तं कार्य्यञ्च शिरोगतम् ॥ मन्त्रश्च—आदित्यचन्द्रौ" इत्यादि। उपजातिः वृत्तम्।

(ट) अच्छिन्ना—अखण्डिता, यथावत् संस्थितेत्यर्थः, छिन्ना नासिका पुनः इति यावत्।

किन्तु स्वामी त्वं, लोकभयादुपेक्षे त्वाम्। पश्य मन्मुखम्'। ततो यावदसौ गोपः प्रदीपमानीय तस्याः मुखं पश्यति, तावदक्षतं मुखमवलोक्य तच्चरणयोः पतितः,—'धन्योऽहं, यस्येदृशी भार्य्या परमसाध्वी' इत्युवाच।

योऽयमास्ते साधुरेतद्वृत्तान्तमपि शृणुत,—अयं स्वगृहान्निःसृतो (ठ) द्वादशभिर्वर्षैर्मलयोपकण्ठादिमां नगरीमागतः। अत्र च वेश्यागृहे सुप्तः। ततः कुट्टन्या गृहद्वारि स्थापितस्य (ड) काष्ठघटितवेतालस्य मूर्ध्नि रत्नमेकमुत्कृष्टमास्ते। तद्दृष्ट्वाऽर्थलुब्धेनानेन साधुना रात्रावुत्थाय (ढ) तत्र हस्तो दत्तः। तदैव तेन वेतालेन (ण) सूत्रसञ्चारितेन बाहुभ्यां पीड़ितः सन् आर्त्तनादं चकार। पश्चादुत्थाय कुट्टन्योक्तम्,—'पुत्र! (त) मलयोपकण्ठादागतोऽसि, तत् सर्व्वरत्नानि प्रयच्छास्मै, नो चेदनेन न त्यक्तव्योऽसि, (थ) इत्थमेवायं चेटकः'। ततोऽनेन सर्वरत्नानि समर्पितानि। अधुना चायमपि (द) हृतसर्वस्वोऽस्मासु मिलितः"।

एतत् सर्वं श्रुत्वा राजपुरुषैः (ध) न्यायः (न) प्रवर्त्तितः।

(ठ) द्वादशभिर्वर्षैः,—द्वादशवर्षकालेन, द्वादशवर्षान् व्याप्य परिभ्रम्येत्यर्थः।

(ड) काष्ठघटितवेतालस्य—काष्ठनिर्मितद्वारपालमूर्त्तेः, मल्लविशेषमूर्त्तेर्वा।

(ढ) तत्र हस्तो दत्तः,—रत्नग्रहणार्थं वेतालमस्तके हस्तः प्रसारितः।

(ण) सूत्रसञ्चारितेन—रज्जुचालितेन।

(त) मलयोपकण्ठात्—मलयपर्व्वतसमीपवर्त्तिनः प्रदेशात्।

(थ) इत्थमेवायम्—एवम्प्रकारनियमवानयम्। चेटकः,—दासः।

(द) हृतसर्वस्वः,—हृतं नष्टं, सर्वस्वं सर्वधनं यस्य सः, च्यावितसर्वधनः।

(ध) न्यायः,—उचितः, युक्तियुक्तविचारः इति यावत्।

(न) प्रवर्त्तितः,—कृतः, अनुष्ठित इत्यर्थः। ("राजपुरुषैर्न्याये धर्म्माधिकारी प्रवर्त्तितः" इति पाठे—राजपुरुषैः रक्षिवर्गैः, धर्म्माधिकारी विचारकः, न्याये उचितविचारे, प्रवर्त्तितः चोदितः, राजपुरुषा विचारकैः न्यायविचारं कारितवन्त इत्यर्थः)।

अनन्तरं (प) तेन नापितवधूर्मुण्डिता, गोपी शासिता, कुट्टनी दण्डिता, साधोर्धनानि च प्रदत्तानि। अतोऽहं ब्रवीमि,—"स्वर्णरेखामहं स्पृष्ट्वा" इत्यादि।

[ इति राज-राजपुरुष-परिव्राजक-साधु-गोप-गोपवधू-नापित-नापितवधूकथा ]

यतः स्वयं कृतोऽयं दोषः, अत्र विलपनमनुचितम्।" क्षणं विमृश्य आह,—"मित्र! (फ) सहसैव यथा अनयोः सौहार्दं मया कारितं तथा भेदोऽपि कार्य्यः। यतः,—

अतथ्यान्यपि तथ्यानि दर्शयन्ति हि पेशलाः।
समे निम्नोन्नतानीव चित्रकर्मविदो जनाः॥ ११५॥

अपरञ्च,—उत्पन्नेष्वपि कार्य्येषु मतिर्यस्य न हीयते।
स निस्तरति दुर्गाणि गोपी जारद्वयं यथा" ॥११६॥

करटकः पृच्छति,—"कथमेतत्?"। दमनकः कथयति,—

---

(प) तेन—धर्म्माधिकारिणा। मुण्डिता—केशशून्यीकृता, तस्याः केशानां केशवपनं वा कारितम् इत्यर्थः।

(फ) सहसा—हठात्, परिणाममविविच्यैवेत्यर्थः।

(११५) नासाध्यं हि नीतिकुशलानामिति वक्तुमाह, अतथ्यानीति।—चित्रकर्मविदः आलेख्यकार्य्यनिपुणाः, जनाः लोकाः, समे समतले स्थाने, समतलप्रदेशे इत्यर्थः, निम्नोन्नतानि गभीरोच्चानि इव, पेशलाः चतुराः, नीतिकुशला इत्यर्थः, अतथ्यानि असत्यानि अपि, तथ्यानि सत्यानि, दर्शयन्ति बोधयितुं शक्नुवन्ति इत्यर्थः। दक्षचित्रकरो यथा अङ्कननैपुण्येन समतलेऽपि पटे सुगभीरनदीनद्यादिसन्निवेशं सुगभीरमिव कृत्वा उत्तुङ्गपर्वतादियुक्तप्रदेशञ्च उन्नतमिवाङ्कयित्वा प्रदर्शयति, तथा नीतिकुशलः स्वबुद्धिप्रभावेण असत्यं सत्यं सत्यञ्चाप्यसत्यं कृत्वा दर्शयितुं समर्थः इति सरलार्थः।

(११६) उत्पन्नेष्विति।—यस्य जनस्य, मतिः बुद्धिः, कार्य्येषु कर्म्मसु, विपद्बहुलकर्म्मसु इति यावत्, उत्पन्नेषु उपस्थितेषु अपि, विपद्बहुले कार्य्ये उपस्थिते सत्यपि न हीयते न हीना भवति, न विचलति इत्यर्थः, सः जनः, गोपी काचित् गोपपत्नी जारद्वयम् उपपतिद्वयं, यथा यद्वत्, निस्तारेति शेषः, तथा दुर्गाणि दुःखावस्थाश्रयाणीत्यर्थः, दारुणानि दशान्तराणि इति यावत्, निस्तरति साधयति

गोपी-तज्जारद्वयकथा ।—

"अस्ति द्वारवत्यां पुर्य्यां कस्यचिद्गोपस्य वधूः (व) बन्धकी । सा ग्रामस्य (भ) दण्डनायकेन तत्पुत्रेण च सह (म) रमते । तथा चोक्तम्,—

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ ११७ ॥

अन्यच्च,—न दानेन न मानेन नाऽऽर्जवेन न सेवया ।
न शस्त्रेण न शास्त्रेण विषमाः सर्वथा स्त्रियः ॥११८॥

---

महासङ्कटम् अपि उत्तीर्य्य स्वकार्य्यं सम्पादयतीति सरलार्थः, न हि किमपि असाध्यं मतिमतामिति भावः ।

(व) बन्धकी—कुलटा, व्यभिचारिणी इत्यर्थः ।

(भ) दण्डनायकेन—ग्रामरक्षकप्रधानेन सैन्याध्यक्षेण वा ।

(म) रमते—क्रीड़ति, सम्भोगसुखमनुभवति इत्यर्थः ।

(११७) बहुनायकसंसर्गेऽपि असतीनां तृप्त्यभावं प्रमाणयितुं महाभारतीयोद्योगानुशासनपर्वद्वयोक्तमुपस्थापयति, नाग्निरिति ।—अग्निः अनलः, काष्ठानां दारूणां, बहुभिः इन्धनैरपीत्यर्थः, न तृप्यति न प्रीणाति, काष्ठं सन्दह्य प्रशमं न लभते प्रत्युत प्रबलो भवतीति भावः; महोदधिः समुद्रः, आपगानाम् अपां समूहः आपः जलसमूहः, तेन गच्छन्ति इति आपगाः तासां नदीनां, न, तृप्यति, बह्वीभिरप्यापगाभिः न उच्छ्वसिति सर्वा एव ग्रसतीति भावः; अन्तकः यमः, सर्वभूतानां सर्वप्राणिनां, सर्वैरपि भूतैरित्यर्थः, न तृप्यति न प्रीणाति, सर्वाण्येव भूतानि मारयित्वाऽपि तस्य मारणस्पृहा न प्रशमिता भवति इति भावः; वामलोचना वामे सुन्दरे, लोचने नयने यस्याः सा कामिनी, पुंसां पुरुषैरित्यर्थः, बहुपुरुषसम्भोगेऽपीति भावः, न, तृप्यति नित्यं नवं नवं पुरुषं कामयन्ते इति भावः। [ सर्वत्र "तृप्त्यर्थानां वा करणे" इति नियमात् करणे षष्ठी। क्रियासम्बन्धे षष्ठीति परनामः। शेषे षष्ठीति पाणिनिः ]।

(११८) न दानेनेति ।—दानेन बहुधनप्रदानेन, स्त्रियः असत्यः इति यावत्, न, तृप्यन्तीति शेषः, एवं सर्वत्र; न वशीभूता भवन्तीति भावः, मानेन सम्मानेन, सम्मानप्रदर्शनेनेत्यर्थः, न, आर्जवेन सरलव्यवहारेण, प्रियसम्भाषणादिनेति

यत:,—गुणाश्रयं कीर्त्तियुतञ्च कान्तं
पतिं रतिज्ञं सधनं युवानम्।
विहाय शीघ्रं वनिता व्रजन्ति
नरं परं शीलगुणादिहीनम् ॥ ११९ ॥

अपरञ्च,—न तादृशीं प्रीतिमुपैति नारी
विचित्रशय्यां शयिताऽपि कामम्।
यथा हि दूर्वादिविकीर्णभूमौ
प्रयाति सौख्यं परकान्तसङ्गात् ॥ १२० ॥

अथ सा कदाचित् दण्डनायकसुतेन सह रममाणा तिष्ठति। अत्रान्तरे दण्डनायकोऽपि रन्तुं तत्रागतः। तम् आयान्तं दृ… तत्पुत्रं (य) कुशूले धृत्वा दण्डनायकेन (र)समं तथैव क्रीड़…

---

यावत्, न, सेवया आनुगत्येन, शुश्रूषादिनेत्यर्थः, न, शस्त्रेण प्रहरणभीतिप्रदर्श… न, शास्त्रेण नीतिशास्त्रोपदर्शनेन, विद्याशिक्षया वा न, तुष्यन्ति, अतः स्त्रियः … सर्वथा सर्वतोभावेन, विषमाः दुराराधनीयाः इत्यर्थः।

(११९) गुणेति।—वनिता नार्यः, गुणानाम् आश्रयं सर्वगुणा… कीर्त्तियुतं यशस्विनं, कान्तं सुश्रीकं, रतिज्ञं रतिपण्डितं, सधनं धनवन्तं, यु… तरुणम् अपि, पतिं भर्त्तारं, विहाय त्यक्त्वा, शीघ्रं सहसा, दर्शनक्षणमेव … शीलगुणादिहीनं दुश्चरित्रं निर्गुणं निर्धनं कुत्सितञ्च, परं परतरं, नरं … जारमित्यर्थः, व्रजन्ति गच्छन्ति; "स्त्रियाश्चरित्रं पुरुषस्य भाग्यं देवा न … कुतो मनुष्याः?" इति भावः। उपेन्द्रवज्रा वृत्तम्।

(१२०) नेति।—नारी रमणी, दूर्वादिविकीर्णभूमौ तृणादिव्याप्त… अरण्यमध्ये इत्यर्थः, परकान्तसङ्गात् उपपतिसम्भोगेन, यथा सौख्यम् आनन्दं, … प्राप्नोति, विचित्रशय्यां गृहे मनोहरशयने, कामं यथेष्टं, स्वच्छन्दमित्यर्थः, … [अन्तर्भूतण्यर्थात् शीङः क्तः] पत्या सहेति शेषः, तादृशीं पूर्वोक्तप्रकारां, … सुखं, न हि उपैति नैव लभते; स्त्रियाश्चरितं दुर्बोधमिति भावः। उपेन्द्रवज्रा …

(य) कुशूले—धान्यादिरक्षार्थं निर्मिते पात्रविशेषे, "गोला" "… इति प्रसिद्धे। धृत्वा—स्थापयित्वा, गोपयित्वा इत्यर्थः।

(र) समं—सह।

वती। अनन्तरं तस्या भर्त्ता गोपो गोष्ठात् समागतः। तमालोक्य गोप्योक्तम्,—"दण्डनायक! त्वं लगुड़ं गृहीत्वा कोपं दर्शयन् सत्वरं याहि"। तथा (ल) अनुष्ठिते सति स गोपस्तत्रागत्य भार्य्यां पृष्टवान्,—"केन कारणेन दण्डनायकः समागतोऽत्र?"। सा ब्रूते,—"अयं केनापि कारणेन पुत्रस्योपरि क्रुद्धः। स च पलायमानोऽत्राऽऽगत्य प्रविष्टः, मया कुशूले निक्षिप्य रक्षितश्च। तत्पित्रा च (व) अन्विष्यता अत्र गृहे न दृष्टः, अतोऽयं कुपित एव गच्छति"। ततः सा तत्पुत्रं कुशूलात् (श) अवतार्य्य दर्शितवती। तथा च उक्तम्,—

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥१२१॥

अतोऽहं ब्रवीमि,—"उत्पन्नेष्वपि कार्य्येषु" इत्यादि।

[ इति गोपी-तज्जारद्वयकथा ]।

करटको ब्रूते,—"अस्त्वेवं, किन्त्वनयोर्महान् (ष) नैसर्गिकः स्नेहः कथं भेदयितुं शक्यः?"। दमनक आह,—(स) "उपायश्चिन्तनीयः। तथा च उक्तम्,—

---

(ल) अनुष्ठिते—आचरिते, दण्डनायकेनेति शेषः।

(व) अन्विष्यता—इतस्ततो निरूपयता, अनुसन्दधता इत्यर्थः।

(श) अवतार्य्य—अवरोप्य, वहिष्कृत्येत्यर्थः।

(१२१) लघुचाणक्योक्तं पुरुषापेक्षया नारीणां विशेषत्वं दर्शयति, आहार इति।—स्त्रीणाम् आहारः भोजनं, द्विगुणः द्विरावृत्तः, तासां स्त्रीणां, बुद्धिः प्रज्ञा, चतुर्गुणा, व्यवसायः उद्यमश्च, कार्य्यसाधनचेष्टा च इत्यर्थः, चातुर्य्यमिति यावत्, षड्गुणः, कामः रतीच्छा च, भोगवासना वा, अष्टगुणः स्मृतः कथितः, सर्व्वत्र पुरुषापेक्षया इति शेषः। (वृद्धचाणक्ये तु—"स्त्रीणां द्विगुण आहारो लज्जा चापि चतुर्गुणा। साहसं षड्गुणञ्चैव कामश्चाष्टगुणः स्मृतः॥" इति पाठान्तरम्)।

(ष) नैसर्गिकः,—स्वाभाविकः। भेदयितुं—विघटयितुम्।

(स) उपायः,—साधनं, कार्य्यसाधनार्थकौशलम् इत्यर्थः।

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः।
काकः कनकसूत्रेण कृष्णसर्पमघातयत् ॥१२२॥

करटकः पृच्छति,—"कथमेतत् ?"। दमनकः कथयति,—

काकदम्पती-कृष्णसर्प-कनकसूत्रकथा।—

"कस्मिंश्चित् तरौ (ङ) वायसदम्पती निवसतः। तयोः (क) अपत्यानि तरुकोटरावस्थितकृष्णसर्पेण खादितानि। ततः पुनर्गर्भवती वायसी ब्रूते,—"स्वामिन्! त्यज्यतामयं तरुः। अत्र यावत् (ख) कृष्णसर्पस्तावदावयोः (ग) सन्ततिः कदाचिदपि न (घ) भविष्यति। यतः,—

दुष्टा भार्य्या शठं मित्रं भृत्यश्चोत्तरदायकः।
ससर्पे च गृहे वासो मृत्युरेव न संशयः" ॥ १२३॥

(१२२) पराक्रमात् बुद्धेः प्राधान्यं दर्शयति, उपायेनेति।—यत् कार्य्यम्, उपायेन कौशलविशेषेण इत्यर्थः, शक्यं साध्यं, तत् पराक्रमैः शौर्य्यैः, विक्रमप्रदर्शनेन इत्यर्थः, हि नैव, शक्यं साधयितुं पार्य्यम्। तत् दृष्टान्तेन दर्शयति, काक इति।—काकः वायसः, कनकसूत्रेण सुवर्णसूत्रेण, स्वर्णमयसूत्ररूपेण उपायेन इत्यर्थः, कृष्णसर्पं तीव्रविषं सर्पं, स्वावासतरुकोटरस्थम् अत एवातिभीषणमिति भावः; अघातयत् विनाशयामास।

(ङ) वायसदम्पती—काकमिथुनम्। [जाया च पतिश्चेति द्वन्द्वे "जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते" इति दीक्षिताः। पक्षे जायापती। नित्यद्विवचनान्तोऽयम्]।

(क) अपत्यानि—शावकाः। तरुकोटरावस्थितकृष्णसर्पेण—तरोः वृक्षस्य कोटरं रन्ध्रं, तस्मिन् अवस्थितः कृतावस्थानः, कृष्णसर्पः तेन, तरुविवरवर्त्तिना कालसर्पेण।

(ख) कृष्णसर्पः, तिष्ठतीति शेषः।

(ग) सन्ततिः,—वंशः, पुत्रपौत्रादिः इत्यर्थः। ("सन्ततिः स्यात्पङ्क्तौ गोत्रे पारम्पर्य्ये च पुत्रयोः" इति मेदिनी)।

(घ) भविष्यति—स्थास्यति, जीविष्यति इत्यभिप्रायः।

(१२३) ससर्पगृहवासस्य अकर्त्तव्यत्वे चाणक्योपदेशं प्रदर्शयति, दुष्टेति।—भार्य्या स्त्री, दुष्टा व्यभिचारिणी, तथा मित्रं सुहृत्, शठं वञ्चकं, भृत्यः अनुजीवी

वायसी ब्रूते,—"प्रिये ! न भेतव्यम् । वारं वारं मयैतस्य (ङ) महाऽपराधः (च) सोढ़ः, इदानीं पुनर्न क्षन्तव्यः ।" वायस्याह,—"कथमनेन बलवता कृष्णसर्पेण सार्द्धं भवान् (छ) विग्रहीतुं समर्थः ?" । वायसो ब्रूते,—"अलमनया चिन्तया ? यतः,—

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् ? ।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः" ॥१२४॥

वायस्याह,—"कथमेतत् ?" । वायसः कथयति,—

सिंह-शशककथा ।—

"अस्ति मन्दरनाम्नि पर्वते दुर्दान्तो नाम सिंहः । स च सर्वदा पशूनां वधं (ज) विदधान एवास्ते । ततः सर्वैः पशुभिः (झ) मेलकं कृत्वा स सिंहो विज्ञप्तः,—"देव ! किमर्थं

---

उत्तरदायकः तुल्यभावेन प्रत्युत्तरप्रदायी, ससर्पे सर्पयुक्ते, गृहे भवने, वासः अवस्थितिः च, भवेच्चेदिति शेषः, तदा मृत्युरेव तत् एतत् सर्वं मरणकारणमेवेत्यर्थः, संशयः अत्र सन्देहः, न, अस्तीति शेषः ; एषां परिग्रहे मरणमवश्यम्भावीति भावः ।

(ङ) महाऽपराधः,—शावकविनाशरूपः महान् दोषः ।

(च) सोढ़ः,—मर्षितः । [ सह+क्तः ] ।

(छ) विग्रहीतुं—योद्धुं, विरोधं कर्त्तुमित्यर्थः ।

(१२४) चाणक्यवचनं प्रमाणीकृत्य बलाद्बुद्धेराधिक्यं दर्शयति, बुद्धिरिति ।—यस्य जनस्य, बुद्धिः प्रज्ञा, अस्तीति शेषः, तस्य बलं वीर्यं, विद्यते इति शेषः, स एव बलवानित्यर्थः, निर्बुद्धेः बुद्धिहीनस्य तु, बलं कुतः ? न कुत्रापीत्यर्थः ; बलसत्त्वेऽपि दुर्बलवत् सर्व्वत्र पराभूतो भवतीति भावः ; तथाहि, मदोन्मत्तः मदगर्वितः, बलवान् विक्रमाभिमानी चेति भावः, सिंहः पशुराजः, शशकेन क्षुद्रेण मृगविशेषेण, अतिदुर्बलेनापीति भावः ; निपातितः विनाशितः, बुद्धिप्रभावेणेति शेषः, पश्य एतत् वक्ष्यमाणदृष्टान्तेन जानीहि ; मतिरेव बलाद्गरीयसीति भावः ।

(ज) विदधानः,—कुर्वाणः । [ वि+धा+शानच् ] ।

(झ) मेलकं कृत्वा—समेत्य, एकचित्तीभूय इत्यर्थः । विज्ञप्तः,—निवेदितः ।

(ञ) सर्वपशुबधः क्रियते ? यदि (ट) प्रसादो भवति, तदा वयमेव भवदाहारार्थं प्रत्यहमेकैकं पशुम् (ठ) उपढौकयामः"। सिंहेनोक्तम्,—"यद्येतत् (ड) अभिमतं भवतां, तर्हि भवतु तत्"। (ढ) ततः प्रभृति प्रत्यहमेकैकं पशुम् (ण) उपकल्पितं भक्षयन्नास्ते। अथ कदाचित् कस्यापि वृद्धशशकस्य (त) वारः प्राप्तः। ततः सोऽचिन्तयत्,—

"त्रासहेतोर्विनीतिस्तु क्रियते जीविताशया।
पञ्चत्वं चेद्गमिष्यामि किं सिंहानुनयेन मे ? ॥१२५॥

तत् मन्दं मन्दमुपगच्छामि।" ततः सिंहोऽपि (थ) क्षुधापीड़ितः कोपात् तमुवाच,—"कुतस्त्वं विलम्बादागतोऽसि ?"।

---

(ञ) सर्व्वपशुवधः,—युगपत् सर्व्वपशुनाशः।

(ट) प्रसादः,—अनुग्रहः।

(ठ) उपढौकयामः,—उपहारत्वेन प्रेरयामः।

(ड) अभिमतम्—अभीष्टम्।

(ढ) ततः प्रभृति—तस्मात् दिनादारभ्य। ["कार्त्तिक्याः प्रभृति" इति भाष्य-प्रयोगात् प्रभृतियोगे पञ्चमी]।

(ण) उपकल्पितम्—उपायनीकृतं, प्रेरितमित्यर्थः।

(त) वारः,—पर्य्यायनियमः (पाला इति भाषा)। प्राप्तः,—उपस्थितः

(१२५) मुमूर्षोः कुतो भयम् इत्याह, त्रासेति।—जीविताशया जीवनतृष्णया, जीवनरक्षार्थमित्यर्थः, त्रासहेतोः भयकारणस्य, जिघांसोः समीपे इति शेषः, विनीतिः विनयः, क्रियते प्रदर्श्यते इत्यर्थः, लोकैरिति शेषः, चेत् यदि, पञ्चत्वं, गमिष्यामि प्राप्स्यामि, मरिष्यामि इत्यर्थः, अहमिति शेषः, तर्हि मे मम सिंहानुनयेन सिंहसमीपे विनयप्रकाशनेन, किम् ? किं फलम् ? न किमपीत्यर्थः, मरणे नियते सिंहसन्निधौ विनयप्रदर्शनस्य नास्ति किमप्यावश्यकतेति भावः।

(थ) क्षुधापीड़ितः,—क्षुधया बुभुक्षया, पीड़ितः कातरः, अतीव क्षुधार्त इत्यर्थः।

शशकोऽब्रवीत्,—"देव ! नाहम् (द) अपराद्धः ; आगच्छन् पथि (ध) सिंहान्तरेण बलाद्धृतः। तस्याग्रे पुनरागमनाय (न) शपथं कृत्वा स्वामिनं निवेदयितुमत्रागतोऽस्मि"। सिंहः सकोपमाह,—"सत्वरं गत्वा मां दर्शय क्वासौ (प) दुरात्मा तिष्ठति।" ततः शशकस्तं गृहीत्वा गभीरकूपसमीपमागतः। तत्र आगत्य,—"स्वयमेव पश्यतु स्वामी" इत्युक्त्वा तस्मिन् कूपजले (फ) तस्यैव प्रतिबिम्बं दर्शितवान्। ततोऽसौ (ब) दर्पाऽऽध्मातः तस्योपरि आत्मानं निक्षिप्य पञ्चत्वं गतः। अतोऽहं ब्रवीमि,—"बुद्धिर्यस्य" इत्यादि।

[इति सिंह-शशककथा]।

वायसी ब्रूते,—"श्रुतं मया, सम्प्रति यथा कर्त्तव्यं तद् ब्रूहि।" वायसोऽवदत्,—"प्रिये ! अत्र (भ) आसन्ने सरसि राजपुत्रः सततमागत्य स्नाति, स्नानसमये तदङ्गात् (म) अवतारितं (य) तीर्थशिलानिहितं कनकसूत्रं चञ्च्वा धृत्वा आनीय अस्मिन्

---

(द) अपराद्धः,—कृतापराधः, दोषी इत्यर्थः। [अप+राध+क्तः]।

(ध) सिंहान्तरेण—अन्यः सिंहः सिंहान्तरं तेन, अन्यसिंहेन।

(न) शपथं—दिव्यम्।

(प) दुरात्मा—दुर्वृत्तः, मन्दस्वभावः इत्यर्थः।

(फ) तस्यैव—दुर्दान्तनामसिंहस्यैव। प्रतिबिम्बं—प्रतिकृतिं, कूपजले प्रतिबिम्बितां निजच्छायामिति यावत्।

(ब) दर्पाऽऽध्मातः,—गर्वस्फीतः, अहङ्कारपूर्णः इत्यर्थः। ("क्रोधाध्मातो दर्पात्" इति पाठान्तरम्)। [आ+ध्मा+क्तः]।

(भ) आसन्ने—समीपस्थे।

(म) अवतारितम्—उन्मोचितम्।

(य) तीर्थशिलानिहितं—तीर्थं निपानं, जलावतारः इत्यर्थः, नद्यादौ अवरोहणार्थं सोपानमिति यावत्, ("निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ" इत्यमरः) तीर्थशिला पाषाणमयसोपानमित्यर्थः, तस्यां निहितं स्थापितम्; यद्वा—सोपानपार्श्वस्थविशालप्रस्तरे न्यस्तम्।

कोटरे (र) धारयिष्यसि"। अथ कदाचित् कनकसूत्रं (ल) दृष संस्थाप्य स्नातुं जलं प्रविष्टे राजपुत्रे वायस्या तदनुष्ठितम्। (व) कनकसूत्रानुसरणप्रवृत्तैः राजपुरुषैः तत्र कोट (श) निरूप्यमाणः कृष्णसर्पो व्यापादितः। अतोऽहं ब्रवीमि "उपायेन हि यच्छक्यम्" इत्यादि।

इति काकदम्पती-कृष्णसर्प-कनकसूत्रकथा।

करटक आह,—"यदि एवं तदा गच्छ, (ष) शिवास्ते पन्थानः।" ततो दमनकः पिङ्गलकसमीपं गत्वा प्रण उवाच,—"देव! (स) अत्याहितं मन्यमानो निवेदयितु मागतः। यतः,—

आपद्युन्मार्गगमने कार्य्यकालात्ययेषु च।
कल्याणवचनं ब्रूयादपृष्टोऽपि हितो नरः ॥१२६॥

---

(र) धारयिष्यसि—निधापयिष्यसि, स्थापयिष्यसि इत्यर्थः।

(ल) दृषदि—प्रस्तरे, प्रस्तरसोपाने इत्यर्थः।

(व) कनकसूत्रानुसरणप्रवृत्तैः,—सुवर्णसूत्रान्वेषणार्थम् इतस्ततो विचरद्भिः।

(श) निरूप्यमाणः,—निर्णीयमाणः, दृश्यमानः इत्यर्थः।

(ष) शिवाः,—मङ्गलमयाः, निर्विघ्नाः इत्यर्थः।

(स) अत्याहितम्—अतीव आधीयते स्म मनसि, अतीव आधीः तन्निवारणार्थं मनो दीयते अस्मिन् इति वा अत्याहितं महाभीतिं, विपत्कारणमिदं प्राणहानिशङ्काकरमनर्थमिति यावत् [अति+आ+धा+क्तः। "अत्याहितं म भीति कर्म्म जीवानपेक्षि च" इत्यमरः]।

(१२६) "नापृष्टः कस्यचित् ब्रूयात्" इति निषेधे सत्यपि स्वस्य तदन्यथा समर्थयते, आपदीति।—आपदि विपत्काले उपस्थिते सति, उन्मार्गगमने असदव लम्बने, कार्य्यकालात्ययेषु च कर्त्तव्यकर्मसम्पादनस्य समये अतिवाहिते च सर्वत्र प्रभोरिति शेषः, हितो नरः हितैषी जनः, अपृष्टोऽपि न जिज्ञासितोऽपि कल्याणवचनं हितं वाक्यं, ब्रूयात् वदेत्, प्रभुमिति शेषः, हितमुपदिशेदित्यर्थः, मयैतत् वक्तव्यमेव इति भावः।

अपरञ्च,—भोगस्य भाजनं राजा मन्त्री कार्य्यस्य भाजनम्।
राजकार्य्यपरिध्वंसी मन्त्री दोषेण लिप्यते॥ १२७॥

तथाहि पश्य, अमात्यानामेष (ङ) क्रमः,—

वरं प्राणपरित्यागः शिरसो वाऽपि कर्त्तनम्।
न तु स्वामिपदावाप्तिपातकेच्छोरुपेक्षणम्" ॥१२८॥

पिङ्गलकः सादरं ब्रूते,—"अथ भवान् किं वक्तुमिच्छति ?"। दमनकः आह,—"देव! अयं तावत् सञ्जीवकस्तवोपरि (क) असदृशव्यवहारीव लक्ष्यते। तथा चास्मत्सन्निधाने स्वामिनः (ख) शक्तित्रयनिन्दां कृत्वा राज्यमेवाभिलषति"। एतच्छ्रुत्वा

(१२७) भोगस्येति।—राजा नृपतिः, भोगस्य सुशासितात् राज्यात् लब्धस्य सुखस्य, भाजनं पात्र, राजा सन्मन्त्रिणि कार्य्यभारं निक्षिप्य निरुद्वेगेन भोगं भुञ्जानः कालमतिवाहयेदित्यर्थः, मन्त्री मन्त्रणादायकः सचिवः, कार्य्यस्य यथाविधि राज्यपरिचालनादिव्यापारस्य, भाजनं, मन्त्री एव शासनादिकं निखिलं राजकार्य्यं कुर्य्यात् इत्यर्थः, अतः राजकार्य्यपरिध्वंसी राजकर्म्मणः व्याघातकारी, राज्यशासन-कार्य्यमुपेक्षमाणः इत्यर्थः, मन्त्री सचिवः, दोषेण कर्त्तव्याननुष्ठानजनितेन पापेन, लिप्यते संस्पृश्यते; राज्ञो राज्यस्य च काचित् विपत्तिर्भवेत् चेत् तत्र मन्त्री एव दोषभाक्, अतः अवश्यमेव मया हितं वक्तव्यमिति भावः।

(ङ) क्रमः,—कल्पः, नियम इत्यर्थः।

(१२८) वरमिति।—प्राणपरित्यागः मरणमपि, वरं श्रेयान्, वा अथवा, शिरसः मस्तकस्य, कर्त्तनं छेदनमपि, वरं, प्रभोः हितसाधनार्थं यदि प्राणपरित्यागोऽपि कर्त्तव्यः भवति, शिरोऽपि छिन्नं भवति, तदपि वरं मन्ये इत्यर्थः, तु किन्तु, स्वामिनः प्रभोः, पदस्य राजत्वस्य, अवाप्तिः प्राप्तिः, ग्रहणमित्यर्थः, राज्यलाभेच्छेति भावः, तदेव पातकं पापं, तत् इच्छति कर्त्तुम् आकाङ्क्षति यः तस्य प्रभुराज्यापजिहीर्षोर्विश्वास-घातकस्य, उपेक्षणम् उपेक्षा, तदशासनमित्यर्थः, न, वरमिति शेषः; तादृशो हि सेवकः सर्व्वथा दण्डार्ह एवेति भावः।

(क) असदृशव्यवहारीव—असदृशव्यवहारी अनुचिताचारी, उल्लङ्घितभृत्यधर्म इति यावत्, स इव तद्वत्, स्वामिद्रोहिणो यादृशः आचारः तद्वदाचरणशील इत्यर्थः।

(ख) शक्तित्रयनिन्दां—प्रभावोत्साहमन्त्रजाख्यशक्तेः कुत्सां, शक्तित्रयस्य

पिङ्गलकः सभयं साश्चर्य्यं तूष्णीं स्थितः। दमनकः पुनराह, "देव! (ग) सर्वामात्यपरित्यागं कृत्वा एक एवायं यत् त्वया सकलकार्य्याधिकारे नियुक्तः, स एव महान् दोषः। यतः,

> अत्युच्छ्रिते मन्त्रिणि पार्थिवे च
> विष्टभ्य पादावुपतिष्ठते श्रीः।
> सा स्त्रीस्वभावादसहा भरस्य
> तयोर्द्वयोरेकतरं जहाति ॥ १२९ ॥

न्यूनताद्रूपामित्यर्थः। ("शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः" इत्यमरः। तत्र कोशदण्डजं बलं प्रभुशक्तिः, विक्रमबलमुत्साहशक्तिः, सन्ध्यादीनां सामादीनाञ्च यथावत् मन्त्रशक्तिः, पञ्चाङ्गमन्त्रो मन्त्रशक्तिर्वा इति)।

(ग) सर्वामात्यपरित्यागं कृत्वा—सकलान् मन्त्रिणः अनादृत्य इत्यर्थः।

(१२९) एकस्मिन्नेवामात्ये सर्व्वाधिकारप्रदानस्य दोषमाह, अत्युच्छ्रिते इति। श्रीः राजलक्ष्मीः, अत्युच्छ्रिते अत्यधिकामुन्नतिं लभमाने, अतिप्रबले इत्यर्थः, शक्तिसम्पन्ने इति यावत्, मन्त्रिणि सचिवे, पार्थिवे नृपे च, पादौ चरणौ, विष्टभ्य सन्निधाय, एकैकं चरणमेकैकस्मिन् संस्थाप्य इत्यर्थः, उपतिष्ठते सेवते, मन्त्रिपार्थिवौ द्वावेव आराधयतीत्यर्थः, किमुतचरणम् उभयमेव युगपदाश्रयतीति भावः ["उपाद्देवपूजासङ्गतिकरण—" (वा०) इति पार्थिवस्य देवतात्वात् "उपतिष्ठते" इत्यात्मनेपदम्] सा श्रीः, स्त्रीस्वभावात् स्त्रीजातिसुलभचापल्यात्, स्त्रीणां स्वाभाविकपाटवाद्वा, भरस्य तथाश्रयरूपस्य भारस्य, उभयत्र पादौ संस्थाप्य अवस्थानरूपस्येत्यर्थः, [कृद्योगात् कर्म्मणि षष्ठी] असहा न सहतीति [पचाद्यच्] तादृशं क्लेशभारं सोढुमसमर्था सतीत्यर्थः, तयोर्द्वयोः मन्त्रिपार्थिवयोः, उभयोरेव अत्युच्छ्रितत्वात् परस्परप्रभावमसहिष्णुतया वैमत्यमापन्नयोरिति भावः; एकतरम् उभयोर्मध्ये दुर्बलमिति यावत्, जहाति परित्यजति, प्रबले एव चरणौ सुदृढं सुस्थिरं तिष्ठतीत्यर्थः; दृश्यते च लोके एकस्मिन्नेवाश्रये पादौ संस्थाप्य यथा कोऽपि सुस्थिरं स्थातुं शक्नोति न तथा आश्रयद्वये, तेन हि टलच्चरणतया क्लिश्यति इति। यद्वा—स्त्रीस्वभावात् एकभर्तृग्रहणरूपरमणीजनसुलभप्रकृतेः अतिशयस्य, भर्तृद्वयाश्रयणरूपस्य आतिशय्यस्य इत्यर्थः, ("भरोऽतिशयभारयोः" इति मेदिनी) असहा अक्षमा सती, तयोर्द्वयोः एकतरं जहाति दुर्बलं परि

अपरञ्च,—

एकं भूमिपतिः करोति सचिवं राज्ये प्रधानं यदा
तं मोहाच्छ्रयते मदः स च मदाऽऽलस्येन निर्भिद्यते।
निर्भिन्नस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणान्तिकं द्रुह्यति॥१३०॥

---

बलवन्तमेव भर्त्तारं विदधाति इत्यर्थः; यदुक्तं,—"स्त्रीभिः षण्ढ इव श्रीभिः दुर्बलः परिभूयते" इति। उभयायत्तसिद्धिर्हि राज्ञां दोषाय भवति, अतः अत्युच्छ्रितेन पार्थिवेन भवता एकस्मिन्नेव सचिवे सर्वकर्मभारार्पणात् तस्य अत्युच्छ्रितत्वसम्पादनं कृत्वा न युक्तमाचरितम्; तेन हि तवापि अत्याहितं भवितुमर्हति इति भावः। "श्रीः राजलक्ष्मीः, अत्युच्छ्रिते अत्युन्नते कार्य्यक्षमे च, मन्त्रिणि सचिवे, पार्थिवे च पादौ विष्टभ्य स्थापयित्वा, उपतिष्ठते उच्छ्रयति, उत्थिता भवति, उत्तिष्ठतीत्यर्थः, ऊर्द्धोत्थितौ हि अत्युच्चालम्बनमेव हेतुः, तद्विना ऊर्द्धोत्थानासम्भवादिति भावः" इति पूर्वार्द्धव्याख्यायां तर्कवाचस्पतिपादाः। श्लोकोऽयं मुद्राराक्षसस्य चतुर्थेऽङ्के उभयायत्तसिद्धेर्दोषप्रदर्शनाय सन्निवेशितः कविना। उपजातिः वृत्तम्।

(१३०) एकमिति।—भूमिपतिः राजा, यदा राज्ये राष्ट्रे, एकम् एकमात्रं, मन्त्रिणं सचिवं, प्रधानं सर्व्वकार्य्याधिकारिणं सर्व्वश्रेष्ठञ्च, ("प्रधानम्" इत्यत्र "प्रमाणम्" इति पाठे—प्रमातारं, सर्व्वकार्य्यनिर्णायकम् इत्यर्थः) करोति विदधाति, तदा तं सचिवं, मोहात् अविद्यावशात्, अहं प्रधानमित्यभिमानवशादित्यर्थः, मदः गर्वः, औद्धत्यमिति यावत्, श्रयते आश्रयते, अवलम्बते इत्यर्थः, स मदान्धो भवति इति भावः; स च सचिवः, मदालस्येन को हि मत्तुल्यः गुणवान् शक्तिमांश्चास्मिन् राष्ट्रे, कथं वा अहं भृत्योचितं श्रमसाध्यं कर्म्म करोमि, इत्येवं गर्वोद्भूतेन श्रमवैमुख्येनेत्यर्थः, निर्भिद्यते नितरां भेदमाप्नोति, राजसकाशाद्दूरमवतिष्ठते इत्यर्थः, निर्भिन्नस्य भेदमापन्नस्य, तस्य सचिवस्य, हृदये मनसि, स्वतन्त्रस्पृहा स्वाधीनतालालसा, पदं स्थानं, करोति, स च स्वाधीनो भवितुं यतते इत्यर्थः, ततः तदनन्तरं, स्वातन्त्र्यस्पृहया स्वाधीनतालालसेच्छया, सः सचिवः, नृपतेः राज्ञः, प्राणान्तिकं जीवनपर्य्यन्तं, द्रुह्यति द्वेष्टि, प्रभुं हत्वाऽपि राज्याधिकारं कर्त्तुमिच्छति इत्यर्थः; ["नृपतेः प्राणान्तिकं द्रुह्यति" इत्यत्र "क्रुधद्रुहेर्ष्यासूयार्थानां यः प्रति कोपः" (१।४।३७ पा०) इत्यनेन द्रुहेः प्रयोगे नृपतेः कथं न सम्प्रदानता इति चेत् उच्यते,—अत्र द्रोहे स्वातन्त्र्यस्पृहाया एव कारणत्वेनोपादानात् कोपप्रभवत्वाभावेन न सम्प्रदानत्वमिति]। मन्त्रिषु निर्भरत्वं

तथा चोक्तम्,—विषदिग्धस्य भक्तस्य दन्तस्य चलितस्य च।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥१३१॥

किञ्च,—यः कुर्य्यात् सचिवाऽऽयत्तां श्रियं तद्व्यसने सति।
सोऽन्धवज्जगतीपालः सीदेत् सञ्चारकैर्विना ॥१३२॥

स च सर्वकार्य्येषु (घ) स्वेच्छातः प्रवर्त्तते। तदत्र (ङ) स्वामी प्रमाणम्। एतच्चाहं जानामि (च) कार्य्यतः,—

न सोऽस्ति पुरुषो लोके यो न कामयते श्रियम्।
परस्य युवतीं रम्यां साकाङ्क्षं वीक्षते न कः ?" ॥१३३॥

---

हि राज्ञां सर्वस्वान्तकरम् इति भावः। शार्दूलविक्रीड़ितं वृत्तम्।

(१३१) विषेति।—विषदिग्धस्य विषमिश्रितस्य, भक्तस्य अन्नस्य, चलितस्य शिथिलमूलबन्धनस्य, दन्तस्य दशनस्य च, दुष्टस्य दुर्वृत्तस्य, विकृतिमापन्नस्य इत्यर्थः, अमात्यस्य मन्त्रिणश्च, मूलात् मूलदेशात्, समूलमित्यर्थः, उद्धरणम् उत्पाटनं, सर्वथा परित्याग इत्यर्थः, सुखं सुखदायकं, श्रेय इति यावत्; समूलघातेन उद्धरणं विधेयमिति भावः।

(१३२) य इति।—यः राजा, श्रियं राजलक्ष्मीं, सचिवायत्ताम् अमात्याधीनां, मन्त्रिहस्तगताम् इत्यर्थः, मन्त्रिषु एव निखिलकर्मभारसमर्पणादिति भावः, कुर्य्यात् विदध्यात्, स जगतीपालः महीपतिः, तद्व्यसने तस्य मन्त्रिणः व्यसने मरणाद्यापदि स्वामिद्रोहादिदोषे वा उपस्थिते सति, सञ्चारकैः चारकैर्विना अन्धवत् अन्ध इव, सीदेत् अवसादमाप्नुयात्, कर्त्तव्यविमूढतया राज्यपरिचालने नितरामशक्तो भवेदित्यर्थः; ऐश्वर्य्यमिच्छुना राज्ञा आत्मनिर्भर एव कर्त्तव्य इति भावः।

(घ) स्वेच्छातः,—स्वाभिप्रायानुसारात्, राजादेशमनपेक्ष्यैवेति भावः।

(ङ) स्वामी प्रमाणं—प्रमाता, कर्त्तव्यावधारकः इत्यर्थः, स्वामिने यत् रोचते तत् क्रियताम् इति यावत्।

(च) कार्य्यतः,—कार्य्यवशात्, दीर्घकालकार्य्यकरणजनितप्रज्ञावशादित्यर्थः।

(१३३) नेति।—लोके जगति, यः पुरुषः, श्रियं लक्ष्मीं, सम्पदमित्यर्थः, न कामयते न इच्छति, सः तादृशः, पुरुषः न अस्ति न विद्यते, तथाहि, कः जनः, परस्य अन्यस्य, रम्यां सुन्दरीं, युवतीं तरुणीं, भार्य्यामिति शेषः, साकाङ्क्षं सतृष्णं, सलोलुपमित्यर्थः, न वीक्षते ? न पश्यति ?, सुन्दरी युवतिरिव सर्वे

सिंहो (छ) विमृश्याऽऽह,—"भद्र! यद्यपि एवं, तथाऽपि सञ्जीवकेन सह मम महान् स्नेहः। पश्य,—

कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः।
अशेषदोषदुष्टोऽपि कायः कस्य न वल्लभः? ॥ १३४ ॥

अन्यच्च,—अप्रियाण्यपि कुर्वाणो यः प्रियः प्रिय एव सः।
दग्धमन्दिरसारेऽपि कस्य वह्नावनादरः?" ॥ १३५ ॥

दमनको वदति,—"देव! स एवातिदोषः। यतः,—

यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः।
सुतेऽमात्येऽप्युदासीने स लक्ष्म्याऽऽश्रीयते जनः ॥ १३६ ॥

---

कामुकान् विदधाति राजलक्ष्मीरिति भावः।

(छ) विमृश्य—क्षणं विचिन्त्य।

(१३४) कुर्वन्निति।—यः जनः, प्रियः प्रीतिभाजनं, सः व्यलीकानि अप्रियाणि, अनिष्टानि इत्यर्थः, कुर्वन् आचरन्नपि, प्रियः एव प्रकृत्या प्रीतिभाजनम् एव, वर्त्तते इति शेषः, न कदाचिदप्रियो भवति इत्यर्थः; तथाहि, अशेषाः बहुविधाः, दोषाः रोगादयः, तैर्दुष्टोऽपि दूषितोऽपि, विविधदुःखजनकोऽपि इत्यर्थः, कायः शरीरं, कस्य जनस्य, न वल्लभः? न प्रियः? प्रत्युत सर्वस्यैवेत्यर्थः; आत्मशरीरवत् अपरित्यज्यः खलु प्रियजन इति भावः।

(१३५) अप्रियाणीति।—यः जनः, प्रियः प्रीतिभाजनं, स्नेहपात्रमित्यर्थः, स अप्रियाणि अहितानि, कुर्वाणोऽपि आचरन्नपि, प्रियः एव प्रीतिभाजनमेव, वर्त्तते इति शेषः, तथाहि, दग्धः भस्मीकृतः, मन्दिरसारः उत्कृष्टगृहं गृहस्थमहामूल्यद्रव्यसमूहो वा येन तादृशेऽपि, वह्नौ अग्नौ, कस्य जनस्य, अनादरः? अश्रद्धा? भवेदिति शेषः, वह्नेरिव प्रियजनस्यापि अप्रियाचरणम् उपेक्षणीयम् इति भावः।

(१३६) यस्मिन्निति।—पार्थिवः राजा, सुते पुत्रे, अमात्ये सचिवे, तथा उदासीनेऽपि असम्पृक्ते वा, सम्पर्कशून्ये वेत्यर्थः, यस्मिन्नेव जने, अधिकम् अतिरिक्तम्, अन्येभ्यो विशिष्टं यथा तथेत्यर्थः, सस्नेहमिति यावत्, चक्षुः आरोपयति निक्षिपति, यमेव प्रसन्ननयनेन पश्यतीत्यर्थः, स जनः, सुतादीनामन्यतम इत्यर्थः, लक्ष्म्या श्रिया, राजलक्ष्म्या इत्यर्थः, आश्रीयते आश्रयते, सेव्यते इत्यर्थः, राजप्रियो हि सम्पन्नो भवतीति भावः।

शृणु देव!—

अप्रियस्यापि पथ्यस्य परिणामः सुखावहः।
वक्ता श्रोता च यत्राऽऽस्ते रमन्ते तत्र सम्पदः॥ १३७॥

त्वया च (ज) मूलभृत्यान् (झ) अपास्य अयम् (ञ) आगन्तुकः (ट) पुरस्कृतः। एतच्च अनुचितं कृतम्। यतः,—

मूलभृत्यापराधेन नागन्तून् प्रतिपालयेत्।
नातः परतरो दोषो राज्यभेदकरो यतः"॥ १३८॥

---

(१३७) प्रियार्हे राज्ञि अप्रियनिवेदनस्य हेतुमाह, अप्रियस्यापीति।—अप्रियस्य श्रुतिकटुत्वात् आपाततः अनभिमतस्यापि, पथ्यस्य हितस्य, ["पथ्यर्थन्यायादनपेते" (४।४।९२ पा०) इति पथिन्शब्दात् यत्प्रत्ययः] वाक्यस्येति शेषः, परिणामः परिणतिः, शेषफलमिति यावत्, सुखावहः सुखप्रदः, मद्वाक्यम् अप्रियमपि परिणामे सुखहेतुत्वात् ग्राह्यं भवता इति भावः। ननु कस्त्वम् उपदेशदानानर्हः? कथं वा वाक्यं ते श्रोष्यामीति राज्ञोऽनभिमतमाशङ्क्य तत्त्वं ब्रूवर्णति, वक्तेति।—यत्र स्थाने, वक्ता अप्रियस्यापि पथ्यस्य उपदेशकः इत्यर्थः, तथा श्रोता तादृशवाक्यस्य श्रवणकर्त्ता च, हितोपदेशग्रहीता च इत्यर्थः, आस्ते विद्यते, तत्र सम्पदः सर्वैश्वर्य्याणि, रमन्ते क्रीडन्ति, स्वेच्छया उपगम्य प्रीत्या तिष्ठन्ति इत्यर्थः, अतः हितोपदेष्टुः मम वाक्यं श्रोतव्यमिति भावः। ("सुलभाः पुरुषा राजन्! सततं प्रियवादिनः। अप्रियस्य तु पथ्यस्य परिणामः सुखावहः।" इति भारतोद्योगपर्वीयः पाठः)।

(ज) मूलभृत्यान्—कुलक्रमागतान् सेवकान्, विश्वस्तप्राचीनामात्यान् इति यावत्।

(झ) अपास्य—त्यक्त्वा, स्वस्वाधिकारात् अपसार्य्य इति यावत्। [अप+अस्यतेः ल्यप्]।

(ञ) आगन्तुकः,—नवागतः, अज्ञातकुलशील इति यावत्।

(ट) पुरस्कृतः,—सम्मानितः, विश्वस्तबुद्ध्या सर्वकार्य्ये नियुक्तः इत्यर्थः।

(१३८) मूलेति।—मूलभृत्यापराधेन मूलभृत्यानां कुलक्रमागतसेवकानाम् अपराधेन दोषेण, अपराद्धोऽयं नाधिकारे स्थापयितव्य इति बुद्ध्या इत्यर्थः, आगन्तून् कुतश्चित् समागतान्, अपरिचितान् इत्यर्थः, न प्रतिपालयेत् न नियोजयेदित्यर्थः,

सिंहो ब्रूते,—"महदाश्चर्यम्!! यत् मयाऽयमभयवाचं दत्त्वा आनीतः (ठ) संवर्द्धितश्च, तत् कथं (ड) मह्यं द्रुह्यति?"।

दमनको वदति,—"देव!—

दुर्जनो नाऽऽर्ज्जवं याति सेव्यमानोऽपि नित्यशः।
स्वेदनाभ्यञ्जनोपायैः श्वपुच्छमिव नामितम्॥ १३९॥

अपरञ्च,—स्वेदितो मर्दितश्चैव रज्जुभिः परिवेष्टितः।
मुक्तो द्वादशभिर्वर्षैः श्वपुच्छः प्रकृतिं गतः॥ १४०॥

---

यतः यस्मात् कारणात्, अतः अस्मात् आगन्तुकनिर्योजनात्, आगन्तुप्रतिपालनमपेक्ष्येत्यर्थः, परतरः श्रेष्ठतरः, राज्यभेदकरः रहस्यप्रकाशनेन राज्यनाशकः, दोषः दूषणं, न, अस्ति इति शेषः, ("नातःपरतरोऽन्योऽस्ति राज्यभेदकरो यतः" इति पाठान्तरम्) "सकलं नूतनं शस्तं सेवकाश्च पुरातने" इति मन्तव्यमिति भावः।

(ठ) संवर्द्धितः,—अभ्युदयं प्रापितः।

(ड) मह्यं—मामित्यर्थः। ["क्रुधद्रुहेर्ष्या—"(१।४।३७ पा०) इति सम्प्रदानाच्चतुर्थी]। द्रुह्यति—विरुध्यति, जिघांसति इत्यर्थः।

(१३९) दुर्जन इति।—दुर्जनः खलः, नित्यशः प्रतिदिनं, चिरमिति यावत्, सेव्यमानः आराध्यमानोऽपि, विविधोपचारैः सन्तोष्यमाणोऽपि इति यावत्, स्वेदनानि तापनानि, अभ्यञ्जनानि तैलादिमर्द्दनानि, तान्येव उपायाः आर्जवसाधनानीत्यर्थः, तैः नामितं प्रह्वीकृतं, श्वपुच्छं कुकुरलाङ्गूलम् इव, आर्ज्जवं सरलतां, न याति न लभते, स्वभावकुटिलं कुकुरलाङ्गूलं सेकाभ्यङ्गादिभिर्विविधैरुपायैरपि यथा सरलं न भवति, तथा दुर्जनोऽपि बहुयत्नैरपि प्रकृतिं न मुञ्चतीत्यर्थः।

(१४०) स्वेदित इति।—श्वपुच्छः कुकुरलाङ्गूलम्, ["अर्द्धर्चाः पुंसि च" (२।४।३१ पा०) इति अर्द्धर्चादिगणे पाठात् पुच्छशब्दस्य पुंलिङ्गप्रयोगोऽपि समीचीन एव। अत एवामरः,—"पुच्छोऽस्त्री लूमलाङ्गूले वालहस्तश्च वालधिः" इति] स्वेदितः तापितः, मर्द्दितः पीड़ितः, तैलादिभिरभ्यक्त इत्यर्थः, तथा रज्जुभिः दामभिः, परिवेष्टितः बद्धश्च, द्वादश वर्षाणीति भावः, द्वादशभिः वर्षैः द्वादशवत्सरानन्तर, बहोः कालात् परमपीत्यर्थः, मुक्तः एव रज्जुबन्धनात् शिथिलीकृतः एव, बन्धनविमुक्तिसमकालमेव, न तु किञ्चिद्विलम्बमिति भावः; प्रकृतिं स्वभाववक्रतां, गतः प्राप्तः, भवेदिति शेषः; "स्वभावो दुरतिक्रमः" इति भावः।

अन्वय,—वर्द्धनञ्चाथ सम्मानः खलानां प्रीतये कुतः ?
फलन्त्यमृतसेकेऽपि न पथ्यानि विषद्रुमाः ॥ १४१ ॥

पश्य,—

यः स्वभावो हि यस्यास्ति स तेन दुरतिक्रमः ।
श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम् ? ॥ १४२ ॥

अतोऽहं ब्रवीमि,—

अपृष्टोऽपि हितं ब्रूयात् यस्य नेच्छेत् पराभवम् ।
एष एव सतां धर्मो विपरीतमतोऽन्यथा ॥ १४३ ॥

तथा च उक्तम्,—

---

(१४१) वर्द्धनमिति ।—वर्द्धनम् अन्नवस्त्रादिना पोषणम्, अथ वाक्यात्, सम्मानः समादरश्च, ("चाथ" इत्यत्र "वाऽथ" इति पाठे—वाऽथ अथवा इत्यर्थः) खलानां क्रूरप्रकृतीनां, प्रीतये सन्तोषाय, कुतः ? भवतीति शेषः; दानमानादिना खलानां प्रीतिं सम्पादयितुं न कोऽपि प्रभवतीत्यर्थः, तथाहि, अमृतसेकेऽपि सुधासिञ्चने कृतेऽपि, अमृतेन अभिषिक्ताः अपीत्यर्थः, विषद्रुमाः विषवृक्षाः, पथ्यानि हितानि, सुफलानि इत्यर्थः, न फलन्ति न उत्पादयन्ति ; दुराराधनीया हि खलाः इति भावः ।

(१४२) प्रकृतेः दुस्त्यजत्वं दर्शयति, य इति ।—यस्य प्राणिनः, यः यादृशः स्वभावः प्राक्संस्कारानुसारिणी प्रकृतिः, अस्ति वर्त्तते, सः तादृशः स्वभावः, तेन प्राणिना, हि निश्चयेन, दुरतिक्रमः दुर्लङ्घ्यः, दुस्त्यज इत्यर्थः । तदेव दृष्टान्तेन विशदयति श्वेति ।—श्वा सारमेयः, यदि राजा क्रियते, केनचित् इति शेषः, तदा सः श्वा, किम् उपानहं चर्मपादुकां, न अश्नाति ? न भक्षयति ?, अपि तु भक्षयत्येव; स्वभावाः दुस्त्यजाः इत्याशयः ।

(१४३) अपृष्ट इति ।—यस्य जनस्य, पराभवं पराजयम्, अमङ्गलादिकं यावत्, न इच्छेत् न प्रार्थयेत, यस्य हितकामो भवेदित्यर्थः, अपृष्टः अजिज्ञासितोऽपि हितं पथ्यं, मङ्गलप्रदमित्यर्थः, ब्रूयात् उपदिशेत्, तं हितैषीति शेषः ; एष ईदृश एव, सतां साधूनां, धर्मः आचारः स्वभावो वा, अतः एतस्मात्, अन्यथा वैपरीत्यं, विपरीतं विरुद्धम्, अधर्म इत्यर्थः, अतोऽधर्मभीरुणा सर्वथैतत् कर्त्तव्यम् इति भावः ।

स स्निग्धोऽकुशलान्निवारयति यस्तत्कर्म यन्निर्मलं
सा स्त्री याऽनुविधायिनी स मतिमान् यः सद्भिरभ्यर्च्यते।
सा श्रीर्या न मदं करोति स सुखी यस्तृष्णया मुच्यते
तन्मित्रं यदकृत्रिमं स पुरुषो यः खिद्यते नेन्द्रियैः॥१४४॥

यदि (ढ) सञ्जीवकव्यसनार्दितो विज्ञापितोऽपि स्वामी (ण) न निवर्त्तते, तदा भृत्यस्य न दोषः। तथा च,—

नृपः कामासक्तो गणयति न कार्य्यं न च हितं
यथेष्टं स्वच्छन्दः प्रविचरति मत्तो गज इव।

(१४४) स इति।—यः जनः, अकुशलात् अशुभात्, आपदः इत्यर्थः, अहिताद्वित्यर्थो वा, निवारयति निवर्त्तयति, परित्रायते इति यावत्, सः स्निग्धः वत्सलः, स्नेहपरायण इत्यर्थः, हितैषीति यावत्, यत् कर्म्म, निर्मलं दोषस्पर्शशून्यं, पवित्रमित्यर्थः, तत् एव कर्म, या स्त्री, अनुविधायिनी अनुवर्त्तिनी, पत्युः अनुकूलचारिणीत्यर्थः, पतिच्छन्दानुवर्त्तिनीति यावत्, सा एव स्त्री भार्य्यापदवाच्या, यः जनः, सद्भिः विद्वद्भिः, अभ्यर्च्यते पूज्यते, आद्रियते इत्यर्थः, स एव मतिमान् बुद्धिमान्, मतिमत्त्वया गणनीय इत्यर्थः, या श्रीः, मदं गर्वं, न करोति न जनयति, सा एव श्रीः सम्पत्, अविकारजननी सम्पदेव सम्पत्पदवाच्या इत्यर्थः, यः जनः, तृष्णया उत्कटलालसया, मुच्यते त्यज्यते, न अभिभूयते इत्यर्थः, स वितृष्णो जनः एव, सुखी सुखभाक्, यत् मित्रम्, अकृत्रिमं स्वाभाविकम्, अकपटमित्यर्थः, तत् एव मित्रं सुहृत्, सुहृत्पदवाच्यमित्यर्थः, यः पुरुषः, इन्द्रियैः चक्षुरादिभिः, रूपरसादिभिरिन्द्रियार्थैरिति यावत्, कामादिभिरिन्द्रियजविकारैर्वा, न खिद्यते न क्लिश्यते, न वशीक्रियते इत्यर्थः, सः एव पुरुषः पुरुषश्रेष्ठत्वेन गणनीय इत्यर्थः। सर्व्वत्र तच्छब्दस्य प्रशस्तार्थः। शार्दूलविक्रीड़ितं वृत्तम्।

(ढ) सञ्जीवकव्यसनार्दितः,—सञ्जीवके यद् व्यसनम् आसक्तिः, यद्वा—सञ्जीवक एव व्यसनं पापः, सञ्जीवकात् यत् व्यसनं विपत्तिः इति वा, ("व्यसनन्त्वशुभे सक्तौ पानस्त्रीमृगयादिषु। दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे" इति मेदिनी) तेन अर्दितः पीड़ितः, सञ्जीवकासक्तः सञ्जीवकरूपपापाक्रान्तो वा सञ्जीवकात् विपन्नो वा।

(ण) न निवर्त्तते—सञ्जीवकं प्रति विश्वासात् न विरमति।

(१४५) नृप इति।—कामासक्तः विषयासक्तः, नृपः राजा, कार्य्यं

ततो मानध्मातः स पतति यदा शोकगहने
तदा भृत्ये दोषान् क्षिपति न निजं वेत्त्यविनयम्" ॥१४५॥

पिङ्गलकः स्वगतम्,—

"न परस्यापवादेन परेषां दण्डमाचरेत् ।
आत्मनाऽवगमं कृत्वा बध्नीयात् पूजयेत वा ॥१४६॥

तथा चोक्तम्,—

गुणदोषावनिश्चित्य विधिना ग्रहनिग्रहौ ।
स्वनाशाय यथा न्यस्तो दर्पात् सर्पमुखे करः" ॥ १४७॥

---

स्वकर्त्तव्यं, न, हितं हितकरं विषयञ्च वचनञ्च वा, न गणयति न विचा... इदं कार्य्यमिदमकार्य्यमिदं हितमिदमहितमित्यादिकं न विवेचयति ॥ प्रत्युत मत्तः मदोत्कटः, गज इव करी इव, स्वच्छन्दः निवरणः सन्, स्वे... भावेनेत्यर्थः, यथेष्टं यथाभिप्रेतं, प्रविचरति आचरति, गजपक्षे—स्वमति... पश्चात्, मानध्मातः गर्वाभिभूतः, अहङ्कारपरिपूर्ण इत्यर्थः, स नृपः, यदा स्व... शोकगहने स्वैराचारात् दुष्प्रतीकारायां विपदि, राज्यनाशादिजन्यदुःखे ... पतति निक्षिप्तो भवति, विपन्नो भवतीत्यर्थः, तदा तत्काले, भृत्ये ... दोषान् आत्मनः विपत्तिजन्यापराधान्, क्षिपति अर्पयति, आरोपयतीत्यर्थः, ... स्वकीयम्, अविनयम् असदाचरणं, न वेत्ति न जानाति, न स्मरतीति ... कामार्त्ताः खलु हिताहितविचारमूढाः भवन्तीति भावः । शिखरिणी वृत्तम् ।

(१४६) नेति ।—परस्य स्वेतरस्य, अपवादेन निन्दावाक्येन, अवस... दोषारोपणेन इत्यर्थः, परेषाम् अन्येषां, दण्डं शास्तिं, न आचरेत् न कु... आत्मना स्वयम्, अवगमम् अनुसन्धानं, कृत्वा किमयं दुष्टोऽदुष्टो वेति ज्ञात्वा... बध्नीयात् दण्डयेदित्यर्थः, वा अथवा, पूजयेत सम्मानयेत्, स्वयम् आचरण... दण्डार्हं दण्डं सम्माननाऽर्हस्य सम्मानं कुर्य्यादित्यर्थः, तथा च स्वयमनुस... अश्रोतकस्य दण्डो न विधेय इति भावः । ("न परस्य प्रवादेन परस्य दण्डमा... आगमानुगमं कृत्वा बध्नीयान्मोक्षयेत वा ॥" इति भारतशान्तिपर्वोक्त... वर्णनोक्तपाठान्तरम् ) ।

(१४७) गुणेति ।—विधिना न्यायानुसारेण, गुणदोषौ निरपराधित्वसापरा... उपकारकोऽयमपकारको वा इति दण्ड्यगतोपकारापकारौ इत्यर्थः, ...

प्रकाशं ब्रूते,—(त) "तदा सञ्जीवकः किं (थ) प्रत्यादिश्यताम्?"। दमनकः ससम्भ्रममाह,—"देव! मा मैवं तावत्। (द) मन्त्रभेदो जायते। तथा चोक्तम्,—

मन्त्रबीजमिदं गुप्तं रक्षणीयं तथा यथा।
मनागपि न भिद्येत तद्भिन्नं न प्ररोहति॥ १४८॥

किञ्च,—आदेयस्य प्रदेयस्य कर्त्तव्यस्य च कर्मणः।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम्॥ १४९॥

---

चनिग्रहाय्य, यहनिग्रहौ अनुग्रहशासने, विहितौ इति शेषः, दर्पात् गर्वात्, सर्पमुखे न्यस्तः अर्पितः, करः यथा हस्त इव, स्वनाशाय आत्मविनाशाय, भवत इति शेषः; अविचारको राजा न चिरं राज्यं रक्षितुं शक्नुयात्, अतो मयाऽत्र विचारः कर्त्तव्य इति भावः।

(त) तदा—तथात्वे इत्यर्थः।

(थ) प्रत्यादिश्यतां—निराक्रियतां, परित्यज्यताम् इत्यर्थः।

(द) मन्त्रभेदः,—गुप्तमन्त्रणायाः प्रकाशनम्।

(१४८) मन्त्रबीजमिति।—मन्त्रबीजं मन्त्रः गुह्यवादरूपः, बीजं राज्यरक्षायाः कारणं, तथा तेन प्रकारेण, सर्वप्रयत्नेनेत्यर्थः, गुप्तं सुरक्षितम्, अन्यसन्निधौ यथा प्रकाशितं न भवेत् तथेत्यर्थः, रक्षणीयं पालनीयं, भेदं न प्रापणीयम् इत्यर्थः, बीजपक्षे—स्थापनीयमित्यर्थश्च, यथा येन प्रकारेण, इदं मन्त्रबीजं, मनागपि स्तोकमपि, न भिद्येत न भेदं लभेत, न प्रकाशेत इत्यर्थः, बीजपक्षे—न द्विखण्डितं भवेदित्यर्थः, तत् बीजं, भिन्नं प्रकाशितं सत्, अन्यत्र—खण्डितञ्च सत्, न प्ररोहति न प्रादुर्भवति, न सफलं भवतीत्यर्थः, नाङ्कुरितं भवतीत्यर्थश्च, भग्ने बीजे अङ्कुरोद्गमाभावात् इति भावः; असंवृतमन्त्रस्य कार्य्यनाशो भवेत् ध्रुवमिति तात्पर्य्यम्।

(१४९) आदेयस्येति।—कर्त्तव्यस्य अवश्यं सम्पादनीयस्य, आदेयस्य ग्रहणीयस्य, प्रदेयस्य वितरणीयस्य च, प्रदातव्यस्य च इत्यर्थः, कर्मणः कार्य्यस्य, यद्वा —आदेयस्य प्रदेयस्य तथा कर्त्तव्यस्य कर्मणश्च क्षिप्रं सत्वरम्, अक्रियमाणस्य असम्पाद्यमानस्य सतः, आदानप्रदानादिकर्म्मणि शीघ्रमक्रियमाणे सतीत्यर्थः, कालः समयः, अतिपातितः समय इत्यर्थः, तद्रसं तस्य कर्मणः, रसं सारभूतं फलं, पिबति ग्रसते, कालातिपातेन कार्य्यध्वंसो भवतीत्यर्थः।

तदवश्यं (ध) समारब्धं महता यत्नेन सम्पादनीयम्। किञ्च,

मन्त्रो योध इवाधीरः सर्वाङ्गैः संवृतैरपि।
चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया॥ १५०॥

यदि असौ (न) दृष्टदोषोऽपि दोषान्निवर्त्त्य (प) सन्धातव्य-
स्तदतीव अनुचितम्। यतः,—

सकृद्दुष्टं यो नु मित्रं पुनः सन्धातुमिच्छति।
स मृत्युमेव गृह्णाति गर्भमश्वतरी यथा"॥ १५१॥

(ध) समारब्धम्—उपक्रान्तं कर्म्म।

(१५०) मन्त्रितस्यार्थस्य सत्वरमनुष्ठाने दोषमाह, मन्त्र इति।—मन्त्रः, बहुकालं गुप्ततया स्थातुम् अक्षमः इत्यर्थः, अन्यत्र—कातरः, भीरुरित्यर्थः, मन्त्रणा, राज्यसङ्क्रान्तः गुह्यवाद इत्यर्थः, योध इव योद्धृपुरुष इव, संवृतैः अप्रकाशितैरित्यर्थः, अन्यत्र—वर्म्मावृतैः, सर्वाङ्गैः सकलावयवैः, कर्म्मणां साधनोपायादिभिः पञ्चाङ्गैरित्यर्थः, तथा च—"सहायाः साधनोपाया विभागो देशकालयोः। विनिपातप्रतीकारः सिद्धिः पञ्चाङ्ग इष्यते॥" इति कामन्दकः। अन्यच्च—पृष्ठोरःप्रभृतिभिः उपलक्षितोऽपि; परेभ्यः अन्यजनेभ्यः, शत्रुभ्यः, भेदशङ्कया प्रकाशभयेन, अन्यत्र—विदारणभीत्या, विनाशभयेनेत्यर्थः, दीर्घकालं, स्थातुम् अपेक्षितुं, विलम्बितुमित्यर्थः, न सहते न क्षमते, भिन्नश्च मन्त्रः फलोपधायको भवति, अतो न विलम्बितव्यम् अन्यथा कार्य्यहानिः स्यादिति भावः। श्लोकोऽयं शिशुपालवधे २य सर्गे दृश्यते।

(न) दृष्टदोषः,—प्रत्यक्षीकृतापराधः, प्रमाणीकृतपापः इत्यर्थः।

(प) सन्धातव्यः,—सन्धेयः, मैत्रीकरणार्हः इत्यर्थः, इति मन्यते भवानिति शेषः।

(१५१) सकृदिति।—नु भोः!, यो जनः, सकृत् एकवारं, दुष्टं कृतापराधं शत्रुताऽऽचरणात् भग्नमैत्रमित्यर्थः, मित्रं सुहृदं पुनः भूयः, सन्धातुं सन्धातुं मिलितुम्, इच्छति अभिलषति, सः जनः, अश्वतरी गर्द्दभेनाश्वायामुत्पन्ना पशुविशेषः, "खच्चर" इति प्रसिद्धा, सर्पीविशेषो वा, गर्भं यथा गर्भमिव, गर्भधारणमिवेत्यर्थः, मृत्युमेव आत्मविनाशमेव, गृह्णाति स्वीकरोति, आह्वयतीत्यर्थः; अश्वतरी गर्भो यथा मरणाय, तथा दुष्टमित्रेण पुनः सन्धित्सा अपि इति भावः। अश्वतरी गर्भवती चेत् म्रियते इति लोके। "भग्नस्नेहेन या मैत्री न सा कल्याणदायिनी

सिंहो ब्रूते,—"ज्ञायतां तावत् किमस्माकमसौ कर्त्तुं समर्थः"। दमनक आह,—"देव!—

अङ्गाङ्गिभावमज्ञात्वा कथं सामर्थ्यनिर्णयः?।
पश्य टिट्टिभमात्रेण समुद्रो व्याकुलीकृतः" ॥ १५२ ॥

सिंहः पृच्छति,—"कथमेतत्?"। दमनकः कथयति,—

समुद्र-टिट्टिभदम्पतीकथा।—

"दक्षिणसमुद्रतीरे (फ) टिट्टिभदम्पती निवसतः। अथ (ब) आसन्नप्रसवा टिट्टिभी भर्त्तारमाह,—"नाथ! प्रसवयोग्य-स्थानं निभृतमन्विष्यताम्।" टिट्टिभोऽवदत्,—"प्रिये! नन्विदमेव स्थानं प्रसूतियोग्यम्"। सा ब्रूते,—(भ) "समुद्रवेलया प्लाव्यते स्थानमेतत्।" सोऽब्रवीत्,—"भद्रे! किमहं निर्बलः, यत् मम गृहावस्थितानि अण्डानि समुद्रेणापहर्त्तव्यानि, अहं

---

इति निष्कर्षः। ("दण्डेनोपनतं शत्रुं यो राजा न नियच्छति। स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥" इति भारतशान्तिपर्वीयापद्धर्म्मोक्तपाठान्तरम्। चाणक्यनीतौ महाभारते च अस्य बहवः पाठभेदा दृश्यन्ते)।

(१५२) अङ्गाङ्गीति।—अङ्गाङ्गिभावम् अङ्गम् अप्रधानम्, ("अङ्गं गात्रे प्रतीकोपाययोः पुं भूम्नि नीवृति। क्लीवैकत्वे त्वप्रधाने" इति मेदिनी) अङ्गी प्रधानं, तयोः भावं स्वरूपम्, उभयोः कः अप्रधानः को वा प्रधानः इत्येतयोः याथार्थ्यं, यथा—सहायसाधनादिबलं, विद्यमानबलाबलकारणमित्यर्थः, अज्ञात्वा अविदित्वा, कथं केन प्रकारेण, सामर्थ्यनिर्णयः शक्तिनिरूपणं, क्रियते इति शेषः, न केनापीत्यर्थः, पश्य अवलोकय, जानीहीत्यर्थः, टिट्टिभमात्रेण एकेनैव टिट्टिभाख्यक्षुद्रपक्षिणा, सुसहायवता इति भावः; समुद्रः अगाधजलनिधिः, कैरपि अक्षोभ्य इति भावः; व्याकुलीकृतः क्षुब्धीकृतः, कर्त्तव्यज्ञानशून्यः कृतः इत्यर्थः।

(फ) टिट्टिभदम्पती—टिट्टिभमिथुनम्। [जाया च पतिश्चेति द्वन्द्वे जाया-शब्दस्य दमादेशः]।

(ब) आसन्नप्रसवा—सन्निहितगर्भमोचनकाला।

(भ) समुद्रवेलया—समुद्रजलविकारेण, उद्वेलितसमुद्रप्रवाहेण इत्यर्थः। प्लाव्यते—निमज्ज्यते इत्यर्थः।

च (म) निग्रहीतव्यः ?"। टिट्टिभो विहस्याऽऽह,—"नाथ! (य) त्वया समुद्रेण च महदन्तरम्। अथवा,—

दुःखमात्मा परिच्छेत्तुमेव योग्यो न वेति वा।
अस्तीदृग् यस्य विज्ञानं स कृच्छ्रेऽपि न सीदति ॥१५३॥

अपिच,—अनुचितकर्मारम्भः स्वजनविरोधो बलीयसा स्पर्द्धा।
प्रमदाजनविश्वासो मृत्योर्द्वाराणि चत्वारि" ॥ १५४॥

ततः स्वामिवचनात् सा तत्रैव प्रसूता। एतत् सर्वं श्रुत्वा समुद्रेणापि (र) तच्छक्तिज्ञानार्थिना तदण्डानि अपहृतानि। ततस्तु टिट्टिभी शोकार्त्ता भर्त्तारमाह,—"नाथ

---

(म) निग्रहीतव्यः,—पीड़यितव्यः इत्यर्थः। [नि+ग्रह+तव्य "ग्रहोऽलिटि दीर्घः" (७।२।३७ पा०) इति इटो दीर्घः]।

(य) त्वयेति।—त्वया सह तुलनया समुद्रस्य, समुद्रेण च तव इत्युभयोः महदन्तरं महान् प्रभेदः।

(१५३) दुःखमिति।—आत्मा स्वयं, योग्यः इदं कार्य्यं सम्पादयितुं समर्थो वा न वा असमर्थो वा इत्यर्थः, इत्येतत्, परिच्छेत्तुमेव निर्द्धारयितुमेव, निर्णेतुमिति यावत्, दुःखं कष्टं, क्लेशकरमित्यर्थः, स्वसामर्थ्यनिरूपणम् एव दुष्करमिदं किन्तु यस्य जनस्य, ईदृक् एतादृशम, आत्मबलाबलनिरूपणविषयकमित्यर्थः, विज्ञानं बोधः, अस्ति वर्त्तते, सः जनः, कृच्छ्रेऽपि विपत्तावपि, न सीदति न अवसन्नो भवति, न विषादमाप्नोति इत्यर्थः, स्वप्रभावं सुविदुषः नास्ति कुत्रापि विपत्सम्भावना इति भावः।

(१५४) अनुचितेति।—अनुचितस्य अयोग्यस्य, स्वयं साधयितुमनर्हस्येत्यर्थः कार्य्यस्य, आरम्भः साधयितुमुद्यमः, स्वजनेन आत्मीयेन, बन्धुनेति यावत् विरोधः वैरं, विच्छेदघटनमिति यावत्, बलीयसा स्वापेक्षया बलवत्तरेण सह स्पर्द्धा प्रतिद्वन्द्विता, तथा प्रमदाजनविश्वासः प्रमदाजनेषु स्त्रीजनेषु, दुष्टासु नारीषु इति यावत्, विश्वासः प्रत्ययः, चत्वारि एतच्चतुष्टयं, मृत्योर्द्वाराणि मृत्युमन्दिरस्य मार्गाः, मरणकारणानीत्यर्थः, एतदन्यतमाभ्युपगमे मरणमेव अवश्यम्भावीति भावः आर्य्या वृत्तम्।

(र) तच्छक्तिज्ञानार्थिना—टिट्टिभस्य तु सामर्थ्यं बुभुत्सुना।

(ल) कष्टमापतितम्, अण्डानि मे नष्टानि"। टिट्टिभोऽवदत्,—"प्रिये! मा भैषीः।" इत्युक्त्वा पक्षिणां (व) मेलकं कृत्वा पक्षि-स्वामिनो गरुड़स्य समीपं गतः। तत्र गत्वा तेन निजाण्डानां विनाशकथा निवेदिता,—"देव! समुद्रेणाहं स्वगृहावस्थितः विनाऽपराधेनैव निगृहीतः"। ततस्तेन गरुत्मता तद्वचन-माकर्ण्य (श) प्रभुर्भगवान् नारायणः (ष) सृष्टिस्थितिप्रलय-हेतुर्विज्ञप्तः। स समुद्रमण्डदानायाऽऽदिदेश। ततो भगवदाज्ञां (स) मौलौ निधाय समुद्रस्तानि अण्डानि टिट्टिभाय समर्पितवान्। अतोऽहं ब्रवीमि,—"अङ्गाङ्गिभावम् अज्ञात्वा" इत्यादि।

[ इति समुद्र-टिट्टिभदम्पतीकथा ]।

राजाऽऽह,—"कथमसौ ज्ञातव्यो (ह) द्रोहबुद्धिः?" इति। दमनकः पुनराह,—"यदाऽसौ (क) शृङ्गाग्रप्रहरणाभिमुखश्चकित इव आगच्छति तदा ज्ञास्यति स्वामी।" एवमुक्त्वा सञ्जीवक-समीपं गतः। तत्र गतश्च मन्दं मन्दमुपसर्पन् विस्मितमिव आत्मानम् अदर्शयत्। ततः सञ्जीवकेन सादरमुक्तम्,—"भद्र

(ल) कष्टमापतितं—कष्टं कष्टकारणमित्यर्थः, आपतितं सञ्जातं, विपदुपस्थिता इति यावत्। नष्टानि—अपहृतानि।

(व) मेलकं—समवायं, सर्वैः पक्षिभिः मिलित्वेत्यर्थः।

(श) प्रभुः,—निग्रहानुग्रहसमर्थः। भगवान्—षडैश्वर्य्यशाली।

(ष) सृष्टिस्थितिप्रलयहेतुः,—उत्पत्तिरक्षाविनाशकारणम्। विज्ञप्तः,—निवेदितः।

(स) मौलौ—शिरसि।

(ह) द्रोहबुद्धिः,—अनिष्टसाधनेच्छुः, विद्रोहभावापन्नः इत्यर्थः।

(क) शृङ्गाग्रप्रहरणाभिमुखः,—शृङ्गयोः विषाणयोः, अग्रं तेन प्रहरणं प्रहारः, तस्मिन् तस्मै वा अभिमुखः उद्यतः। चकित इव—सम्भ्रान्त इव।

दमनक ! कुशलं ते ?"। दमनको ब्रूते,—"अनुजीविनां कुतः कुशलम् ? यतः,—

सम्पत्तयः पराधीनाः सदा चित्तमनिर्वृतम् ।
स्वजीवितेऽप्यविश्वासस्तेषां ये राजसंश्रयाः ॥ १५५ ॥

अन्यच्च,—

कोऽर्थान् प्राप्य न गर्वितो ? विषयिणः कस्यापदोऽस्तङ्गताः ?
स्त्रीभिः कस्य न खण्डितं भुवि मनः ? को वाऽस्ति राज्ञां प्रियः ?
कः कालस्य भुजान्तरं न च गतः ? कोऽर्थी गतो गौरवं ?
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ?" ॥१५६॥

---

(१५५) सम्पत्तय इति।—ये राजसंश्रयाः राजा संश्रयः अवलम्बनं तथोक्ताः राजाधीनाः, राजसेवका इत्यर्थः, तेषां सम्पत्तयः ऐश्वर्य्याणि, पराधीनाः परतन्त्राः, तासां स्थायित्वमस्थायित्वं वा राजाभिलाषायत्तमित्यर्थः, चित्तं सदा नित्यकालम्, अनिर्वृतम् अस्वस्थम्, असुखितमित्यर्थः, कदा राजा किं... पश्यतीति चिन्तया व्याकुलमिति भावः; स्वजीविते निजजीवनेऽपि, ... अप्रत्ययः, राज्ञां कोपप्रसादयोः अनिश्चितत्वात् कदा कुपितो भवति, कदा दण्डं विधास्यति इति शङ्कयेति भावः।

(१५६) क इति।—कः जनः, अर्थान् धनानि, प्राप्य लब्ध्वा, न गर्वितः ... साहङ्कृतः ? न धनमत्त इत्यर्थः, भवतीति शेषः, विषयिणः विषयासक्तस्य जनस्य, आपदः अनर्थाः, अस्तं गताः ? अवसानं प्राप्ताः ? दूरीभूता इदं कस्यापीति भावः; भुवि पृथिव्यां, कस्य जनस्य, मनः चित्तं, स्त्रीभिः नारीभिः न खण्डितम् ? न विकलीकृतम् ? न भग्नमित्यर्थः, को वा जनः, राज्ञां ... प्रियः अभिमतः, प्रीतिपात्रमित्यर्थः, अस्ति ? वर्त्तते ? चिरमिति शेषः; ... जनः, कालस्य यमस्य, भुजान्तरं बाहुमध्यगतं, कालकवलमित्यर्थः, ... यावत्, न गतः ? न प्राप्तः ?, ("को वाऽस्ति राज्ञां प्रियः" इत्यत्र "को ... राजप्रियः" तथा "कः कालस्य भुजान्तरं न च गतः" इत्यत्र "कः कालस्य गोचरत्वमगमत्" इति वृद्धचाणक्योक्तपाठान्तरम्) कः अर्थी याचकः, ... सम्मानं, गतः ? प्राप्तः ? याच्ञां कृत्वा सम्मानभाजनं कः अभूत् ! को वा पुमान् पुरुषः, दुर्जनवागुरासु दुर्जनप्रयुक्तेषु कापट्यरूपपाशविशेषेषु, ...

सञ्जीवकेनोक्तम्,—"सखे! ब्रूहि किमेतत्?"। दमनक आह,—"किं ब्रवीमि मन्दभाग्यः?। पश्य,—

यथा समुद्रे पतितो लब्ध्वा सर्पावलम्बनम्।
न मुञ्चति न चादत्ते तथा मुग्धोऽस्मि सम्प्रति ॥ १५७॥

यतः,—एकत्र राजविश्वासो नश्यत्यन्यत्र बान्धवः।
किं करोमि क्व गच्छामि पतितो दुःखसागरे" ॥ १५८॥

इति उक्त्वा दीर्घं निश्वस्योपविष्टः। सञ्जीवको ब्रूते,—"मित्र! तथाऽपि (ख) सुविस्तरं मनोगतं कथ्यताम्।" दमनकः (ग) सुनिभृतमाह,—"यद्यपि राजविश्वासोऽन्यस्मै न कथनीयः तथाऽपि भवान् (घ) अस्मदीयप्रत्ययादागतः स्थितश्च, तन्मया

---

संवदः सन्, यद्वा—दुर्जनः खल एव, वागुरा मृगबन्धनार्थजालविशेषः तासु, पतितः निक्षिप्तः, खलहस्ते निपतितः सन्नित्यर्थः, दैवेन निर्दिष्टमित्यर्थः, यातः? निष्कृतिं प्राप्तः?; भुवि इति पदेन सर्वत्र सम्बन्धः। शार्दूलविक्रीडितं वृत्तम्।

(१५७) यथेति।—समुद्रे सागरे, पतितो निक्षिप्तः जनः, सर्पावलम्बनं सर्प एव अवलम्बनम् आश्रयस्तं, लब्ध्वा प्राप्य, यथा यद्वत्, न मुञ्चति न त्यजति, त्यक्तुं न शक्नोतीत्यर्थः, मज्जनभयेन इति भावः; न च आदत्ते गृह्णाति, धर्तुमपि न शक्नोतीत्यर्थः, दंशनभयेन इति भावः; तथा तद्वत्, सम्प्रति इदानीं, मुग्धः किंकर्तव्य-विमूढः, अस्मि भवामि, अहमिति शेषः, सहसा किमपि वक्तुं न शक्नोमि इत्यर्थः।

(१५८) एकत्रेति।—एकत्र एकस्मिन् पक्षे, मनोभावप्रकटने इत्यर्थः, राज-विश्वासः राज्ञः नृपस्य, विश्वासः मयि प्रत्ययः, अन्यत्र अपरत्र, तदप्रकाशने च इत्यर्थः, बान्धवः भवादृशः सुहृदित्याशयः, नश्यति विनाशं गच्छति, अतः अहं किं करोमि? क्व कुत्र, गच्छामि? दुःखमेव सागरः तस्मिन् दुःखार्णवे, पतितः निक्षिप्तः, भवामीति शेषः, अत्र कर्त्तव्यनिर्णयासामर्थ्यात् सङ्कटे निपतितोऽस्मीत्यर्थः।

(ख) सुविस्तरं—प्रकाशं कृत्वा इत्यर्थः, ("सविस्तरम्" इति पाठे—सप्रपञ्च-मित्यर्थः)। मनोगतं—हृदये स्थितं भावम्।

(ग) सुनिभृतं—सुगूढं, सुगुप्तमित्यर्थः।

(घ) अस्मदीयप्रत्ययात्—अस्माकं वाक्येषु विश्वासं कृत्वेत्यर्थः।

(ङ) परलोकार्थिनाऽवश्यं तव हितम् (च) आख्येयम्। शृणु,—अयं स्वामी तवोपरि (छ) विकृतबुद्धिः रहसि एवमुक्तवान्,—'सञ्जीवकमेव हत्वा स्वपरिवारं (ज) तर्पयामि।' एतच्छ्रुत्वा सञ्जीवकः परं विषादमगमत्। दमनकः पुनराह,—"अलं विषादेन? (झ) प्राप्तकालकार्य्यमनुष्ठीयताम्"। सञ्जीवकः क्षणं विमृश्याह,—"सुष्ठु खल्विदमुच्यते,—

दुर्जनगम्या नार्य्यः प्रायेणापात्रभृद्भवति राजा।
कृपणानुसारि च धनं देवो गिरिजलधिवर्षी च॥ १५९॥

तथा च,—नीचमाश्रयते लक्ष्मीरकुलीनं सरस्वती।
अपात्रं भजते नारी गिरौ वर्षति वासवः॥ १६०॥

---

(ङ) परलोकार्थिना—परलोके शुभां गतिमिच्छता।

(च) आख्येयं—कथनीयम्।

(छ) विकृतबुद्धिः,—विकृता दूषिता बुद्धिर्यस्य सः मन्दमतिः, त्वां जिघांसुरित्यर्थः। रहसि—निर्ज्जने।

(ज) तर्पयामि—प्रीणयामि।

(झ) प्राप्तकालकार्य्यं—समयानुरूपं कर्म्म।

(१५९) दुर्जनेति।—प्रायेण बाहुल्येन, पदमिदं सर्व्वत्रैव योजनीयम्; नार्य्यः स्त्रियः, सुन्दर्य्य इति भावः; दुर्जनगम्याः दुर्जनलभ्याः, दुर्जनोपभोग्या इत्यर्थः, भवन्तीति शेषः, दुर्जना एव प्रायशो नारीप्रिया भवन्तीति भावः; राजा अपात्रभृत् अनुपयुक्तपोषकः, दुर्जनप्रतिपालक इत्यर्थः, भवति, धनम् अर्थश्च, कृपणं व्ययकुण्ठम्, अनुसरति अनुगच्छतीति तत् कृपणानुसारि कृपणाधिगतं, भवतीति शेषः, देवः इन्द्रश्च, गिरौ पर्व्वते, जलधौ समुद्रे च, वर्षतीति तादृशः, अस्थानवर्षकः इत्यर्थः, भवतीति शेषः; राजानो हि प्रायेणानवस्थितचित्ताः पात्रापात्रविचाराक्षमाश्च भवन्ति, ये हि तेषां छन्दोऽनुवर्त्तिनो भवन्ति, त एव प्रसादभाजो भवन्ति, अतोऽत्र न कोऽपि विस्मयावकाशः इति भावः। आर्य्या वृत्तम्।

(१६०) नीचमिति।—लक्ष्मीः कमला, सम्पदिति यावत्, नीचं हीनप्रकृतिं जनं, मूर्खमित्यर्थः, कृपणमिति यावत्, आश्रयते अभिगच्छति, सरस्वती वाग्देवी, अकुलीनं हीनवंशीयं पुरुषं, आश्रयतीति शेषः, नारी स्त्री, सुन्दरीति भावः;

स्वगतं—किमिदम् (ञ) असद्विचेष्टितं न वेत्येतद्व्यवहारात् निर्णेतुं न शक्यते। यतः,—

कश्चिदाश्रयसौन्दर्य्याद्धत्ते शोभामसज्जनः।
प्रमदालोचनन्यस्तं मलीमसमिवाञ्जनम्" ॥ १६१ ॥

तत्र विचिन्त्योक्तम्,—"कष्टं! किमिदमापतितम्?। यतः,—

आराध्यमानो नृपतिः प्रयत्नात्
न तोषमायाति किमत्र चित्रम्?।
अयं त्वपूर्वः प्रतिमाविशेषो
यः सेव्यमानो रिपुतामुपैति ॥ १६२ ॥

---

श्वपाचम् असज्जनम्, अयोग्यपात्रमिति वा, कुरूपमिति यावत्, भजते सेवते, वासवः इन्द्रः, गिरौ पर्व्वते, जनसाधारणदुरधिगमे तथा शस्यादीनामनुपयोगित्वादप्रयोजनीयस्थाने इत्यर्थः, वर्षति जलं ददाति। श्लोकेऽत्र प्रायेणेति पदमध्याहरणीयम्। तत् प्रभोरप्यविचारः सिद्ध एव इति भावः।

(ञ) असद्विचेष्टितं—दुर्जनकार्य्यम्। ("एतद्विचेष्टितम्" इति पाठे—एतस्य दमनकस्य विचेष्टितमित्यर्थः)।

(१६१) कश्चिदिति।—कश्चित् असज्जनः असाधुपुरुषः, आश्रयसौन्दर्य्यात् आश्रयगुणेन, प्रमदालोचनन्यस्तं कामिनीनेत्रलिप्तं, मलीमसं मलिनम्, अञ्जनं कज्जलमिव, शोभां कान्तिं, सौन्दर्य्यमित्यर्थः, धत्ते लभते, नीचोऽपि आश्रयगुणेनोत्कृष्टवत् प्रतिभातीत्यर्थः; अतीव कृष्णवर्णं कज्जलं सुन्दरीनयनार्पितं यथा आश्रयसौन्दर्य्यवशेन निजकुत्सितत्वे सत्यपि लोकनयने सुन्दरत्वेन परिदृश्यमानं भवति, तथा दुर्जनोऽपि महदाश्रयप्रभावेण सुजनवत् प्रतीतो भवति न तस्य दौर्जन्यं कश्चित् सहसा उपलब्धुं शक्नोतीति भावः।

(१६२) आराध्यमान इति।—नृपतिः राजा, प्रयत्नात् सविशेषादरात्, अतीवाभिनिवेशपूर्व्वकमित्यर्थः, आराध्यमानः सेव्यमानः, अपीति शेषः, तोषं प्रीतिं, न आयाति न गच्छति, अत्र अस्मिन् विषये, किं चित्रम्? किम् आश्चर्य्यम्? किमप्याश्चर्य्यं नास्तीत्यर्थः। कथं नास्तीत्यत आह, अयमिति।—अत्र यदिति पदमध्याहरणीयम्; यतः अयन्तु राजा पुनः, अपूर्व्वः अदृष्टाभूतपूर्व्वः, प्रतिमाविशेषः प्रतिमूर्त्तिभेदः, यः सेव्यमानः पूज्यमानः, अपीति शेषः, रिपुतां शत्रुताम्, उपैति

तदयम् (ट) अशक्यार्थः प्रयत्नः। यतः,—

निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति।
अकारणद्वेषि मनस्तु यस्य वै
कथं जनस्तं परितोषयिष्यति ?॥ १६३॥

किं मया (ठ) अपकृतं राज्ञः ? अथवा निर्निमित्ताप-
कारिणो हि भवन्ति राजानः।" दमनको ब्रूते,—"एवमेवैतत्,
शृणु,—

विज्ञैः स्निग्धैरुपकृतमपि द्वेष्यतामेति कश्चित्
साक्षादन्यैरपकृतमपि प्रीतिमेवोपयाति।

---

प्राप्नोति, हरिहरादयो देवाः सेव्यमानाः प्रसन्ना एव भवन्ति, राजा
एतद्विपरीतस्वभाव एव, यत् सेव्यमानः शत्रुर्भवति, एतदेवास्य अपूर्वत्वं, तत
आराध्यमानस्यापि तस्य असन्तुष्टत्वे किमपि चित्रं नास्तीत्यर्थः ; यद्वा—किं चित्र
किमाश्चर्य्यम्! एतदेवाश्चर्य्यमित्यर्थः, यत् अत्र संसारे, नृपतिः आराध्यमानो
इत्यादि; "अतिगहना खलु राजसेवा" इति भावः। उपजातिः वृत्तम्।

(ट) अशक्यार्थः,—अशक्यः दुःसाध्यः, अर्थः प्रयोजनं यस्य सः, नि
इत्यर्थः।

(१६३) निमित्तमिति।—हि पादपूरणे ; यः जनः, निमित्तं कि
कारणम्, उद्दिश्य उपलक्ष्य, प्रकुप्यति क्रुध्यति, क्रोधपरवशो भवति इत्यर्थः, सं
चिदिति शेषः, ध्रुवं निश्चितं, स जनः, तस्य निमित्तस्य, अपगमे अपाये, नाशे
इत्यर्थः, प्रसीदति अनुगृह्णाति, प्रसन्नो भवतीत्यर्थः, तु किन्तु, यस्य मनः चित्त
अकारणद्वेषि निर्निमित्तवैरभावापन्नम्, अनिष्टाचरणादिकं विनाऽपि विरोधवुद्धि
यावत्, जनः लोकः, तं विद्वेष्टारं, कथं केन प्रकारेण, परितोषयिष्यति ? प्रसाद
ष्यति ?, न केनापि प्रकारेण तं तोषयितुं शक्यतीत्यर्थः ; अप्रतिकार्य्योऽयं दुर्जन इ
भावः। वंशस्थविलं वृत्तम्।

(ठ) अपकृतम्—अनिष्टमाचरितम्।

(१६४) गदास्थं कारणमेव दर्शयति, विज्ञैरिति।—कश्चित् जनः प्रभु
विज्ञैः विद्वद्भिः, तथा स्निग्धैः प्रीतिभाजनैः, स्निग्धैः विज्ञैरिति वा, कृतमिति उप

चित्रं चित्रं किमथ चरितं नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनामप्यगम्यः॥ १६४॥

उपकृतमपि उपकारमपि, [ "कृदभिहितभावो द्रव्यवत् प्रकाशते" इति नियमात् भावविहितस्य उपकृतस्य उपकारार्थकत्वं मन्तव्यम् ] द्वेष्यतां द्वेषविषयताम्, एति गच्छति, नयतीत्यर्थः, अप्रियत्वेन गणयतीति यावत्, [ "सर्वे गत्यर्थाः प्राप्त्यर्थाः" इत्यनुशासनात् एतेरत्र प्राप्त्यर्थकत्वम् ] तथा अन्यैः अविज्ञैरस्निग्धैः, साक्षात् प्रत्यक्षम्, अपकृतमपि कृतमपकारमपि, प्रीतिमेव सन्तोषमेव, उपयाति गच्छति, प्रीतिविषयतां नयतीत्यर्थः, प्रियत्वेन गणयतीति यावत् [ अत्रापि पूर्ववत् समाधेयम् ] यद्वा अत्र— "लब्ध्वा तं प्रति" इत्यध्याहार्य्यम्; तथाच, विज्ञैः स्निग्धैरुपकृतं लब्ध्वाऽपि तं प्रति कश्चित् द्वेष्यतामेति, अन्यैः साक्षादपकृतं लब्ध्वाऽपि तं प्रति प्रीतिमेवोपयाति। ("कश्चित्" इत्यत्र "कस्य" इति पाठकल्पने सर्वं समञ्जसं स्यात्, तथाच विज्ञैः स्निग्धैः कृतमुपकृतमपि उपकारोऽपि, कस्य कस्यचित् सम्बन्धे इत्यर्थः, द्वेष्यतामेति, तथा अन्यैः साक्षात् कृतमपकृतमपि अपकारोऽपि, कस्य सम्बन्धे प्रीतिमेवोपयाति ) ननु उपकृतमपि द्वेष्यत्वम् अपकृतमपि प्रियत्वं याति, कथमीदृशविसदृशव्यवहारः सम्भवतीत्याह, चित्रमिति।—यतः नैकभावाश्रयाणाम् अस्थिरस्वभावानाम्, अव्यवस्थितचित्तानामित्यर्थः, चरितं चरित्रं, चित्रम् अद्भुतं, विस्मयकरमित्यर्थः, चित्रत्वेन पूर्वोक्तविसदृशव्यवहारः तेषां सम्भवतीति भावः; अथ अथवा, किं चित्रम्? अत्र किमद्भुतम्? किमपि चित्रं नास्तीत्यर्थः, नैकभावाश्रयाणामेष एव स्वभावः, तस्मात् न विस्मयकारणं किमपीति भावः; यद्वा—नैकभावाश्रयाणां चरितं चित्रं चित्रम् अतीवाद्भुतमित्यर्थः, [ "नित्यवीप्सयोः" (८।१।४ पा०) इति द्विर्भावः, विस्मयाधिक्यद्योतनार्थं द्विर्भावो वा ] अथ कार्त्स्न्येन, सर्व्वथा इत्यर्थः, ( "अथाथो संशये स्यातामधिकारे च मङ्गले। विकल्पानन्तरप्रश्नकार्त्स्न्यारम्भसमुच्चये" इति मेदिनी ) किं कुत्सितञ्च, निन्दनीयमित्यर्थः, ( "किं-शब्दः प्रश्नकुत्सयोः" इति शाश्वतः ) "किमथ" इत्यत्र "किमुत" इति पाठकल्पनं सुगमार्थकं, तथा च, नैकभावाश्रयाणां चरितं किमुत अतिशयेन, ( "किमुत प्रश्नतर्कयोः। विकल्पेऽतिशयेऽपि स्यात्" इति मेदिनी ) चित्रं चित्रम्; अत एव सेवाधर्मः प्रभुपरिचर्य्या, परमगहनः अतीवदुःखः, अतिशयेन दुःखकर इत्यर्थः, ( "गहनं कलिले विपु। नपुंसकं गह्वरे स्यात् दुःखकाननयोरपि" इति मेदिनी ) योगिनामपि तापसानामपि, योगबलेन प्रत्यक्षीकृतसर्वतत्त्वानामपीत्यर्थः, अगम्यः दुर्ज्ञेय इत्यर्थः; योगबलेन

अन्यच्च,—कृतशतमसत्सु नष्टं सुभाषितशतञ्च नष्टमबुधेषु।
वचनशतमवचनकरे बुद्धिशतमचेतने नष्टम्॥ १६५॥

किञ्च,—चन्दनतरुषु भुजङ्गा जलेषु कमलानि तत्र च ग्राहाः।
गुणघातिनश्च पिशुना भोगे न सुखान्यविघ्नानि॥ १६६॥

अन्यच्च,—
मूलं भुजङ्गैः कुसुमानि भृङ्गैः शाखाः प्लवङ्गैः शिखराणि भल्लैः।
नास्त्येव तच्चन्दनपादपस्य यन्नाश्रितं दुष्टतरैश्च हिंस्रैः॥१६७॥

---

भूतभविष्यद्वर्त्तमानज्ञानसम्पन्नैराराध्यमानः ईश्वरोऽपि कदाचित् आराधनया वशी क्रियते, न तु भूपतिरित्यहो राजमहिमा ! इति भावः। मन्दाक्रान्ता वृत्तम्।

(१६५) कृतशतमिति।—असत्सु असज्जनेषु, कृतशतं बहुविधमपि कार्यं, शतकृतः उपकारोऽपीत्यर्थः, नष्टं विफलम्; प्राप्तोपकारैरपि तैन कृतज्ञतास्वीकाराभावादिति भावः; अबुधेषु मूर्खेषु, हिताहितविचारानभिज्ञेषु इति यावत्, सुभाषितशतम् शतशः सदुपदेशोऽपि, नष्टम् अनर्थकम्, उपदेशग्रहणसामर्थ्याभावादिति भावः; अवचनकरे अनाश्रवे, अवधीरितहितवचने इत्यर्थः, जने इति शेषः, वचनशतं शतवाक्यानि, भूयोभूयः कृतोऽप्यादेश इत्यर्थः, तथा अचेतने चेतनाशून्ये, जड़े इत्यर्थः, बुद्धिशतं शतशः बुद्धिप्रदानं, विविधज्ञानोपदेशोऽपीत्यर्थः, नष्टं, सर्वञ्च भवतीति शेषः; अस्मिन्नकृतज्ञे वृथैव मम प्रयासः इति भावः। आर्य्या।

(१६६) जीवानां न कुत्राप्यभयमिति दर्शयति, चन्दनेति।—चन्दनतरुषु चन्दनवृक्षेषु, अनुलेपनार्थं व्यवहर्त्तव्येषु इति भावः; भुजङ्गाः सर्पाः, जलेषु कमलानि पद्मानि, सन्तीति शेषः, तत्र च तस्मिन्नेव कमलशोभितजले, ग्राहाः हिंस्रजलजन्तुविशेषाः, गुणघातिनः गुणविलोपिनः, पिशुनाः खलाः, सर्व्वत्र सन्तीति शेषः, खलाः हि गुणिनां गुणानपलपितुं सदैव तत्परा भवन्ति, अतः गुणिनामपि खलेभ्यः भयं विद्यते इत्यर्थः, अत एव भोगे राज्यादिसुखभोगे विषयभोगे वा, सुखानि सुखसाधनानीत्यर्थः, अविघ्नानि विघ्नरहितानि, न, भवन्तीति शेषः; जगति दुःखमेव सुखमिति भावः। सर्वथा पिशुनोऽयं खलो गुणघाती चेत्याशयः। आर्य्या।

(१६७) गुणवतामपि दुष्टात् भयं प्रदर्शयति, मूलमिति।—चन्दनपादपस्य चन्दनतरोः, मूलम् अधोदेशः, भुजङ्गैः सर्पैः, कुसुमानि पुष्पाणि, भृङ्गैः मधुकरैः, [ अत्र चन्दनकुसुमवर्णनं "न च कुसुमफले गन्धसारद्रुमाणाम्" इति दर्पणोक्तेः कविसमयविरुद्धमिति ध्येयम् ] शाखाः विटपानि, प्लवङ्गैः वानरैः, शिखराणि

अयं तावत् स्वामी (ड) वाङ्मधुरः (ढ) विषहृदयो मया ज्ञायते। यतः,—

दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्द्धासनो
गाढालिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्तादरः।
अन्तर्गूढविषो वहिर्मधुमयश्चातीव मायापटुः
को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः॥१९८॥

---

अवभागाः, भल्लैः भल्लूकैः, इत्थं चन्दनपादपस्य चन्दनवृक्षस्य, तत् तादृशम्, अङ्गम् इति शेषः, नास्ति एव न विद्यते एव, यत्, अङ्गमिति शेषः, दुष्टतरैः अतिदुष्टैः, हिंस्रैः क्रूरसत्त्वैः, भुजङ्गादिदुष्टप्राणिभिरित्यर्थः, न आश्रितं नावलम्बितं, नाक्रान्तमिति यावत्, ("दुष्टतरैश्च हिंस्रैः" इत्यत्र "दुष्टतरैः कुपङ्कैः" इति पाठे—कुपङ्कैः कुत्सिताचारैः पापैः, पापकारिभिरित्यर्थः, "पङ्कोऽस्त्री कर्दमे पापे" इति मेदिनी)। सज्जनोऽपि दुर्जनसमावृतः साधुभिरशक्यप्रवेशश्च इत्यहो विडम्बना विधातुः! इति भावः; अत एव गुणवतोऽपि भवतो निरपराधस्यापि हिंस्रप्रकृतेर्दुष्टादस्मादपकारशङ्का युज्यते एवेति तात्पर्य्यम्। इन्द्रवज्रा वृत्तम्।

(ड) वाङ्मधुरः,—मधुरभाषी, पयोमुख इति भावः।

(ढ) विषहृदयः,—विषं गरलं, विषवद्दूषितभाव इत्यर्थः, हृदये चेतसि यस्य सः, खलः इत्यर्थः, विषकुम्भ इति भावः; यद्वा—विषं विषपूर्णं, विषवदनिष्टोत्पादनतत्परमित्यर्थः, हृदयं यस्य सः।

(१९८) दूरादिति।—दूरात् दूरतः दृष्ट्वैव इत्यर्थः, उच्छ्रितौ उन्नमितौ, पाणी करौ, आह्वानार्थमालिङ्गनार्थं वा इति भावः, येन स तथोक्तः, आर्द्रे सजले, आनन्दबाष्पाकुले इत्यर्थः, नयने नेत्रे यस्य सः, प्रोत्सारितं प्रकर्षेण चालितं, विस्तारितमित्यर्थः, यद्वा—प्रोत्सारितं दूरीकृतं, परित्यक्तमित्यर्थः, आगन्तोरुपवेशनार्थमिति भावः; अर्द्धासनम् आसनार्द्धभागः येन सः, उपवेशयितुम् अर्द्धमासनं विस्तार्य्य प्रदत्तमित्यर्थः; अर्द्धासने उपवेष्टुं दत्तावकाशः इति भावः; गाढ़े निविड़े, आलिङ्गने आश्लेषणे, तत्परः प्रसक्तः, सुदृढ़मालिङ्गनावद्ध इत्यर्थः, प्रियकथाप्रश्नेषु मधुरसम्भाषणेषु कुशलपृच्छासु च, दत्तादरः कृताग्रहः, आग्रहसमन्वित इत्यर्थः, अत एव अन्तः अभ्यन्तरे, मनसीत्यर्थः, गूढम अन्यैरलक्षितं, विषं गरलं यस्य सः विषहृदयः; वहिः बाह्ये, वाक्यादौ इत्यर्थः, मधुमयः माधुर्य्यपूर्णः, मधुरव्यवहार इत्यर्थः, विषकुम्भपयोमुखवदिति भावः; अत एव अतीव मायापटुः कापट्यदक्षः; अयं स्वामीति

तथाहि,—

पोतो दुस्तरवारिराशितरणे दीपोऽन्धकारागमे
निर्वाते व्यजनं मदान्धकरिणां दर्पोपशान्त्यै सृणिः।
इत्थं तद्भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता
मन्ये दुर्जनचित्तवृत्तिहरणे धाताऽपि भग्नोद्यमः"॥१६

सञ्जीवकः पुनर्निश्वस्य स्वगतम्,—"कष्टं भोः! कथ
(घ) शस्यभक्षकः सिंहेन व्यापादयितव्यः? यतः,—

चूर्णकस्थेनान्वयः, भवतीति शेषः; तथा च, योऽयं कपटतया दूरादुन्नि... त्वादिरूपः इत्यर्थः, अपूर्व्वः अदृष्टाश्रुतपूर्व्वः, नाटकविधिः संसाररङ्गभूमौ ... प्रदर्शनीयव्यापारवत् व्यापारविशेषः इत्यर्थः, दुर्जनैः असज्जनैः, शिक्षितः ... सु को नाम? कीदृशो हि? नाम इति विस्मये अलीके वा, विश्वसं... व्यवहारः, सर्व्वथैव कपटतापूर्ण इति वा अर्थः; नटो यथा रामादिभूमिका... अतादृशोऽपि तादृशं व्यवहरति, अभिनयनैपुण्येन च रामादिवदेव प्रतीयते... खलोऽपि विषहृदयो वाङ्मधुरः सुजनवत् प्रतीयते, न तु तत्त्वतः सुजन इति ... विचित्ररूपा खलु दुर्जनचित्तवृत्तिः इति तात्पर्य्यम्। शार्दूलविक्रीडितं वृत्तम्।

(१६९) अशक्यप्रतीकारं हि दौर्जन्यमिति वक्तुमाह, पोत इति।—... वारिराशितरणे दुर्लङ्घ्यसमुद्रपारगमने, पोतः वहित्रम्, अर्णवयानमित्यर्थः, अन्धका... गमे ध्वान्ताविर्भावे, तमोनाशार्थमिति भावः; दीपः प्रदीपः, निर्वाते वायुशून्ये ... व्यजनं तालवृन्तादिकं, वाताभावजनितक्लेशोपशमनार्थमिति भावः; मदान्ध... मदमत्तगजानां, दर्पोपशान्त्यै अहङ्कारनाशाय, औद्धत्यवारणाय इत्यर्थः, ... अङ्कुशम्, इत्थम् अनेन प्रकारेण, विधिना विधात्रा, यस्य प्राणिनां क्लेशा... प्रतीकारार्हस्य विषयस्य, उपायचिन्ता प्रतिविधानं, न कृता न विहिता, न ... यावत्, भुवि भूतले, तत् तादृशं वस्तु, नास्ति न विद्यते, परन्तु मन्ये सम्भाव... धाताऽपि असाध्यसाधनपटुः विधिरपि, दुर्जनचित्तवृत्तिहरणे खलानां दौर्ज... दूरीकरणे, असतां मनःशुद्धिविधाने इत्यर्थः, भग्नोद्यमः विफलप्रयत्नः, अभूत्... शेषः; अन्यथा कथं दुर्जनमनसः प्रतीकारो नास्ति? इति भावः। ... अप्रतिकार्य्योऽयं दुर्ज्जनव्यवहार इति निष्कर्षः। शार्दूलविक्रीडितं वृत्तम्।

(घ) शस्यभक्षकः,—वृक्षादीनां फलमात्रभोजी, न तु मांसाशित्वात् ... हिंसाकारीत्यर्थः, कस्यापि अनपकारित्वात् सर्व्वथा निरपराध इति भावः।

ययोरेव समं वित्तं ययोरेव समं बलम् ।

तयोर्विवादो मन्तव्यो नोत्तमाधमयोः क्वचित्" ॥१७०॥

पुनर्विचिन्त्य आह,—"केनायं राजा ममोपरि (त) विकारितः न जाने । (थ) भेदमुपगताद्राज्ञः सदा भेतव्यम् । यतः,—

मन्त्रिणा पृथिवीपालचित्तं विघटितं क्वचित् ।

वलयं स्फटिकस्येव को हि सन्धातुमीश्वरः ? ॥ १७१ ॥

अन्यच्च,—वज्रञ्च राजतेजश्च द्वयमेवातिभीषणम् ।

एकमेकत्र पतति पतत्यन्यत् समन्ततः ॥ १७२ ॥

---

(१७०) समानशक्तिसम्पदोः विरोधाचरणस्य न्याय्यतां समर्थयते, ययोरिति ।— ययोरेव यादृशयोः द्वयोः हि, वित्तं सम्पत्, समं तुल्यं, ययोरेव यादृशयोः द्वयोः हि, बलं वीर्यं, समं तुल्यं, ("ययोः" "ययोः" इत्यत्र "द्वयोः" "द्वयोः" इति पाठान्तरम् ) तयोः तादृशयोः द्वयोरेव, विवादः विरोधः, प्रतिद्वन्द्विता इत्यर्थः, मन्तव्यः साधीयान् ज्ञातव्यः, उत्तमाधमयोः अधिकबलहीनबलयोः, क्वचित् कुत्रचिदपि स्थाने, न, विवादः मन्तव्य इति अनुषङ्गः ; तुल्यबलयोः विरोधस्यैव न्याय्यत्वादिति भावः ।

(त) विकारितः,—विकृतिं प्रापितः, विरक्तः कारित इत्यर्थः ।

(थ) भेदमुपगतात्—उपजातात्, भग्नस्नेहात् इति यावत् ।

(१७१) मन्त्रिणेति ।—क्वचित् कस्मिंश्चित् कर्मणि, कदाचिद्वा, मन्त्रिणा सचिवेन, विघटितं भेदं प्रापितं, कञ्चित् प्रति इति शेषः ; यद्वा—मन्त्रिणा सह विघटितं विश्लिष्टं, भेदं गतमित्यर्थः, अनैक्यभावापन्नमिति यावत्, पृथिवीपालस्य राज्ञः, चित्तं मनः, स्फटिकस्य स्फटिकमणेः, स्फटिकमणिनिर्मितमित्यर्थः, वलयं कटकमिव, भग्नस्फटिकमयकरभूषणमिव, कः हि जनः, सन्धातुं संयोजयितुम्, ईश्वरः समर्थः ? न कोऽपीत्यर्थः, हि अवधारणे प्रश्ने वा, ("हि पादपूरणे हेतौ विशेषेऽप्यवधारणे । प्रश्ने हेत्वपदेशे च सम्भ्रमासूययोरपि ॥" इति मेदिनी ) ।

(१७२) वज्रतेजसोऽपि राजतेजसः आधिक्यं दर्शयति, वज्रञ्चेति ।—वज्रञ्च कुलिशञ्च, इन्द्रास्त्रम् इत्यर्थः, राजतेजश्च राजप्रतापश्च, द्वयमेव एतत् उभयम् एव, अतिभीषणम् अतीव भयावहं, भवतीति शेषः, परन्तु एकं द्वयोरेव अतिभीषणत्वेऽपि तन्मध्ये एकं वज्रमित्यर्थः, एकत्र एकस्मिन्नेव स्थाने, जने वा, पतति, अन्यत् राजतेजः, समन्ततः समन्तात्, सर्व्वतो व्याप्येत्यर्थः, सपुत्रकलत्रे क्रोधपात्रे इति भावः ; पतति प्रसृतं भवति, वज्राग्नेरपि तीव्रतरो राजरोषाग्निः इति भावः ।

तत् संग्रामे (द) मृत्युरेवाश्रीयतामिति वरम्, इदानीं (ध) तदाज्ञानुवर्त्तनमयुक्तम्। यतः,—

मृतः प्राप्नोति वा स्वर्गं शत्रुं हत्वा सुखानि वा।
उभावपि हि शूराणां गुणावेतौ सुदुर्लभौ॥ १७३॥

अन्यच्च,—आहवेषु मिथोऽन्योऽन्यं जिघांसन्तो महीक्षितः।
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः॥ १७४॥

युद्धकालश्चायम्,—

यत्रायुद्धे ध्रुवं नाशो युद्धे जीवितसंशयः।
तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः॥ १७५॥

---

(द) मृत्युरित्यादि—मरणमेवावलम्ब्यतामित्यपि मनाक्प्रियमित्यर्थः।

(ध) तदाज्ञानुवर्त्तनम्—तस्य आदेशानुपालनं, परिचरणमित्यर्थः।

(१७३) आत्मसन्देहे वीराणां युद्धकरणस्य श्रेयस्त्वं दर्शयति, मृत इति।—मृतः युद्धे निहतः सन्, स्वर्गं सुरलोकं, प्राप्नोति लभते वा, जीवितः शत्रुम् अरिं, हत्वा विनाश्य, सुखानि विजयलाभजनितानि सुखसाधनानि धनरत्नादीनि, प्राप्नोति, वाद्वयं विकल्पार्थकम्; शूराणां वीराणाम्, एतौ उभौ अपि मरणशत्रुहननात्मकावपि, सुदुर्लभौ अतिदुष्प्रापौ, गुणौ ऐहिकामुष्मिकश्रेयस्करौ इत्यर्थः, युधि वीराणां जीवनमरणयोः समानश्रेयःसाधनत्वात् मरणालम्बनमपि न हानिकरमस्माकमिति भावः। ("हतोऽपि लभते स्वर्गं हत्वा च लभते यशः। उभयं नो बहुगुणं नास्ति निष्फलता रणे॥" इति भारतस्त्रीपर्वीयपाठः)।

(१७४) मनुसंहितायाः ७माध्यायोक्तवचनं समुद्धृत्य युद्धे अपराङ्मुखत्वस्य गुणवत्त्वमाह, आहवेष्विति।—आहवेषु युद्धेषु, अन्योऽन्यं परस्परं, जिघांसन्तः हन्तुमिच्छन्तः, महीक्षितः राजानः, अपराङ्मुखाः युद्धादप्रतिनिवृत्ताः सन्तः, शक्त्या सामर्थ्येन, निजनिजसामर्थ्यानुसारेणेत्यर्थः, मिथः परस्परं, युध्यमानाः संग्रामयन्तः, परं स्वर्गं स्वर्गादपि उत्कृष्टं स्थानं, वीरलोकमित्यर्थः, यान्ति गच्छन्ति, वीरोचितं मरणं वाञ्छनीयं वीराणामिति भावः। श्लोकोऽयमधिकपदतादोषदुष्टो मुद्रितपुस्तकान्तरे न दृश्यते।

(१७५) यत्रेति।—यत्र यस्मिन् काले यस्मिन् स्थले वा, अयुद्धे युद्धाकरणे, नाशः मृत्युः, ध्रुवं निश्चितं, युद्धे रणे च, युद्धकरणे चेत्यर्थः, जीवितसंशयः जीवितनाशे

यतः,—अयुद्धे हि यदा पश्येन्न किञ्चिद्धितमात्मनः ।
युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह ॥ १७६ ॥
जये च लभते लक्ष्मीं मरणेऽपि सुराङ्गनाम् ।
क्षणविध्वंसिनः कायाः का चिन्ता मरणे रणे ?" ॥१७७॥

एतच्चिन्तयित्वा सञ्जीवकः आह,—"भो मित्र ! कथमसौ मां जिघांसुरिति ज्ञातव्यम् ?" । दमनको ब्रूते,—"यदाऽसौ (न) स्तब्धकर्णः (प) समुद्धतलाङ्गूलः समुन्नतचरणो (फ) विवृतास्यस्त्वां पश्यति, तदा त्वमपि स्वविक्रमं दर्शयिष्यसि । यतः,—

---

मरिष्यामि वेति सन्देहः, भवतीति शेषः, मनीषिणः पण्डिताः, तमेव पूर्वोक्तप्रकारमेव, युद्धस्य विग्रहस्य, कालम् उपयोगिसमयं, प्रवदन्ति कथयन्ति; अयञ्च कालः तादृश इति भावः ।

(१७६) अयुद्धे इति ।—यदा यस्मिन् काले, प्राज्ञः बुद्धिमान्, युद्धविद्याविशारदः इति यावत्, जनः इति शेषः, अयुद्धे युद्धाकरणे, आत्मनः स्वस्य, किञ्चित् स्तोकमपि, हितम् इष्टं, न पश्येत् न अवलोकयेत्, न बुध्येत इत्यर्थः, तदा रिपुणा सह शत्रुणा सह, युध्यमानः युद्धे प्रवर्त्तमानः सन्, म्रियते मृत्युं प्राप्नोति; यदा युद्धाकरणेऽपि जीवनरक्षणोपायं न पश्येत्, तदा युद्ध्वा विपक्षैः सह मरणमपि श्रेयो मन्येत इति भावः ।

(१७७) जये इति ।—जये च विजयलाभे तु, लक्ष्मीं सम्पदं, लभते प्राप्नोति, मरणे मृत्यौ सत्यपि, सुराङ्गनाम् अप्सरसमित्यर्थः, स्वर्गप्राप्तिः इति भावः; लभते इत्यनेनान्वयः, कायाः शरीराणि, क्षणविध्वंसिनः क्षणविनाशिनः, अनित्या इति यावत्, एवं सति मरणे प्राणत्यागे, रणे युद्धे च, का चिन्ता ? का भावना ? किं भयमिति यावत्; यदा देहस्य नाशः अवश्यम्भावी एव, तदा मरणात् रणात् वा भयेन किमपि फलं नास्ति अवश्यमेव योद्धव्यमिति भावः ।

(न) स्तब्धकर्णः,—स्तब्धौ निश्चलौ कर्णौ यस्य सः, समुन्नतकर्णः ।

(प) समुद्धतलाङ्गूलः,—समुद्धतं समुन्नतं लाङ्गूलं पुच्छं यस्य सः ऊर्द्ध्वोत्क्षिप्तपुच्छः, प्रचण्डतया आस्फालितपुच्छ इत्यर्थो वा । समुन्नतचरणः,—समुन्नतौ सम्यक् ऊर्द्ध्वीकृतौ चरणौ पादौ येन सः ऊर्द्ध्वोत्तोलिताग्रपादः, अग्रपादद्वये भरं कृत्वा उपविष्ट इत्यर्थः ।

(फ) विवृतास्यः,—व्यात्ताननः, कृतमुखव्यादानः इत्यर्थः ।

बलवानपि निस्तेजाः कस्य नाभिभवास्पदम् ?।
निःशङ्कं दीयते लोकैः पश्य भस्मचये पदम्॥ १७८॥

किन्तु सर्वमेतत् (ब) सुगुप्तमनुष्ठातव्यं, नो चेत् (भ) न त्वं नाहम्" इत्युक्त्वा दमनकः करटकसमीपं गतः। करटकेनोक्तम्, —"किं (म) निष्पन्नम् ?"। दमनकेनोक्तम्,—"निष्पन्नोऽनयो-रन्योऽन्यभेदः।" करटको ब्रूते,—"कोऽत्र सन्देहः ? यतः,—

बन्धुः को नाम दुष्टानां ? कुप्येत् को नातियाचितः ?।
को न दृप्यति वित्तेन ? कुकृत्ये को न पण्डितः ? ॥१७९॥

---

(१७८) बलवानिति।—बलवान् अपि शक्तिसम्पन्नोऽपि, निस्तेजाः तेजोहीनः, कस्य जनस्य, सकाशे इति शेषः, न अभिभवास्पदम् ? न पराजयस्थानम् ? अपि तु इति शेषः, सर्व्वस्यैव भवति इत्यर्थः. बलसत्त्वेऽपि सर्वेषामेव अवज्ञाभाजनं भवति इति भावः; तथाहि पश्य जानीहि इत्यर्थः, लोकैः जनसाधारणैः इत्यर्थः, भस्मचये भस्मराशौ, निःशङ्कं निर्भयं यथा तथा, तेजोहीनत्वादिति भावः; पदं चरणं, दीयते अर्प्यते, सर्व्वभूतदाहकस्य महाप्रतापस्य अग्नेरपि भस्मपरिणतिरूपा तेजोहीनावस्था अभिभवकारिणीति निष्कर्षः।

(ब) सुगुप्त—सुप्रच्छन्नं यथा तथा, गोपनभावेनेत्यर्थः। अनुष्ठातव्यं—कर्त्तव्यमित्यर्थः, कस्मैचित् न प्रकाशनीयमिति भावः। [अनु+स्था+तव्य "उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्था—" (८।३ ६५ पा०) इति षत्वम्]।

(भ) न त्वं नाहं, जीवामि इति शेषः, पिङ्गलककोपेन द्वावप्यावां मरिष्यावः इत्यर्थः।

(म) निष्पन्नम् ?—सिद्धम् ? समीहितं ते सफलं जातम् ? इत्यर्थः।

(१७९) बन्धुरिति।—कः जनः, दुष्टानां दुर्वृत्तानां, बन्धुः मित्रं, नाम ! इति प्रश्ने; न कोऽपि इत्यर्थः; अतियाचितः पुनः पुनः प्रार्थितः सन्, कः जनः, न कुप्येत ? न क्रोधपरवशो भवेत् ? अपि तु सर्वं एव कुप्येदित्यर्थः, को जनः, वित्तेन सम्पदा, न दृप्यति ? न गर्वितो भवति ? अपि तु सर्व्व एव अहङ्कृतो भवतीत्यर्थः, कुकृत्ये कुकार्य्ये, परहिंसादौ इत्यर्थः, कः जनः, न पण्डितः ? न दक्षः ? अपि तु सर्व्व एव; परानिष्टकरत्वेन कुकृत्यत्वात् कर्म्मण्यस्मिन् त्वं सुदक्ष एव, अतस्तत्र तव सामर्थ्ये मम सन्देहो नास्तीति भावः।

अन्वय,—दुर्वृत्तः क्रियते धूर्त्तैः श्रीमानात्मविवृद्धये।

किं नाम खलसंसर्गः कुरुते नाश्रयाशवत्?" ॥ १८० ॥

ततो दमनकः पिङ्गलकसमीपं गत्वा,—"देव! समागतोऽसौ (य) पापाशयस्तत् (र) सज्जीभूय स्थीयताम्" इत्युक्त्वा (ल) पूर्वोक्ताकारं कारयामास। सञ्जीवकोऽप्यागत्य तथाविधं विकृताकारं सिंहं दृष्ट्वा स्वानुरूपं विक्रमं चकार। ततस्तयोः प्रवृत्ते (व) महाऽऽहवे सञ्जीवकः सिंहेन व्यापादितः। अथ पिङ्गलकः सञ्जीवकं सेवकं व्यापाद्य विश्रान्तः सशोक इव (श) आसीनः ब्रूते च—"किं मया (ष) दारुणं कर्म कृतम्? यतः,—

परैः सम्भुज्यते राज्यं स्वयं पापस्य भाजनम्।

धर्मातिक्रमतो राजा सिंहो हस्तिवधादिव ॥ १८१ ॥

---

(१८०) दुर्वृत्त इति।—धूर्त्तैः शठैः, आत्मविवृद्धये निजोन्नतिसम्पादनार्थम्, आत्मदुरभिसन्धिसाधनार्थमित्यर्थः, श्रीमान् धनसम्पन्नो लोकः, दुर्वृत्तः दुराचारः, दुःशील इत्यर्थः, क्रियते, धूर्त्ताः स्वार्थसिद्धये श्रीमन्तमपि स्वानुरूपं दुर्वृत्तं करोतीत्यर्थः, तथाहि खलसंसर्गः असत्सङ्गतिः, आश्रयाशवत् आश्रयम् आधारम्, अश्नाति दहतीत्याश्रयाशः वह्निः तद्वत्, ("आश्रयाशो हृदशानुः कृशानुः पावकोऽनलः" इत्यमरः) किं नाम नाम इति सम्भावनायाम्, अनिष्टम् इति शेषः, न कुरुते? न विदधाति? प्रत्युत सर्वानेवानर्थान् साधयितुं शक्नोतीत्यर्थः, ज्वलदग्निर्यथा निखिलमेव विश्वं भस्मीकर्त्तुं शक्नोति, तथा खलसंसर्गोऽपि संसर्गिणं सर्व्वथा विकरोति, न हि किमपि अकार्य्यं दुर्जनानामिति भावः। अत्र "आश्रयाश" पदेन आश्रयदातारमपि दुर्ज्जना विनिघ्नन्ति इति ध्वन्यते।

(य) पापाशयः,—दुष्टचित्तः।

(र) सज्जीभूय—सन्नद्धीभूय, आक्रमणोद्यतः सन्नित्यर्थः।

(ल) पूर्वोक्ताकारं—सञ्जीवकायोपदिष्टं स्तब्धकर्णत्वाद्याकारम्।

(व) महाऽऽहवे—महायुद्धे।

(श) आसीनः,—उपविष्टः। [आस+शानच्]।

(ष) दारुणं—भीषणं, निष्ठुरम् इति यावत्।

(१८१) परैरिति।—राजा नृपः, हस्तिवधात् गजव्यापादनात्, सिंह इव

अपरञ्च,—भूम्येकदेशस्य गुणान्वितस्य
भृत्यस्य वा बुद्धिमतः प्रणाशः।
भृत्यप्रणाशो मरणं नृपाणां
नष्टाऽपि भूमिः सुलभा न भृत्याः" ॥ १८२॥

दमनको ब्रूते,—"स्वामिन्! कोऽयं नूतनो (स) न्यायः, यत् (ह) अरातिं हत्वा सन्तापः क्रियते? तथा ह्युक्तम्,—

पिता वा यदि वा भ्राता पुत्रो वा यदि वा सुहृत्।
प्राणच्छेदकरा राज्ञा हन्तव्या भूतिमिच्छता ॥ १८३॥

---

पशुराज इव, धर्मातिक्रमतः धर्मोल्लङ्घनात, राज्यरक्षणार्थं युद्धे प्राणिवधादिरूप-धर्माचरणादित्यर्थः, स्वयम् आत्मना, पापस्य हिंसाद्यनुष्ठानजनितस्य कलुषस्य, भाजनं पात्रं, भवति, राज्यं सुशासनजनितं राज्यवाससुखमित्यर्थः, परैः अन्यैः, अनुजीविभिरित्यर्थः, सम्भुज्यते अनुभूयते, न तु राज्ञेति भावः; सिंहो यथा पशुं निहत्य अनुजीविनाम् उदरपूरणविधिं कुर्व्वन् प्राणिवधपापेन पापी भवति, तथा राजाऽपि अरिकुलं विनिहत्य प्रकृतिपुञ्जानां सुखं विधाय स्वयं नरहत्यापातकेन पातकी भवति इति भावः।

(१८२) भूमीति।—गुणान्वितस्य सर्व्वगुणोपेतस्य, बुद्धिमतः विवेकधीसम्पन्नस्य, भृत्यस्य अनुजीविनः, प्रणाशः मृत्युः, गुणान्वितस्य सर्व्वशस्याढ्यस्येत्यर्थः, भूम्येकदेशस्य राज्यांशस्य, प्रणाशो वा अपहरणमिव, अन्यहस्तगमनम् इवेत्यर्थः, ("इवत् वाययाशब्दौ" इत्युक्तेः) परन्तु भृत्यप्रणाशः तादृशस्य भृत्यस्य अभावः, नृपाणां राज्ञां, मरणं मृत्युतुल्यक्लेशावह इत्यर्थः; कुतः? इत्याह—भूमिः राज्य, नष्टाऽपि अपहृताऽपि सती, सुलभा पुनरपि लब्धुं शक्या, भृत्याः अनुजीविनस्तु, नष्टा मृताश्चेत्, न, सुलभा इत्यनुषङ्गः; तन्मया अकार्य्यं कृतमिति भावः। ("प्रणाशः" इत्यत्र "प्रणाशे" इति पाठे—वा-शब्दः चकारार्थकः, तथा च—गुणान्वितस्य भूम्येकदेशस्य बुद्धिमतः भृत्यस्य च प्रणाशे प्रणाशविषये, एतदुभयोर्मध्ये इदं, भृत्यप्रणाशो नृपाणां मरणमित्यादि)। इन्द्रवज्रा वृत्तम्।

(स) न्यायः,—नीतिः, नियम इति यावत्।

(ह) अरातिं—शत्रुम्।

(१८३) महाभारतशान्तिपर्व्वीयापद्धर्म्मव्याख्यानप्रकरणोक्तं श्लोकमवलम्ब्य

अपि च,—धर्मार्थकामतत्त्वज्ञो नैकान्तकरुणो भवेत्।
न हि हस्तस्थमप्यर्थं क्षमावान् रक्षितुं क्षमः॥ १८४॥
किञ्च,—क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम्।
अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम्॥ १८५॥
अपरञ्च,—राज्यलोभादहङ्कारादिच्छतः स्वामिनः पदम्।
प्रायश्चित्तं हि तस्यैकं जीवोत्सर्गो न चापरम्॥ १८६॥

---

सर्वथा जिघांसुर्हन्तव्य इत्याह, पितेति।—पिता जनको वा, यदि वा अथवा, भ्राता सहोदरः, पुत्रो वा सुतो वा, यदि वा अथवा, सुहृत् मित्रम्, एते अपि प्राणच्छेदकराः प्राणनाशोद्यताः चेत्, भूतिं सम्पदम्, इच्छता अभिलषता, राज्ञा नृपेण, हन्तव्याः अवश्यमेव वध्याः, का कथा परेषाम्? इत्यर्थः, अतोऽत्र नानुशोचितव्यमिति भावः। (महाभारते "पिता" इत्यत्र "पुत्रः" "पुत्रः" इत्यत्र "पिता" "प्राणच्छेदकरा राज्ञा" इत्यत्र "अर्थस्य विघ्नं कुर्वाणाः" इति पाठव्यतिकरः)।

(१८४) धर्मेति।—धर्मः अहिंसादिः, अर्थः अर्जनवर्द्धनसंरक्षणादिसाध्यं धनं, कामः विषयभोगाभिलाषः ते तेषां, त्रिवर्गस्य इत्यर्थः, तत्त्वज्ञः रहस्यवित्, जनः इति शेषः, एकान्तकरुणः अत्यन्तदयालुः, न भवेत् न स्यात्, हि यतः, क्षमावान् अत्यन्तक्षमाशीलो जनः, एकान्तकरुण इति भावः; हस्तस्थमपि करतलगतमपि, अर्थं धनं, रक्षितुं स्वाधिकारे स्थापयितुं, न क्षमः न समर्थः, भवतीति शेषः। ("अर्थम्" इत्यत्र "अन्नम्" इति तथा "रक्षितुम्" इत्यत्र "भक्षितुम्" इति पाठान्तरम्)।

(१८५) क्षमेति।—शत्रौ रिपौ च, मित्रे सुहृदि च, क्षमा तितिक्षाप्रदर्शनमित्यर्थः, यतीनामेव तापसानामेव, विषयभोगे वीतस्पृहाणामेवेति यावत्, न पुनः गृहिणामिति भावः; भूषणम् अलङ्कारः, प्रशंसनीयेति यावत्, नृपाणां राज्ञाम्, अपराधिषु कृतापराधेषु, सत्त्वेषु प्राणिषु, सा क्षमा, दूषणमेव दोषावहा एव, तथात्वे राज्यरक्षणमशक्यं स्यादिति भावः।

(१८६) राज्येति।—राज्यलोभात् राजलक्ष्मीलिप्सायाः, राजपदलाभे उत्कटेच्छायाः इत्यर्थः, अहङ्कारात् स्वाम्यपेक्षया राज्यकार्ये अहं दक्ष इत्यभिमानात् वा, स्वामिनः प्रभोः, पदम् अधिकारम्, इच्छतः अभिलषतः, तस्य तादृशस्य, तथाविधपापात्मनः भृत्यस्य इत्यर्थः, ("तस्य" इत्यत्र "तत्र" इति पाठे—इच्छतः, भृत्यस्येति शेषः, तत्र तथाविधपापेच्छायामित्यर्थः) जीवोत्सर्गः प्राणविनाश एव, एकम्

अन्यच्च,—राजा घृणी ब्राह्मणः सर्वभक्षः
स्त्री चावशा दुष्प्रकृतिः सहायः।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी
त्याज्या अमी यश्च कृतं न वेत्ति ॥ १८७॥

विशेषतश्च,—सत्याऽनृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या।
नित्यव्यया प्रचुररत्नधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा" ॥ १८८॥

---

अद्वितीयं, प्रायश्चित्तं पापक्षयसाधनं विधिबोधितं कर्म्म, अपरम् अन्यत् किं न च नैव, प्रायश्चित्तमिति योजना, जीवनदण्ड एव तादृशपापस्य प्रतीकारः

(१८७) एकान्तकरुणो राजा न राजपदमर्हतीति वक्तुं कांश्चित् त्याज्यान् राजेति।—घृणी दयालुः, अत्यन्तकरुणः इति यावत्। ("कारुण्यं करुणा घृणा दयाऽनुकम्पा स्यात्" इत्यमरः) राजा भूपतिः, सर्व्वभक्षः भक्ष्याभक्ष्यभुक्, लुब्ध इत्यर्थः, खाद्याखाद्यविचारवर्जित इति यावत्, ब्राह्मणः विप्रः, अवशा प्रतिकूलचारिणी, स्त्री च भार्य्या च, दुष्प्रकृतिः असच्चरित्रः, सहायः सहचरः, प्रतीपः प्रतिकूलः विरुद्धाचारी इत्यर्थः, प्रेष्यः किङ्करः, प्रमादी अनवहितः, कर्त्तव्यपराङ्मुख इति यः अधिकृतः राजकार्य्ये नियुक्तः पुरुषः, यश्च जनः, कृतम् उपकृतं, न वेत्ति न जानाति कृतघ्न इत्यर्थः, अमी ईदृशाः, एते नृपादयः इत्यर्थः, त्याज्याः परिहार्य्याः, सदोषत्वात् सदोषस्य च परिग्रहणानौचित्यादिति भावः। अत्र प्रथमपादे आर्षी नाम गायत्रीच्छन्दः, अपरपादत्रये तु गायत्रीभेदः। इन्द्रवज्रा वृत्तम्।

(१८८) सत्येति।—नृपनीतिः राजनीतिः, वाराङ्गना वारविलासिनी वेश्येव इत्यर्थः, अनेकरूपा विविधरूपधारिणी, प्रयोजनानुरोधात् इति भावः; भवति इति शेषः; कीदृशी? इत्याह,—सत्या कदाचित् सत्यवादिनी, कदाचिदिति सर्व्वत्राध्याहार्य्यं अन्वेतव्यम्; अनृता कदाचित् मिथ्यावादिनी च, परुषा कठोरभाषिणीत्यर्थः, प्रियवादिनी च मधुरभाषिणी च, हिंस्रा युद्धादौ प्राणिवधादिभिः हिंसारता, दयालुः कृपाप्रदर्शनपरा अपि, अर्थपरा धनग्रहणतत्परा, वदान्या दानशीला च, नित्यव्यया राज्यरक्षणादिहेतोः सदा व्ययशीला, प्रचुराणां रत्नमणिमाणिक्यादीनां, धनानाम् अर्थानाञ्च, आगमो लाभो यस्याः सा तथोक्ता

इति (क) कपटवचनेन दमनकेन सन्तोषितः स्वां प्रकृतिमापन्नः पिङ्गलकः सिंहासने समुपविष्टः । दमनकः प्रहृष्टमना भूत्वा,—(ख) "विजयतां महाराजः, शुभमस्तु सर्वजगताम्" इत्युक्त्वा यथासुखमवस्थितः ।

[ इति वणिग्-वृषभ सिंह-शृगालद्वयकथा ] ।

विष्णुशर्मा उवाच,—"सुहृद्भेदः श्रुतस्तावद्भवद्भिः ?" । राजपुत्रा ऊचुः,—"भवत्प्रसादात् श्रुत्वा सुखिनो वयम्" । विष्णुशर्मा अब्रवीत्,—"अपरमपि इदमस्तु,—

सुहृद्भेदस्तावद्भवतु भवतां शत्रुनिलये
खलः कालाकृष्टः प्रलयमुपसर्पत्वहरहः ।
जनो नित्यं भूयात् सकलसुखसम्पत्तिवसतिः
कथाऽऽरामे रम्ये सततमिह बालोऽपि रमताम् ॥ १८९ ॥

इति हितोपदेशे सुहृद्भेदो नाम द्वितीयः कथासङ्ग्रहः ।

---

वाराङ्गना अपि ईदृश्येव भवति, अतो नृपनीतेर्वाराङ्गनासादृश्यमवगन्तव्यमिति भावः । वसन्ततिलकं वृत्तम् ।

(क) कपटवचनेन—छलपूर्णवाक्येन ।

(ख) विजयतां—सर्वोत्कर्षेण वर्त्तताम् । [ "विपराभ्यां जेः" (१।३।१९ पा०) इति आत्मनेपदम् ] ।

(१८९) परिच्छेदान्ते आशीः कार्य्येति आह, सुहृद्भेद इति ।—भवतां युष्माकं, शत्रुनिलये वैरिगृहे, तावत् साकल्येन, सुहृद्भेदः मित्रेण सह भेदसङ्घटनं, शत्रूणां बन्धुविच्छेद इत्यर्थः, भवतु, न तु युष्माकमित्यभिप्रायः ; खलः क्रूरो जनः, कालाकृष्टः यमवशवर्त्ती सन्, अहरहः प्रतिदिनं, प्रलयं नाशम्, उपसर्पतु प्राप्नोतु, जनः लोकः, युष्माकं राज्ये स्थितः इत्यर्थः, नित्यं सर्वदैव, सकलसुखसम्पत्तिवसतिः सकलानां सर्वविधानां, सुखानां सम्पत्तीनां सम्पदाञ्च, वसतिः आवासस्थानं, निखिलसुखैश्वर्य्यास्पदं, भूयात् भवतु, इह अस्मिन्, रम्ये रमणीये, चित्तविनोदने इति यावत्, कथा नीतिकथैव, आरामः उपवनं तस्मिन्, ("आरामः स्यादुपवनम्" इत्यमरः) उपवनरूपे हितोपदेशे ग्रन्थे इत्यर्थः, बालोऽपि अपरिणतबुद्धिरपि, किमुत परिणतबुद्धिः इति भावः ; सततं निरन्तरं, रमतां क्रीड़तु, विहरतु इत्यर्थः, प्रीतिमनुभवतु इति यावत् ।

# विग्रहः ।

अथ पुनः कथाऽऽरम्भकाले राजपुत्रैरुक्तम्,—"आर्य! राजपुत्रा वयं, तत् (क) विग्रहं श्रोतुं नः कुतूहलमस्ति।" विष्णुशर्मा उवाच,—"यदेव (ख) भवद्भ्यो रोचते तत् कथयामि। विग्रहः श्रूयतां, यस्य अयमाद्यः श्लोकः,—

हंसैः सह मयूराणां विग्रहे तुल्यविक्रमे ।
विश्वास्य वञ्चिता हंसाः काकैः स्थित्वाऽरिमन्दिरे" ॥ १ ॥

राजपुत्रा ऊचुः,—"कथमेतत् ?" । विष्णुशर्मा कथयति,—

हंस-मयूरकथा ।—

"अस्ति कर्पूरद्वीपे ( ग ) पद्मकेलिनामधेयं सरः। तत्र

---

[ सर्वत्र "आशिषि लिङ्लोटौ" ( ३।३।१७३ पा० ) इत्याशीरर्थे लोट्। शिखरिणी वृत्तम्।

इति श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्यकृता सुहृद्भेदव्याख्या ॥ २ ॥

---

( क ) विग्रहं,—युद्धम् ।

( ख ) भवद्भ्यः,—युष्मभ्यम् । [ "रुच्यर्थानां प्रीयमाणः" ( १।४।३३ पा० ) इति चतुर्थी ] ।

( १ ) हंसैरिति।—हंसैः जलचरैः पक्षिविशेषैः सह, मयूराणां शिखिनां, तुल्यः समरूपः, विक्रमः बलसम्पत्, अभिमर्दोद्योग इत्यर्थः, यस्मिन् तस्मिन् सदृशपराक्रमे विग्रहे युद्धे, काकैः वायसैः, अरिमन्दिरे शत्रुदुर्गे, हंसावासे इत्यर्थः, स्थित्वा उषित्वा विश्वास्य प्रत्याययित्वा, हंसानाम् आत्मीयत्वेन विश्वासमुत्पाद्य इत्यर्थः, हंसाः वञ्चिताः प्रतारिताः, पराजिताः इति यावत् ; वीर्य्यवन्तोऽपि हंसाः विश्वासघातकस्य शत्रोः दुष्टस्य कौशलेन पराजयं प्राप्ता इति निष्कर्षः।

( ग ) पद्मकेलिनामधेयं—पद्मकेलिनामकम् । [ "भागरूपनामभ्यः धेयः" ( वा० ) इति स्वार्थे धेयप्रत्ययः ] ।

हिरण्यगर्भो नाम (घ) राजहंसः प्रतिवसति। स च सर्वैर्जलचरैः पक्षिभिर्मिलित्वा पक्षिराज्येऽभिषिक्तः। यतः,—

यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा।
अकर्णधारा जलधौ विप्लवेतेह नौरिव॥ २॥

अपरञ्च,—प्रजां संरक्षति नृपः सा वर्द्धयति पार्थिवम्।
वर्द्धनाद्रक्षणं श्रेयस्तदभावे सदप्यसत्॥ ३॥

एकदा असौ राजहंसः (ङ) सुविस्तीर्णकमलपर्य्यङ्के सुखासीनः परिवारपरिवृतः तिष्ठति। ततः (च) कुतोऽपि देशादागत्य दीर्घमुखो नाम वकः प्रणम्य उपविष्टः। राजा उवाच,—"दीर्घमुख! देशान्तरादागतोऽसि, वार्त्तां कथय?"।

---

(घ) राजहंसः,—लोहितचञ्चुचरणः श्वेतवर्णः हंसश्रेष्ठः। [हंसानां राजा इति विग्रहे राजदन्तादिवत् पूर्व्वनिपातः]।

(२) शुक्रनीतेः कामन्दकनीतेश्च वचनमुपन्यस्य सुशासकस्य आवश्यकतां प्रतिपादयति, यदीति।—इह भूतले, यदि सम्यक् समीचीनः, नेता नायकः, शासितेति यावत, नरपतिः राजा, न स्यात् न विद्येत, ततः तदा, प्रजा लोकः, जलधौ समुद्रे, अकर्णधारा नाविकविरहिता, नौः नौका इव, विप्लवेत निमज्जेत्, अराजके जनपदे प्रजा न कथमपि शान्तिं प्राप्नोतीत्यर्थः।

(३) कामन्दकीयवचनमुपन्यस्य राजप्रजयोरन्योन्यवर्द्धकत्वमाह, प्रजामिति।—नृपः राजा, प्रजां प्रकृतिं, संरक्षति सम्यक् पालयति, सा प्रजा, पार्थिवं नृपं, वर्द्धयति करादिदानेन पोषयति. वर्द्धनात् पोषणात्, रक्षणं पालनं, श्रेयः शुभकरं, तदभावे रक्षणाभावे, सत् अपि साधीयोऽपि, मङ्गलमपि इत्यर्थः, असत असाधीयः, अशुभम् इत्यर्थः, अथवा विद्यमानमपि सर्वम् असत् अविद्यमानमित्यर्थः, भवतीति शेषः; राजैव प्रजारक्षणमूलमिति भावः।

(ङ) सुविस्तीर्णकमलपर्य्यङ्के—सुविस्तीर्णं वृहदाकारं, यत कमलं पद्मं, तदेव पर्य्यङ्कस्तस्मिन्। सुखासीनः,—सुखेन आसीनः उपविशन् [आदादिकस्य आसधातोः शानचि रूपम्]। परिवारपरिवृतः,—परिवारेण स्वजनवर्गेण, परिवृतः वेष्टितः।

(च) कुतोऽपि—कस्माच्चिदपि, अविज्ञातनामधेयात् देशादित्यर्थः।

स ब्रूते,—"देव ! अस्ति (छ) महती वार्त्ता । ताम् (ज) आख्या-
काम एव सत्वरमागतोऽहम् । श्रूयताम्,—

अस्ति जम्बुद्वीपे विन्ध्यो नाम गिरिः । तत्र चित्रवर्णो ना-
मयरः पक्षिराजो निवसति । तस्य अनुचरैश्चरद्भिः पक्षिभि-
(झ) दग्धारण्यमध्ये चरन्नवलोकितः पृष्टश्च,—"कस्त्वं, कु-
समागतोऽसि ?" । ततो मयोक्तम्,—"कर्पूरद्वीपस्य राजच-
वर्त्तिनो हिरण्यगर्भस्य राजहंसस्यानुचरोऽहम् । कौतुकाद्देशान्-
द्रष्टुमागतोऽस्मि ।" तच्छ्रुत्वा पक्षिभिरुक्तम्,—"अनयोः देश-
को देशो (ञ) भद्रतरः, राजा वा ?" । ततो मयोक्तम्,—"
किमेवमुच्यते ? (ट) महदन्तरम् ; यतः कर्पूरद्वीपः (ठ) स्वर्गै-
देशः, राजा च (ड) द्वितीयः स्वर्गपतिः, कथं वर्णयितुं शक्यं-
अत्र मरुस्थले पतिता यूयं किं कुरुथ ? आगच्छत, अस्म-
गम्यताम् । ततस्तद्वचनमाकर्ण्य पक्षिणः सकोपा बभूवुः । त-
चोक्तम्,—

पयःपानं भुजङ्गानां केवलं विषवर्द्धनम् ।
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ॥ ४ ॥

---

(छ) महती—गुरुतरा, अतीवप्रयोजनीया इत्यर्थः ।

(ज) आख्यातुकामः,—वक्तुकामः [ "लुम्पेदवश्यमः कृत्ये तुम् कामनसोः"
(का०) इति तुमुनो मलोपः ] ।

(झ) दग्धारण्यमध्ये—दग्धारण्यनामारण्यविशेषमध्ये ।

(ञ) भद्रतरः,—श्रेष्ठतरः ।

(ट) महदन्तरम्—उभयोर्देशयोः राज्ञोश्च महान् प्रभेदः ।

(ठ] स्वर्गैकदेशः,—सुरलोकस्य अंशविशेषः, स्वर्गतुल्य इत्यर्थः ।

(ड) द्वितीयः,—अपरः । स्वर्गपतिः,—सुरेन्द्रः, इन्द्रतुल्य इत्यर्थः ।

(४) शुक्रनीत्युक्तवचनमवलम्ब्य अयोग्यपात्रे उपदेशः महानर्थकर इ-
पयःपानमिति ।—भुजङ्गानां सर्पाणां सम्बन्धे, पयःपानं दुग्धपानं, केवलम् ए-
विषवर्द्धनं विषजनकम् ; हि तथाहि, मूर्खाणां हिताहितविवेकशून्यानां द-

अपरञ्च,—विद्वानेवोपदेष्टव्यो नाविद्वांस्तु कदाचन।
वानरानुपदिश्याज्ञान् स्थानभ्रष्टा ययुः खगाः" ॥ ५ ॥

राजोवाच,—"कथमेतत् ?"। दीर्घमुखः कथयति,—

विहग-वानरकथा।—

"अस्ति नर्मदातीरे (ढ) पर्वतोपत्यकायां विशालः शाल्मली-तरुः। तत्र (ण) निर्मितनीड़क्रोड़े पक्षिणः सुखेन निवसन्ति। अथैकदा वर्षासु (त) नीलपटैरिव जलधरपटलैः आवृते नभस्तले धारासारैर्महती वृष्टिर्बभूव। ततो वानरांस्तरुतलेऽव-स्थितान् (थ) शीतार्त्तान् कम्पमानान् अवलोक्य कृपया पक्षिभिरुक्तम्,—"भो भो वानराः! श्रूयताम्,—

---

उपदेशः हितानुशासनं, प्रकोपाय क्रोधोद्दीपनाय, शान्तये प्रबोधाय, न, उभयत्रापि भवति इति शेषः, मूर्खे उपदेशवचनं विफलम् अतो मूर्खो न उपदेष्टव्य इति भावः।

(५) मूर्खः हितोपदेशानर्हः इत्याह, विद्वानिति।—विद्वान् बुध एव, उपदेष्टव्यः हितं वक्तव्यः, अविद्वान् मूर्खस्तु, कदाचन कदाचिदपि, न, उपदेष्टव्य इति पूर्वेणान्वयः, तथाहि अज्ञान् मूर्खान्, वानरान् शाखामृगान्, उपदिश्य विबोध्य, उपदेशं दत्त्वा इत्यर्थः, खगाः केचित् पक्षिणः, स्थानभ्रष्टाः स्वावासच्युताः, भग्ननीड़ाः सन्तः इत्यर्थः, ययुः अन्यत्र जग्मुः।

(ढ) पर्वतोपत्यकायां—पर्वतस्य उपत्यकायाम् आसन्नभूमौ, पर्वतसमीपस्थ-समतलक्षेत्रे इत्यर्थः।

(ण) निर्म्मितनीड़क्रोड़े—निर्म्मितः रचितः, यः नीड़ः कुलायः, तस्य क्रोड़े अभ्यन्तरे।

(त) नीलपटैरिव—नीलाम्बरैरिव, नीलवर्णचन्द्रातपैरिवेत्यर्थः। ("नील-पटलैः" इति पाठे—नीलसमूहैः, राशीभूतनीलवर्णैरित्यर्थः, नीलच्छदिभिर्वा, नील-वर्णगृहाच्छादनैरित्यर्थः। ("छदिर्नेत्ररुजोः क्लीवं समूहे पटलं न ना" इत्यमरः)। "नीलपटोलैः" इति पाठे—पटोलैः नीलवर्णवस्त्रभेदैः ("पटोलं वस्त्रभेदे। नौषधौ ज्योत्स्नायान्तु योषिति" इति मेदिनी)। जलधरपटलैः,—मेघसमूहैः। आवृते—व्याप्ते, आच्छादिते इत्यर्थः। नभस्तले—गगनप्रदेशे। धारासारैः,—सवेगवृष्टजल-सम्पातैः, महतीभिः जलसन्ततिभिः इति यावत्।

(थ) शीतार्त्तान्—शीतकातरान्। [शीतेन ऋतः इति वाक्ये "ऋते च

अस्माभिर्निर्मिता नीड़ाश्चञ्चुमात्राहृतैस्तृणैः।
हस्तपादादिसंयुक्ता यूयं किमवसीदथ ?" ॥ ६ ॥

तच्छ्रुत्वा वानरैः ( द ) जातामर्षैः आलोचितम्,—"अहो (ध) निर्वातनीड़गर्भावस्थिताः सुखिनः पक्षिणोऽस्मान् निन्द… तद्भवतु तावद् वृष्टेः ( न ) उपशमः"। अनन्तरं (प) शान्ते पानीयवर्षे तैर्वानरैर्वृक्षमारुह्य सर्वे नीड़ा भग्नाः, तेषां पक्षि… अण्डानि चाधः पातितानि। अतोऽहं ब्रवीमि,—'विद्वानेवो… देष्टव्यः' इत्यादि।"

[इति विहग-वानरकथा]।

राजोवाच,—"तदा पक्षिभिः किमुक्तम् ?"। दीर्घमु… कथयति,—"ततः पक्षिभिः कोपादुक्तम्,—"केनासौ राज… कृतो राजा ?"। ततो मयोपजातकोपेनोक्तम्,—"…

---

तृतीयासमासे" (वा०) इति सूत्रेण वृद्धिः। "शीतेन आर्त्तः इति वाक्ये … ऋ+क्तः "उपसर्गादृति धातौ" (६।१।९१ पा०) इति वृद्धौ आर्त्तः इति सिद्धम्। ततश्च "ओमाङोश्च" (६।१।९५ पा०) इति पररूपम् एकादेश… "अकः सवर्णे दीर्घः" इति सूत्रेण दीर्घता ]।

( ६ ) किमसाध्यमुत्साहवतां प्रज्ञावतां वा इत्यभिप्रायेणाह, अस्माभिरिति… अस्माभिः पक्षिभिरित्यर्थः, हस्तविहीनैरपीति भावः, चञ्चुमात्राहृतैः चञ्चुमात्रेण… सङ्गृहीतैः, तृणैः घासादिभिः, नीड़ाः कुलायाः, आवासाः इति यावत्, निर्मि… कृताः, यूयं हस्तपादादिसंयुक्ताः हस्तौ च पादौ च हस्तपादम् आदिः येषां… संयुक्ताः हस्तादिभिः अङ्गैः अन्विताः सन्तः, अपीति शेषः, किं कथम्, अवसीद… क्लिश्यथ ? भवतां क्लेशस्तु निर्बुद्धितामूलः आलस्यमूलो वा इति भावः।

( द ) जातामर्षैः,—जातः उत्पन्नः, अमर्षः क्रोधो येषां तैः, क्रोधान्वितै… इत्यर्थः। आलोचितं—वितर्कितम्।

( ध ) निर्वातनीड़गर्भावस्थिताः,—निर्नास्ति वातो वायुः येषु ते निर्वाताः, … रहिताः, ये नीड़ानां कुलायानां, गर्भा अभ्यन्तराणि, तेषु अवस्थिताः।

( न ) उपशमः,—विरतिः।

( प ) शान्ते—निवृत्ते। पानीयवर्षे—जलवर्षणे।

युष्मदीयः मयूरः केन राजा कृतः ?" । तच्छ्रुत्वा ते पक्षिणो मां हन्तुमुद्यताः । ततो मयाऽपि स्वविक्रमो दर्शितः । यतः,—

अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः ।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव" ॥ ७ ॥

राजा विहस्याह,—

"आत्मनश्च परेषाञ्च यः समीक्ष्य बलाबलम् ।
अन्तरं नैव जानाति स तिरस्क्रियतेऽरिभिः ॥ ८ ॥

अन्यच्च,—सुचिरं हि चरन्नित्यं क्षेत्रे शस्यमबुद्धिमान् ।
द्वीपिचर्मपरिच्छन्नो वाग्दोषात् गर्दभो हतः" ॥ ९ ॥

बकः पृच्छति,—"कथमेतत् ?" । राजा कथयति,—

---

(७) स्वविक्रमप्रदर्शनस्य औचित्यं समर्थयितुं महाकवेर्माघस्य उक्तिं प्रमाणत्वेन उपन्यस्यति, अन्यदेति ।—अन्यदा अन्यस्मिन् काले, अपरिभवसमये इत्यर्थः. पुंसः पुरुषस्य, क्षमा सहिष्णुता, अन्यदा सुरतव्यतिरिक्ते काले, योषितः स्त्रियाः, लज्जा शालीनतेव, भूषणम् अलङ्कारः, प्रशंसनीयेत्यर्थः, किन्तु योषितः सुरतेषु रतिक्रियासु, वैयात्यं धार्ष्ट्यं, निर्लज्जत्वमित्यर्थः, तदिव, परिभवे पराजयकारणे समुपस्थिते, पराक्रमः प्रभावः, साहसप्रदर्शनम् इत्यर्थः, भूषणमित्यनेनान्वयः ; अन्यथा पराजय एव सम्भाव्यते इति भावः ।

(८) स्वपरबलाबलाविवेकिनः निग्रहस्थानत्वमाह, आत्मन इति ।—यो जनः, आत्मनः स्वस्य च, परेषाञ्च शत्रूणाञ्च, बलाबलं सबलत्वं हीनबलत्वञ्च, समीक्ष्य विचार्य्य, अन्तरं प्रभेदं, नैव जानाति न बुध्यते, स जनः, अरिभिः शत्रुभिः, तिरस्क्रियते परिभूयते ; पक्षमण्डली परेषां संहतिबलं समीक्ष्यमाणस्यापि सहायशून्यस्य उभयोः प्रभेदाज्ञस्य व्यर्थविक्रमं प्रदर्शयितुस्ते पराभवप्राप्तिर्न विस्मयावहा इति हृदयम् ।

(९) अनियतवचसो निग्रहस्थानत्वं प्रदर्शयितुमाह, सुचिरमिति ।—क्षेत्रे केदारे, शस्योत्पत्तिस्थाने इत्यर्थः, सुचिरं हि बहुदिनं यावत्, नित्यं प्रत्यहं, शस्यं धान्ययवादिकं, चरन् भक्षयन्, द्वीपिचर्म्मपरिच्छन्नः व्याघ्रचर्म्मसमावृतः, अबुद्धिमान् निर्बोधः, गर्दभः कश्चित् रासभः, वाग्दोषात् वाक्संयमाभावापराधात्, चीत्कारादित्यर्थः, हतः व्यापादितः, क्षेत्रपतिना इति शेषः ।

रजक-व्याघ्रचर्म्मावृतगर्दभकथा ।—

"अस्ति हस्तिनापुरे विलासो नाम रजकः। तस्य गर्दभो ऽतिभारवहनात् दुर्बलो (फ) मुमूर्षुरिवाभवत्। ततस्तेन रजकेनासौ व्याघ्रचर्मणा प्रच्छाद्य अरण्यसमीपे शस्यक्षेत्रे मोचितः। ततो दूरात् (ब) तमवलोक्य (भ) व्याघ्रबुद्ध्या क्षेत्रपतयः सत्वरं पलायन्ते। अथैकदा केनापि शस्यरक्षकेण (म) धूसरकम्बलकृततनुत्राणेन (य) धनुष्काण्डं सज्जीकृत्य (र) अवनतकायेन एकान्ते स्थितम्। ततस्तञ्च दूरात् दृष्ट्वा गर्दभः पुष्टाङ्गो यथेष्टशस्यभक्षणजातबलो गर्दभोऽयमिति मत्वा उच्चैः शब्दं कुर्वाणस्तदभिमुखं धावितः। ततस्तेन शस्यरक्षकेण चीत्कारशब्दात् (ल) गर्दभोऽयमिति ज्ञात्वा (व) लीलयैव व्यापादितः। अतोऽहं ब्रवीमि,—'सुचिरं हि चरन्नित्यम्' इत्यादि"।

[इति रजक-व्याघ्रचर्म्मावृतगर्दभकथा]।

दीर्घमुखो ब्रूते,—"पश्चात् तैः पक्षिभिरुक्तम्,—"अरे पापा

---

(फ) मुमूर्षुरिव—मरणोन्मुख इव। [मृङः सन्नन्तादुः]।

(ब) तं—व्याघ्रचर्माच्छादितं गर्द्दभम्।

(भ) व्याघ्रबुद्ध्या—व्याघ्रज्ञानेन, व्याघ्रभ्रमेण इति यावत्। क्षेत्रपतयः क्षेत्रस्वामिनः।

(म) धूसरकम्बलकृततनुत्राणेन—धूसरः धूसरवर्णः, यः कम्बलः तेन सम्पादितं, तनुत्राणं देहाच्छादनं येन स तथोक्तेन, धूसरवर्णकम्बलेन शरीरावरणेन इत्यर्थः।

(य) धनुष्काण्डं—धनुर्बाणम्। ("काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु" इत्यमरः)।

(र) अवनतकायेन—अवनतः न्युब्जीकृतः, कायः येन सः तेन, भाण्डनार्थं देहं सङ्कुच्य इत्यर्थः। एकान्ते—क्षेत्रस्य एकदेशे, निर्ज्जनस्थाने इत्यर्थः।

(ल) गर्दभोऽयम्—अयं परमार्थतः गर्दभः, न तु व्याघ्रः।

(व) लीलयैव—अनायासेनैव।

दुष्ट बक ! अस्माकं भूमौ चरन्नस्माकं स्वामिनम् (अ) अधिक्षिपसि ? तन्न क्षन्तव्यमिदानीम्" इत्युक्त्वा सर्वे मां चञ्चुभिर्हत्वा सकोपा ऊचुः,—"पश्य रे मूर्ख ! स हंसस्तव राजा सर्वथा (ष) मृदुः, तस्य राज्याधिकारो नास्ति, यतः (स) एकान्तमृदुः करतलगतमप्यर्थं रक्षितुमक्षमः, कथं स पृथिवीं शास्ति ? राज्यं वा तस्य किम् ? त्वञ्च (ह) कूपमण्डूकः, तेन (क) तदाश्रयणमुपदिशसि । शृणु,—

सेवितव्यो महावृक्षः फलच्छायासमन्वितः ।
यदि दैवात् फलं नास्ति छाया केन निवार्य्यते ? ॥ १० ॥

अन्यच्च,—हीनसेवा न कर्त्तव्या कर्त्तव्यो महदाश्रयः ।
पयोऽपि शौण्डिकीहस्ते वारुणीत्यभिधीयते ॥ ११ ॥

---

(अ) अधिक्षिपसि—निन्दसि ।

(ष) मृदुः,—कोमलस्वभावः, हीनतेजा इत्यर्थः ।

(स) एकान्तमृदुः,—अत्यर्थशान्तचित्तः ।

(ह) कूपमण्डूकः,—कूपस्थभेकः, कूपे एव सञ्चरणकारी मण्डूक इव देशान्तरवृत्तान्तानभिज्ञ इत्याशयः ; तथा हि, मण्डूको स्वावासकूपादृतेऽन्यः बृहत् जलाशयो नास्तीति मन्यते, लोकेऽपि तादृशं किञ्चिद्बोधाभिमानिनं सर्वे कूपमण्डूकाख्यदुर्वादेन निन्दन्ति ।

(क) तदाश्रयणं—तस्य राजहंसस्य, आश्रयणम् आश्रयग्रहणम् ।

(१०) कीदृशः आश्रयः ग्राह्यः इति वक्तुं वृद्धचाणक्यवचनं प्रमाणयति, सेवितव्य इति ।—फलच्छायासमन्वितः फलच्छायायुक्तः, महावृक्षः विशालस्तरुः, सेवितव्यः आश्रयणीयः ; कुतः ? इत्याह,—यदि चेत्, दैवात् दैववशात्, फलं शस्यं, नास्ति न विद्यते, न फलतीत्यर्थः, तथाऽपि छाया अनातपः, केन निवार्य्यते ? प्रतिरुध्यते ? न केनापि इत्याशयः ; फलाभावेऽपि अवश्यमेव छाया लभ्या भवेत् इत्यर्थः, ततो महदाश्रयणमेव कर्त्तव्यमिति भावः ।

(११) वृद्धचाणक्यवचनमुपन्यस्य सर्वथा महानेवाश्रयणीय इत्याह, हीनेति ।—हीनसेवा नीचपरिचर्य्या, नीचाश्रयणमित्यर्थः, न कर्त्तव्या न विधेया, महदाश्रयः महतां गुणाधिकानाम्, आश्रयः महाजनावलम्बनं, कर्त्तव्यः विधेयः ; नीचा-

अपरञ्च,—महानप्यल्पतां याति निर्गुणे गुणविस्तरः ।
आधाराधेयभावेन गजेन्द्र इव दर्पणे ॥ १२ ॥
किन्तु,—अजा सिंहप्रसादेन वने चरति निर्भयम् ।
रामनासाद्य लङ्कायां लेभे राज्यं विभीषणः ॥ १३ ॥

श्रयणे दोषमाह,—तथा हि शौण्डिकी सुराविक्रेतृपत्नी, तस्याः हस्ते करे, स्थितः शेषः, पयोऽपि जलं दुग्धं वा अपि, वारुणी सुराविशेषः, इति एवम्, परिपोषि कथ्यते, जनैरिति शेषः । हीनसेवायाः हीनत्वप्रापकत्वात् हीनत्वबोधकत्वात् नीचः कथमपि सेवितव्य इति निष्कर्षः । महदाश्रये,—"कीटोऽपि सुमनःसङ्गा आरोहति सतां शिरः" इति दृष्टान्त उन्नेयः ।

(१२) निर्गुणाश्रयस्य दोषान्तरमाह, महानपीति ।—निर्गुणे गुणहीने पुंसि महानपि प्रभूतोऽपि, श्लाघनीयोऽपि इत्यर्थः, गुणविस्तरः गुणसमूहः, केनापि कर्मणा गुणव्यापनम् इत्यर्थः, आधाराधेयभावेन आश्रयाश्रयिभावेन, बिम्बप्रतिबिम्बभाव-सम्बन्धेन इत्यर्थः, आधारस्य अणुत्वमहत्त्वभेदेन आधेयस्यापि अणुत्वमहत्त्वेन प्रतीयमानत्वेनेति यावत्, दर्पणे मुकुरे, गजेन्द्र इव नागराज इव, प्रतिबिम्बितः महागज इव इत्यर्थः, अल्पतां लघुत्वं, हीनत्वमित्यर्थः, याति प्राप्नोति; स्वल्पाकृतिदर्पणः स्वस्मिन् प्रतिफलितं महागजं यथा स्वल्पतया गृह्णाति, तथा निर्गुणः पुमान् महान्तं गुणराशिमपि अल्पतयैव मन्यते ; आधारभूतायाम् आत्मनः स्वल्पबुद्धौ आधेयभूतस्य गुणराशेः परिच्छेदाक्षमत्वात्, अतो हीनसेवा नैव कार्य्या इति निष्कर्षः । यद्वा,—निर्गुणे गुणविस्तरः गुणानां विस्तरो यत्र सः प्रभूतगुणसम्पन्नः, महानपि उदारचरितोऽपि, आधाराधेयभावेन दर्पणे गजेन्द्र इव अल्पतां हीनतां याति, हीनतया परिगणितो भवतीत्यर्थः ; यथा अतिक्षुद्रे दर्पणे प्रतिफलितः महागजोऽपि क्षुद्रतया प्रतीयते, तद्वत् हीनाश्रितो महानपि । तथा हि "सा काली दाससङ्गेन हंसी कृष्णतां गता" इति । अहो ! दुष्परिणामः सेवाया इति भावः । यद्वा,—गुणविस्तरः महानपि, अल्पतां हीनतां, नैर्गुण्यमित्यर्थः, याति प्राप्नोति, नीचाश्रयग्रहणात् अल्पः आश्रयदृष्टान्तेन स्वयमपि गुणहीनो भवति, दोषगुणयोः संसर्गप्रभावाधीनत्वादिति भावः । "संसर्गजा दोषगुणा भवन्ति" इति महाजनवाक्यम् ।

(१३) तथैव महदाश्रयस्य गुणवत्त्वां दर्शयति, अजेति ।—सिंहप्रसादेन सिंहानुग्रहेण, सिंहमाश्रित्य तदभयवरेणेत्यर्थः, अजा छागी, वने अरण्ये, निर्भयं व्याघ्रादिभयरहितं यथा तथा, चरति भ्राम्यति, तथा विभीषणः रावणानुजः, रामं

विशेषतश्च,—व्यपदेशेऽपि सिद्धिः स्यादतिशक्ते नराधिपे।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम्" ॥ १४ ॥

मयोक्तम्,—"कथमेतत् ?"। पक्षिणः कथयन्ति,—

गज-शशककथा।—

"कदाचिद्वर्षास्वपि वृष्टेरभावात् (ख) तृषार्त्तो गजयूथो यूथपतिमाह,—"नाथ! कोऽभ्युपायोऽस्माकं (ग) जीवनाय ? नास्ति (घ) क्षुद्रजन्तूनां निमज्जनस्थानम्; वयञ्च निमज्जनाभावात् (ङ) अन्धा इव, क्व यामः ? किं वा कुर्मः ?"। ततो हस्तिराजो नातिदूरं गत्वा निर्मलं ह्रदं दर्शितवान्। ततः दिनेषु गच्छत्सु तत्तीरस्थिताः क्षुद्रशशकाः (च) गजयूथपादाऽऽहतिभिः चूर्णिताः। अनन्तरं शिलीमुखो नाम शशकश्चिन्तया-

दाशरथिम्, आसाद्य प्राप्य, रामाश्रयग्रहणादित्यर्थः, लङ्कायां राज्यं लेभे प्राप, लङ्काधिपत्यम् अधिचकारेत्यर्थः।

(१४) महतां प्रभावेणापि कार्य्यसिद्धिः स्यादिति दर्शयति, व्यपदेशे इति।—नराधिपे राजनि, अतिशक्ते प्रबले सति, प्रभावसम्पन्ने सतीत्यर्थः, व्यपदेशेऽपि तन्नामग्रहणे कृतेऽपि, सिद्धिः अभीष्टसिद्धिः, जयलाभः इति यावत्, स्यात् भवेत्; तथा हि शशिनश्चन्द्रस्य, व्यपदेशेन नामकीर्त्तनेन, चन्द्रस्य वयमिति परिचयदानेनेत्यर्थः, शशकाः मृगविशेषाः, सुखं निरुपद्रवं, वसन्ति तिष्ठन्ति। ("शशकाः सुखमासते" इति पाठान्तरम्)।

(ख) तृषार्त्तः,—पिपासातुरः। यूथपतिं—यूथनाथं, गजेषु मुख्यम् इत्यर्थः।

(ग) जीवनाय—जीवनं धारयितुम्।

(घ) क्षुद्रजन्तूनां—क्षुद्रकायप्राणिनाम्, अपीति शेषः। निमज्जनस्थानम्—अवगाहनयोग्यजलाशयः, अत्रेति शेषः। ("कोऽप्युपायोऽस्माकं जीवनाय नास्ति क्षुद्रजन्तूनां निमज्जनस्थाने" इति पाठे—क्षुद्रप्राणिनां पक्ष्यादीनां, निमज्जनस्थाने अवगाहनार्हजलाशये, अस्माकं जीवनाय कोऽपि उपायो नास्तीत्यर्थः)।

(ङ) अन्धा इव—महातापात् दृष्टिशक्तिविहीना इव, अतः किंकर्त्तव्यविमूढा इत्यर्थः। ("हताशाः" इति पाठान्तरम्)।

(च) गजयूथपादाऽऽहतिभिः,—हस्तिसमूहपादप्रहारैः। चूर्णिताः,—पिष्टाः। मृ

मास,—"अनेन गजयूथेन (छ) पिपासाऽऽकुलितेन प्रत्यहमत्र गन्तव्यम्, अतो विनष्टमस्मत्कुलम्"। ततो विजयो नाम वृद्धशशकोऽवदत्,—(ज) "मा विषीदत, प्रतीकारो मया कर्त्तव्यः" इति प्रतिज्ञाय चलितः। गच्छता च तेनाऽऽलोचितम् —"कथं मया (झ) गजयूथपनिकटे गत्वा वक्तव्यम्? यतः,—

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः।
पालयन्नपि भूपालः प्रहसन्नपि दुर्जनः॥ १५॥

अतोऽहं (ञ) पर्वतशिखरमारुह्य यूथनाथम् (ट) अभिवादयामि"। तथाऽनुष्ठिते सति यूथनाथ उवाच,—"कस्त्वम्, कुतः समायातः?"। स ब्रूते,—"दूतोऽहं, भगवता चन्द्रेण

---

(छ) पिपासाऽऽकुलितेन—तृष्णार्त्तेन।

(ज) मा विषीदत—न विषादं गच्छ। मा इति वारणार्थकमव्ययम् ("मा वारणे विकल्पे च" इति मेदिनी)। [ वि+सद+लोट्-त ]। प्रतीकारः वैरनिर्यातनम्, अस्यापकारस्य प्रतिविधानमित्यर्थः, ("वैरशुद्धिः प्रतीकारो वैरनिर्यातनञ्च सा" इत्यमरः)।

(झ) गजयूथपनिकटे—गजयूथाधिपतिसमीपे।

(१५) गजादीनां भीषणत्वमाह, स्पृशन्निति।—गजः स्पृशन्नपि स्पर्शं कुर्वन्नपि, स्पर्शनमात्रेणापि इत्यर्थः, का कथा आघातस्य? इति भावः, हन्ति नाशयति, प्राणिनमिति शेषः, भुजङ्गमः सर्पः, जिघ्रन्नपि आघ्राणं कुर्वन्, निश्वासवायुनाऽपि इत्यर्थः, का कथा दंशनस्य? इति भावः, सर्वत्र हन्तीति योजना; भूपालः राजा, पालयन्नपि रक्षन् अपि, का कथा अपालनस्य? इति भावः, दुर्जनः दुष्टो लोकः, प्रहसन्नपि प्रसन्नतां दर्शयन्नपि, का कथा क्रुद्धस्य? इति भावः, आघातादिकमकुर्वन्तोऽपि एते गजादयः न हि विश्वासभूमयः दुर्निवारचरितत्वात् इति भावः।

(ञ) पर्वतशिखरं—गिरिशृङ्गम्।

(ट) अभिवादयामि—मदभिमुखीकर्तुं वाचिकप्रणामपुरःसरं सम्भाषयामीत्यर्थः, येन स समागतं मां परिज्ञातुं शक्नुयादिति भावः।

भवदन्तिकं (ठ) प्रेषितः"। यूथपतिराह,—(ड) "कार्य्यमुच्यताम्"। विजयो वदति,—

"उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा।
सदैवावध्यभावेन यथार्थस्य हि वाचकः॥ १६॥

तदहं तदाज्ञया ब्रवीमि, शृणु,—यदेते शशकाः (ढ) चन्द्रसरोरक्षकास्त्वया निःसारितास्तन्न युक्तं कृतम्; यतो रक्षकास्ते शशका मदीयाः, अत एव मे शशाङ्क इति (ण) प्रसिद्धिः"। एवमुक्तवति दूते युथपतिर्भयादिदमाह,—"देव! इदमज्ञानतः कृतम्; पुनर्न गमिष्यामि"। दूत उवाच,—"यद्येवं, तदत्र सरसि भगवन्तं चन्द्रमसं कोपात् प्रकम्पमानं प्रणम्य (त) प्रसाद्य च गच्छ"। ततस्तेन रात्रौ नीत्वा तत्र जले

---

(ठ) प्रेषितः,—प्रेरितः।

(ड) कार्य्यमुच्यतां—कर्त्तव्यं कथ्यताम्।

(१६) दूतस्य अवध्यत्वात् निःशङ्कं स्वाम्यादिष्टविज्ञापनस्य कर्त्तव्यतां कामन्दकवचनमनुसृत्याह, उद्यतेष्विति।—हि यतः, सदैव नित्यकालम् एव, अवध्यभावेन अवध्यत्वात्, यथार्थस्य प्रकृतार्थस्य, न तु भयेन अप्रकृतार्थस्येत्यर्थः, वाचकः वक्ता, अतः दूतः वार्त्ताहरः, शस्त्रेषु खड्गादिषु, उद्यतेषु मारणार्थमुत्क्षिप्तेष्वपि, अन्यथा अन्यप्रकारं, प्रभुसन्देशस्य विपरीतमित्यर्थः, न वदति न कथयति, यथैव राज्ञा उपदिष्टः तथैव ब्रूते इत्यर्थः, यद्वा,—शस्त्रेषु उद्यतेष्वपि सदैव अवध्यभावेन दूतः अन्यथा न वदति, हि यतः, स यथार्थस्य वाचकः; स्वाम्यादेशानुवादी खलु अहम्, अतो अप्रियमपि वचनं मे सर्व्वथा मर्षणीयमित्यभिप्रायः। ("उद्यतेष्वपि शस्त्रेषु यथोक्तं शासनं वदेत्। रागापरागौ जानीयात् प्रकृतीनाञ्च भर्त्तरि"॥ इति कामन्दकीयः पाठः)।

(ढ) चन्द्रसरोरक्षकाः,—चन्द्रस्य जलाशयप्रतिपालकाः परिदर्शका वा। निःसारिताः,—दूरीकृताः, पादपेषणेन स्थानभ्रष्टाः कृता इति यावत्।

(ण) प्रसिद्धिः,—ख्यातिः, नामधेयमित्यर्थः, अहं शशाङ्कनाम्ना प्रसिद्धः इति यावत्।

(त) प्रसाद्य—प्रसन्नं कृत्वा इत्यर्थः।

चञ्चलं चन्द्रप्रतिबिम्बं दर्शयित्वा स यूथपतिः प्रणामं कारितः। उक्तश्च तेन,—"देव! अज्ञानादनेनापराधः कृतः, तत् क्षम्यतां, नैवं वारान्तरं (य) विधास्यते" इत्युक्त्वा तेन शशकेन स यूथपतिः प्रस्थापितः। अतोऽहं ब्रवीमि,—'व्यपदेशेऽपि सिद्धिः स्यात्' इत्यादि"।

[इति गज-शशककथा]।

ततो मयोक्तम्,—"स एवास्मत्प्रभुः राजहंसो (द) महाप्रतापोऽतिसमर्थः, त्रैलोक्यस्यापि प्रभुत्वं तत्र युज्यते, किं पुनः राज्यम्?" इति। तदाऽहं तैः पक्षिभिः,—(ध) "दुष्ट! कथमस्मद्भूमौ चरसि?" इत्यभिधाय चित्रवर्णस्य राज्ञः समीपं नीतः। ततो राज्ञः पुरतो मां प्रदर्श्य तैः प्रणम्योक्तम्,—"देव! (न) अवधीयताम्, एष दुष्टबकोऽस्मद्देशे चरन्नपि देवपादान् (प) अधिक्षिपति"। राजाऽऽह,—"कोऽयम्? कुतः समायातः?"। ते ऊचुः,—"हिरण्यगर्भनाम्नो राजहंसस्यानुचरः कर्पूरद्वीपादागतः"। अथाहं गृध्रेण मन्त्रिणा पृष्टः,—"कस्तत्र (फ) मुख्यो मन्त्री?" इति। मयोक्तम्,—(ब) "सर्वशास्त्रार्थपारगः सर्वज्ञो नाम चक्रवाकः"। गृध्रो ब्रूते,—"युज्यते, (भ) स्वदेशजोऽसौ। यतः,—

(य) विधास्यते—करिष्यते।

(द) महाप्रतापः,—महान् प्रतापो यस्य सः महाप्रभावः।

(ध) दुष्ट!—उद्धत! धृष्ट! इति यावत्। चरसि—विहरसि।

(न) अवधीयताम्—अवहितेन भूयतां, साभिनिवेशं श्रूयतामित्यर्थः।

(प) अधिक्षिपति—निन्दति।

(फ) मुख्यः,—प्रधानः।

(ब) सर्वशास्त्रार्थपारगः,—सर्वाणि शास्त्राणि तेषाम् अर्थस्तस्य पारं गच्छति यः सः, सर्वशास्त्रतत्त्ववित् इत्यर्थः।

(भ) स्वदेशजः,—स्वदेशोत्पन्नः; स्वदेशीयः इत्यर्थः।

स्वदेशजं कुलाचारं विशुद्धमुपधाशुचिम्।
शास्त्रज्ञमव्यसनिनं व्यभिचारविवर्जितम्॥ १७॥
अधीतव्यवहाराङ्गं ख्यातं मौलं विपश्चितम्।
अर्थस्योत्पादकं सम्यक् विदध्यान्मन्त्रिणं नृपः"॥ १८॥

(म) अत्रान्तरे शुकेनोक्तम्,—"देव! कर्पूरद्वीपादयो लघुद्वीपा जम्बुद्वीपान्तर्गता एव, तत्रापि देवपादानामेवाऽऽधिपत्यम्"। ततो राज्ञाऽप्युक्तम्,—"एवमेव। यतः,—

राजा मत्तः शिशुश्चैव प्रमदा धनगर्वितः।
अप्राप्यमपि वाञ्छन्ति किं पुनर्लभ्यमेव यत्?"॥ १९॥

---

(१७।१८) इदानीं प्रसङ्गतः मन्त्रिनिर्वाचनमुपदिशति, स्वदेशजमिति अधीतेति च द्वाभ्याम्।—स्वदेशजं स्वस्य देशे जायते यः सः तं स्वदेशोत्पन्नं, कुलाचारं कौलिकरीतिनीत्योः, विशुद्धं पवित्रं पवित्रकुलाचारसम्पन्नं, यद्वा,—कुलं वंशः, आचारः व्यवहारः, तत्र विशुद्धं विशुद्धकुलोद्भवं पूताचारञ्च, उपधाशुचिम् उपधया "धर्म्मार्थकाममोक्षेषु प्रत्येकं परिशोधने। उपेत्य धीयते यस्मादुपधा तेन कीर्त्तिता"॥ इत्युक्तेन धर्म्मार्थकामभयाद्युपन्यासेन परीक्षणेन, शुचिं प्रमाणीकृतविशुद्धचरितम्, उत्कोचादिप्रलोभनविजयिनमिति भावः; ("उपधा धर्म्माद्यैर्यत् परीक्षणम्" इत्यमरः। "आदिना कामार्थभयग्रहः" इति टीकाकारः) शास्त्रज्ञं शास्त्रज्ञानवन्तम्, अव्यसनिनं द्यूतपानाद्यासङ्गरहितं, व्यभिचारविवर्जितं सत्पथावलम्बनं परदाराभिमर्षणादिदोषरहितं वा, अधीतव्यवहाराङ्गम् अधीतानि शिक्षाविषयीकृतानि, व्यवहाराङ्गाणि विवादशास्त्राणि येन तं व्यवहारशास्त्रवेत्तारं, ख्यातं विख्यातनामानं, लोके प्रतिपत्तिभाजनमित्यर्थः, मौलं कुलक्रमागतं प्रथितवंशोत्पन्नं वा, विपश्चितं पण्डितं, [विप्रकृष्ट चेतति वि+प्र+चित्+क्विप् पृषो०। "विद्वान् विपश्चित् दोषज्ञः" इत्यमरः] सम्यक् न्यायतः, अर्थस्य धनस्य, उत्पादकं वृद्धिकरं, यद्वा,—सम्यक् साधु यथा तथा, अर्थस्य प्रयोजनस्य, उत्पादकं साधकं, नृपः राजा, एवंगुणसम्पन्नं जनं, मन्त्रिणं सचिवं, विदध्यात् कुर्य्यात्, राज्यशासनकर्मणि नियोजयेत् इत्यर्थः, सचिवः खलु एतादृशगुणसम्पन्न एव युज्यते इति निष्कर्षः।

(म) अत्रान्तरे—इत्यवसरे। लघुद्वीपाः,—क्षुद्रद्वीपाः। आधिपत्यं—प्रभुत्वम्।

(१९) राजादीनां स्वाभाविकवृत्तिं वर्णयन्नाह, राजेति।—राजा भूपतिः, मत्तः उन्मत्तः, क्षिप्त इति यावत्, शिशुः बालकः, प्रमदा नारी, धनगर्वितश्च धनेन

ततो मयोक्तम्,—"यदि (य) वचसैव तत्रापि श्रीमद्देव-पादानामाधिपत्यं सिध्यति, तदा जम्बुद्वीपेऽपि अस्मत्प्रभोः हिरण्यगर्भस्य (र) स्वाम्यमस्ति"। शुक उवाच,—"कथमत्र (ल) निर्णयः?"। मयोक्तम्,—"सङ्ग्राम एव"। राज्ञा विहस्योक्तम्, —"स्वस्वामिनं गत्वा सज्जीकुरु"। तदा मयोक्तम्,—"स्वदूतोऽपि (व) प्रस्थाप्यताम्"। राजाऽऽह,—"कः प्रयातु (श) दौत्येन? यतः एवम्भूतो दूतः कार्य्यः,—

भक्तो गुणी शुचिर्दक्षः प्रगल्भोऽव्यसनी क्षमी।
ब्राह्मणः परमर्मज्ञो दूतः स्यात् प्रतिभानवान्" ॥ २०॥

गृध्रो वदति,—"सन्त्येवम्भूता बहवः, किन्तु ब्राह्मण एव दूतः कर्त्तव्यः। यतः,—

---

गर्वितः धनित्वाभिमानी जनश्च, अप्राप्यं दुर्लभम् अपि वस्तु, वाञ्छन्ति एव, आकाङ्क्षन्ति एव, यत् लभ्यमेव अनायासेन लब्धुं शक्यमेव, तत् किं पुनः? तत्र का कथा? नियतमभिनवप्रार्थिनी खलु एषां चित्तवृत्तिरिति भावः। "असन्तुष्टाः पार्थिवाः" इति स्मरणात् सन्तोषः दूषणमेवाधीश्वराणामिति सामान्यकर्पूरद्वीपाधिपस्य वाञ्छा न दोषावहा राजासनारूढानामस्माकमित्याशयः।

(य) वचसैव—वाङ्मात्रेणैव। तत्रापि—कर्पूरद्वीपेऽपि।

(र) स्वाम्यं—प्रभुत्वम्, अधिकार इत्यर्थः।

(ल) निर्णयः,—निश्चयः, द्वयोरेकतरस्य प्रभुत्वावधारणमित्यर्थः।

(व) प्रस्थाप्यतां—प्रेष्यताम्। [प्र+स्था+णिच्+कर्मणि लोट्-ताम्]

(श) दौत्येन—दूतस्य कर्म दौत्यं तेन दूतकर्मणा, दौत्यं स्वीकृत्येत्यर्थः।

(२०) प्रसङ्गतः दूतधर्म्मान् दर्शयन्नाह, भक्त इति।—भक्तः राज्ञि अनुरक्तः, गुणी गुणान्वितः, विश्वासादिदूतगुणयुक्तः इत्यर्थः, शुचिः विशुद्धचरितः, उत्कोच-प्रलोभनेनापि अवशीभूतः इति भावः, दक्षः कार्य्यनिपुणः, स्वकर्त्तव्यसम्पादने समर्थ इत्यर्थः, प्रगल्भः वाक्प्रयोगकुशलः, अव्यसनी द्यूतपानाद्यनासक्तः, क्षमी क्षमावान्, ब्राह्मणः विप्रः, परमर्मज्ञः परस्य शत्रोः, नर्म रहस्यं मनोभावं वा, जानातीति, प्रतिभानवान् नवनवोन्मेषशालिबुद्धिमान्, जन इति शेषः, दूतः स्यात् भवेत्, एवं-गुणः एव दौत्यसार्ह इत्यर्थः।

प्रसादं कुरुते पत्युः सम्पत्तिं नाभिवाञ्छति।
कालिमा कालकूटस्य नापैतीश्वरसङ्गमात्" ॥ २१ ॥

राजाऽऽह.— (घ) "ततः शुक एव व्रजतु। शुक! त्वमेवानेन सह तत्र गत्वा अस्मदभिलषितं ब्रूहि"। शुकोऽवदत्,—"यथा आज्ञापयति देवः, किन्त्वयं दुर्जनो वकः, तदनेन सह न व्रजामि। तथा ह्युक्तम्,—

खलः करोति दुर्वृत्तं नूनं फलति साधुषु।
दशाननोऽहरत् सीतां बन्धनं स्यान्महोदधेः ॥ २२ ॥

(२१) प्रसङ्गतः सद्वंशजस्य प्राशस्त्यं दर्शयन्नाह, प्रसादमिति।—पत्युः स्वामिनः, प्रसादं प्रसन्नतां, सन्तोषमिति यावत्, कुरुते जनयति, विश्वस्ततादिगुणेन कर्म्मपाटवेन च इति भावः; ब्राह्मण इति शेषः, सम्पत्तिम् ऐश्वर्य्यं, प्रभोरिति शेषः, न अभिवाञ्छति न प्रार्थयते, प्रभोरैश्वर्य्यमपहृत्य न स्वयं धनीभवितुमिच्छति, परन्तु दरिद्र एव वर्त्तते इत्यर्थः, निःस्वार्थपरोपकारक एव अभिजात इति भावः। तथा हि ईश्वरसङ्गमात् महेश्वरसंसर्गात्, शिवकण्ठभूषणतां लब्ध्वाऽपीत्यर्थः, कालकूटस्य हालाहलस्य विषस्य, समुद्रसम्भवात् हेतोः नितराम् अभिजातस्य इति भावः, कालिमा मलिनत्वं, न अपैति नापगच्छति, न शुभ्रीभवति इत्यर्थः, कालकूटन्तु हरमेव कण्ठभूषासम्पादनेन प्रसादयति, स्वयन्तु यथापूर्वं तिष्ठति, इत्ययं स्वभावोऽभिजातानामिति भावः। सागरसम्भवत्वात् सद्वंशजः कालकूटः महेश्वरसङ्गतिं लब्ध्वाऽपि स्वकीयकालिमानं दूरीकर्त्तुं शिवस्य शुभ्रतां नापजिहीर्षति, कृष्णवर्ण एव तिष्ठति, एवं विशुद्धः प्रकृत्या दरिद्रः ब्राह्मणः राजाश्रयं लब्ध्वाऽपि तदैश्वर्य्यमपहृत्य धनीभवितुं नेच्छति, दरिद्र एव वर्त्तते, परन्तु कार्य्यद्वारेण स्वामिनं प्रसादयतीति निष्कर्षः।

(घ) ततः,—तस्मात्, ब्राह्मणस्य दूतार्हत्वात्। मनुष्याणां ब्राह्मण इव पक्षिणां शुकः श्रेयान्, श्रुत्यध्ययन-उच्छाहिंसादिवृत्तिमाम्यात्।

(२२) दुर्जनसङ्गस्य दोषमाह, खल इति।—खलः दुराचारः, दुर्वृत्तं पापम्, असदाचरणम् इति यावत्, करोति विदधाति, किन्तु तत् साधुषु सज्जनेषु, निरपराधेषु इति यावत्, नूनं निश्चितं, फलति, साधवः खलकृतदुराचरणात् निर्दोषा अपि तत्सम्पर्कात् क्लेशमाप्नुवन्ति इत्याशयः। अत्र दृष्टान्तमाह,—दशाननः रावणः, सीतां रामपत्नीम्, अहरत् अपहृतवान्, किन्तु

अपरञ्च,—न स्थातव्यं न गन्तव्यं दुर्जनेन समं क्वचित्।
काकसङ्गाद्धतो हंसस्तिष्ठन् गच्छंश्च वर्त्तकः" ॥ २३ ॥

राजोवाच,—"कथमेतत् ?"। शुकः कथयति,—

हंस-वायसकथा ।—

"अस्ति (स) उज्जयिनीवर्त्मप्रान्तरे महान् पिप्पलवृक्षः। तत्र हंसकाकौ निवसतः। कदाचित् ग्रीष्मसमये परिश्रान्तः कश्चित् पथिकस्तत्र तरुतले (ह) धनुष्काण्डं सन्निधाय सुप्तः। ततः क्षणान्तरे तन्मुखाद्वृक्षच्छाया (क) अपगता। अनन्तरं सूर्य्यतेजसा तन्मुखं (ख) व्याप्तमवलोक्य कृपया (ग) पुण्यात्मना पापरहितेन तत्पिप्पलवृक्षस्थितेन हंसराजेन पक्षौ (घ) प्रसार्य

---

महोदधेः समुद्रस्य, समीपस्थत्वात् निरपराधस्यापीति भावः, बन्धनं सेतुना संयमनं, स्यात् भवेत्, अभवदित्यर्थः। दुर्जनप्रयुक्तदुष्टव्यवहारः निरपराधानां सन्तापस्य जनकः स्यात् सहावस्थितिदोषात् इति भावः।

(२३) सर्वथा खलसंसर्गः त्याज्य इति दृष्टान्तेन समर्थयन्नाह, नेति।—क्वचित् कदाचिदपि, दुर्जनेन दुष्टेन, समं सह, न स्थातव्यं न वस्तव्यं, न गन्तव्यं न यातव्यम्; तथा हि, काकसङ्गात् वायससंसर्गात्, काकेन सह मिलित्वा इत्यर्थः, तिष्ठन् एकत्रावस्थानं कुर्वन्, हंसः हतः विनाशितः, गच्छन् काकेन सह मिलित्वा व्रजन्, वर्त्तकश्च क्षुद्रपक्षिविशेषश्च, (भाटइ इति भाषा) हत इति योजना।

(स) उज्जयिनीवर्त्मप्रान्तरे—उज्जयिनीगामिपथपार्श्वस्थितारण्ये। ("प्रान्तरं कोटरेऽरण्ये दूरशून्यपथेऽपि च" इति मेदिनी। "उज्जयिनीवर्त्मनि प्रान्तरे" इति व्यस्तः पाठः क्वचित्)। पिप्पलवृक्षः,—अश्वत्थतरुः, ("प्लक्षतरुः" इति पाठे—पर्कटीवृक्षः)।

(ह) धनुष्काण्डं—धनुर्बाणम्। सन्निधाय—रचित्वा।

(क) अपगता—अपसृता इत्यर्थः।

(ख) व्याप्तम्—आच्छन्नम्, आक्रान्तमित्यर्थः।

(ग) पुण्यात्मना—पूतस्वभावेन। पापरहितेन—निष्पापेन।

(घ) प्रसार्य—विस्तार्य।

पुनस्तन्मुखे छाया कृता। ततो (ङ) निर्भरनिद्रासुखिना पथि भ्रमणाऽऽकुलेन परिश्रान्तेन पान्थेन (च) मुखव्यादानं कृतम्। अनन्तरं (छ) स्वभावदौर्जन्यात् (ज) परसुखमसहिष्णुः स काकस्तस्य मुखे (झ) पुरीषोत्सर्गं कृत्वा पलायितः। ततो यावदसावुत्थाय ऊर्ध्वं निरीक्षते, तावत् तेनावलोकितो हंसः (ञ) काण्डेन हतः। अतोऽहं ब्रवीमि,—'न स्थातव्यम्' इत्यादि।

[ इति हंस-वायसकथा ]।

तथा चोक्तम्,—

त्यज दुर्जनसंसर्गं भज साधुसमागमम्।
कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम्॥ २४॥

देव! वर्त्तकवार्त्तामपि कथयामि। श्रूयताम्,—

काक-वर्त्तककथा।—

एकः काको वृक्षशाखायां स्वपिति; वर्त्तकस्य (ट) अधस्तात् भूमौ निवसति। एकदा सर्वे पक्षिणो भगवतो गरुडस्य

(ङ) निर्भरनिद्रासुखिना—प्रगाढ़निद्रासुखम् अनुभवता। भ्रमणाऽऽकुलेन—पर्यटनक्लिष्टेन।

(च) मुखव्यादानं—मुखविस्तारम्; निद्रावेशेनैव इति भावः; दृश्यते च केषाञ्चिदेवं स्वभावः यत् ते मुखं व्यादायैव निद्रां यान्ति।

(छ) स्वभावदौर्जन्यात्—स्वभावतः दुष्टत्वात्।

(ज) परसुखमसहिष्णुः,—परसुखं सोढ़मक्षमः।

(झ) पुरीषोत्सर्गं—मलत्यागम्।

(ञ) काण्डेन—बाणेन।

(२४) असत्सङ्गस्य परिणाममुक्त्वा इदानीं वृद्धचाणक्योक्तकर्त्तव्यधर्म्मानाह, त्यजेति।—दुर्जनसंसर्गम् असत्सङ्गं, त्यज जहीहि, साधुसमागमं सज्जनसङ्गतिं, भज अवलम्बस्व, अहोरात्रं रात्रिन्दिवं, नित्यमित्यर्थः, पुण्यं धर्मानुष्ठानं, कुरु विधेहि, नित्यं सर्वदा, अनित्यतां संसारस्य अस्थायित्वं, स्मर परिचिन्तय।

(ट) अधस्तात्—तन्नदेशे, वृक्षस्येति शेषः।

(ठ) यात्राप्रसङ्गेन समुद्रतीरं प्रचलिताः। तत्र काकेन सह वर्त्तकश्चलितः। अथ गच्छतो गोपालस्य (ड) मस्तकावस्थित-दधिभाण्डात् वारं वारं तेन काकेन दधि खाद्यते। ततो यावदसौ दधिभाण्डं भूमौ निधाय ऊर्द्ध्वमवलोकते, तावत् तेन काकवर्त्तकौ दृष्टौ। ततस्तेन (ढ) दृष्टः काकः पलायितः; वर्त्तकः स्वभावनिरपराधः (ण) मन्दगतिस्तेन प्राप्तो व्यापादितः। अतोऽहं ब्रवीमि,—'न गन्तव्यम्' इत्यादि"।

[ इति काक-वर्त्तककथा ]।

ततो मयोक्तम्,—"भ्रातः शुक ! किमेवं ब्रवीषि ? (त) मां प्रति यथा श्रीमद्देवपादास्तथा भवानपि"। शुको ब्रूते,—"अस्त्वेवं, किन्तु,—

दुर्जनैरुच्यमानानि सस्मितानि प्रियाण्यपि।
अकालकुसुमानीव भयं सञ्जनयन्ति मे ॥ २५ ॥

---

(ठ) यात्राप्रसङ्गेन—पर्व्वनोत्सवोपलक्षेण, ("यात्रा तु यापनेऽपि स्यात् रथोत्सवयोः स्त्रियाम्" इति मेदिनी)।

(ड) मस्तकेति।—शिरःस्थितदधिपात्रात्।

(ढ) "दृष्टः" इत्यत्र "खेदितः" इति पाठे—क्लेशितः, दूरीकरणव्यर्थ-श्रमेण पीड़ित इत्यर्थः।

(ण) मन्दगतिः,—मन्दा मन्थरा, गतिर्यस्य सः।

(त) मामिति।—श्रीमद्देवपादाः,—श्रीमन्महाराजचरणाः, महाराज स्वयं, मां प्रति यथा स्थापितविश्वासाः तथा भवानपि कृतविश्वासो भवेत्यर्थः।

(२५) दुर्ज्जनः प्रियवचनोऽपि पयोमुखविषकुम्भवत् भीतिप्रद इत्याह, दुर्जनैरिति।—दुर्जनैः क्रूरप्रकृतिभिः, उच्यमानानि कथ्यमानानि, सस्मितानि ईषद्धास्ययुक्तानि, हास्यपूर्व्वकाणि इत्यर्थः, प्रियाणि प्रीतिपूर्णवचनानि अपि. अकालकुसुमानि असमयजातानि पुष्पाणि इव, मे मम, भयं शङ्कां, सञ्जनयन्ति उत्पादयन्ति; अकालकुसुमानि यथा नेत्रतर्पणान्यपि अमङ्गलसूचकानि भवन्ति, तथा दुर्जनानां सहास्यसप्रेमवचनानि श्रुतिसुखदान्यपि परिणामविरसानि भवन्तीति निष्कर्षः।

दुर्जनत्वञ्च भवतः (थ) वाग्व्यापारादेव (द) प्रत्यक्षीकृतम् । यतः अनयोर्भूपालयोर्विग्रहे भवद्वचनमेव (ध) निदानम् । पश्य,—

प्रत्यक्षेऽपि कृते दोषे मूर्खः सान्त्वेन तुष्यति ।
रथकारो निजां भार्य्यां सजारां शिरसाऽकरोत्" ॥२६॥

(न) मयोक्तम्,—"कथमेतत् ?" । शुकः कथयति,—

रथकार-तद्वधूजारकथा ।—

"अस्ति श्रीनगरे मन्दमतिर्नाम रथकारः । स च स्वभार्य्यां (प) बन्धकीं जानाति । किन्तु जारेण समम् एकस्थाने स्वचक्षुषा न पश्यति । ततोऽसौ रथकारः 'अहमन्यं ग्रामं गच्छामि' इत्युक्त्वा प्रचलितः । स कियद्दूरं गत्वा पुनरागत्य स्वगृहे खट्वातले (फ) निभृतं स्थितः । अथ 'मम भर्त्ता

---

अकालपुष्पोद्गमेन वृक्षाणामुत्पादिका शक्तिर्व्यज्यते, अमङ्गलमपि सम्भाव्यते इति प्रसिद्धिः ।—"अद्भुतानि प्रसूयन्ते तत्र देशस्य विद्रवः । अकाले फलपुष्पाणि देशविद्रवकारणम्" ॥ इति मत्स्यपुराणधृतवचनात् । नातो भवद्वचनं विश्वास्यमिति हृदयम् ।

(थ) वाग्व्यापारात्—वचनरचनाचातुर्य्यात् ।

(द) प्रत्यक्षीकृतं—प्रत्यक्षमेव दृष्टं, प्रमाणीकृतम् इत्यर्थः ।

(ध) निदानं—मूलकारणम् ।

(२६) नाहं मूर्खः यत् वचनप्रत्ययेनैव दुर्जनं भवन्तं सुजनम् अवैमि, इति दृष्टान्तेनाह, प्रत्यक्षे इति ।—प्रत्यक्षे समक्षे, दोषे अपराधे, कृतेऽपि अनुष्ठितेऽपि, मूर्खः मन्दबुद्धिर्जनः, सान्त्वेन सान्त्ववचनेन, चाटुवादेनेत्यर्थः, तुष्यति प्रसीदति । अत्र दृष्टान्तमाह,—रथकारः काष्ठतट्, "छुतार" इति ख्यातः, (तक्षा तु वर्द्धकिस्त्वष्टा रथकारश्च काष्ठतट्" इत्यमरः) सजाराम् उपपतिसहितां, निजां स्वकीयां, भार्य्यां पत्नीं, शिरसा मस्तकेन, अकरोत् मस्तके निहितवान्, भार्य्यायाश्चाटुवादेन तुष्टः सन्निति शेषः ।

(न) "राजोवाच" इति पाठान्तरम् ।

(प) बन्धकीं—कुलटां, व्यभिचारिणीम् इत्यर्थः ।

(फ) निभृतं—सुगुप्तमित्यर्थः ।

ग्रामान्तरं गतः' इति (ब) उपजातविश्वासया तद्वधा जारः सन्ध्याकाले एवाऽऽहूतः। पश्चात् तेन जारेण समं तस्यां खट्वायां (भ) निर्भरं क्रीड़न्ती खट्वाऽधःस्थितस्य स्वामिनः किञ्चिदङ्गस्पर्शात् स्वामिनं (म) मायाविनं विज्ञाय सा (य) विषण्णा अभवत्। ततो जारेणोक्तम्,—"किमिति मया सह अद्य निर्भरं न रमसे? (र) विस्मितेव प्रतिभासि?"। अथ तयोक्तम्,—"अनभिज्ञोऽसि, योऽसौ मे प्राणेश्वरः, येन मम (ल) आकौमारं सख्यं, सोऽद्य ग्रामान्तरं गतः, तेन विना सकलजनपूर्णोऽप्ययं ग्रामो मां प्रति अरण्यवत् प्रतिभाति। किं (व) भावि? तत्र (श) परस्थाने किं खादितवान्? कथं वा प्रसुप्तः? इत्यस्मद्धृदयं विदीर्यते"। जारेणोक्तम्,—"तत् किम् एवंविधा (ष) स्नेहभूमिः स ते

---

(ब) उपजातविश्वासया—उपजातः सञ्जातः, विश्वासः प्रत्ययः यस्यास्तया कृतप्रत्ययया, विश्वासं कृतवत्या इत्यर्थः, निःशङ्कितया इति यावत्।

(भ) निर्भरं—नितराम्। क्रीड़न्ती—रममाणा।

(म) मायाविनं—कपटिनम्, "अन्यं ग्रामं गच्छामि" इति कपटवाक्येन प्रतारयन्तमित्यर्थः।

(य) विषण्णा—दुःखिता, व्याकुलहृदया इति यावत्।

(र) विस्मितेव—चकितेव, आश्चर्यान्वितेव इति वा, मूर्खो मे भर्त्ता कदा ईदृक् चातुर्यं शिक्षितवान्, कदा वा सुगुप्तमागत्य खट्वातले आत्मगोपनं कृतवान्? इति विचिन्त्य विस्मिता इति भावः। ("विषण्णेव" इति पाठस्तथा प्रस्तावोपयोगितया साध्वीति मन्तव्यम्)। प्रतिभासि—लक्षिताऽसि। [प्रति+भा+लट्-सि]।

(ल) आकौमारं—बाल्यावधि। सख्यं—समप्राणता, प्रणयः इत्यर्थः।

(व) भावि—भविष्यति [भू+णिनिः]।

(श) परस्थाने—परगृहे।

(ष) स्नेहभूमिः,—प्रणयास्पदम्।

भर्त्ता (स) कलहङ्कारः ?"। बन्धकी ब्रूते,—"रे वर्वर! किं ब्रवीषि ? शृणु,—

परुषाण्यपि या प्रोक्ता दृष्टा वा क्रुद्धचक्षुषा।
सुप्रसन्नमुखी भर्त्तुः सा नारी धर्मभाजनम् ॥ २७ ॥

अपरञ्च,—नगरस्थो वनस्थो वा पापो वा यदि वा शुचिः।
यासां स्त्रीणां प्रियो भर्त्ता तासां लोका महोदयाः ॥२८॥

अन्यच्च,—भर्त्ता हि परमं नार्य्या भूषणं भूषणैर्विना।
एषा विरहिता तेन शोभनाऽपि न शोभते ॥२९॥

---

(स) कलहंकारः,—कलहं विवादं करोति इति विरुद्धवादी। ("रथकारः" इति पाठान्तरम्)।

(२७) कुलटा मूर्खस्वामिने स्वपातिव्रत्यं प्रख्यापयितुं चातुर्य्यमभिव्यञ्जयन्ती महाभारतादिविविधपुराणमवलम्ब्य श्लोकत्रयेण पातिव्रत्यधर्ममाह, परुषाण्यपीति। —या नारी, परुषाणि कर्कशानि, अप्रियाणि इत्यर्थः, प्रोक्ताऽपि सम्यक् अभिहिताऽपि, वा अथवा. क्रुद्धचक्षुषा कोपपूर्णनयनेन, किमुत प्रसन्नेन सस्नेहेन चक्षुषा इति भावः, दृष्टा सती, अपि भर्त्रा इति शेषः, भर्त्तुः स्वामिनः, सुप्रसन्नमुखी प्रफुल्लानना, अनुकूलकारिणी इत्यर्थः, वर्त्तते इति शेषः, सा नारी स्त्री, धर्मभाजनं धर्मस्य धर्मानुष्ठानस्य, भाजनं पात्रं, धार्मिका इत्यर्थः, पतिव्रता इति यावत्; स्वामी यथा तथा आचरतु, पतिव्रतया तु सर्वदाऽयं सेव्य इति भावः। (भारतानुशासनपर्वाण दानधर्मव्याख्यानप्रकरणे, "परुषाण्यपि चोक्ता या दृष्टा क्रुद्धेन चक्षुषा। सुप्रसन्नमुखी भर्तुर्या नारी सा पतिव्रता" ॥ इति पाठान्तरम्)।

(२८) तच्च शुभफलसन्दर्शनेन द्रढ़यति, नगरस्थ इति।—नगरस्थः नगरवासी, धनाढ्य इत्यर्थः, वा अथवा, वनस्थः वनवासी, अकिञ्चनः इति भावः, पापः पतितः वा, यदि वा अथवा, शुचिः पवित्रात्मा, यादृगवस्थोऽपीति भावः, भर्त्ता स्वामी, यासां स्त्रीणां प्रियः प्रीतिभाजनं, भवतीति शेषः, तासां नारीणां, महोदयाः महान् उदयः अभ्युदयः, सुखमित्यर्थः, येषु ते तथोक्ताः, लोकाः स्वर्गादिलोकाः, भवन्तीति शेषः, ता एव नार्य्य इह परत्र च सुखेन तिष्ठन्तीत्यर्थः।

(२९) परत्र शुभफलमुक्ता ऐहिकमपि तदाह, भर्त्तेति।—भर्त्ता हि पतिरेव, नार्य्याः स्त्रियाः, भूषणैरलङ्कारैः, विना, अपीति शेषः, परमम् उत्कृष्टं, भूषणम्

त्वञ्च जारः पापमतिः; (ह) मनोलौल्यात् पुष्पताम्बूलसदृशः कदाचित् सेव्यसे कदाचिन्न सेव्यसे च। स च मे स्वामी मां विक्रेतुं देवेभ्यो ब्राह्मणेभ्यो वा दातुं समर्थः। किं बहुना, —तस्मिन् जीवति जीवामि, तन्मरणे चानुमरणं करिष्यामि, इत्येव मे निश्चयः। यतः,—

तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानवे।
तावत्कालं वसेत् स्वर्गे भर्त्तारं याऽनुगच्छति ॥ ३० ॥

अन्यच्च,—व्यालग्राही यथा व्यालं बिलादुद्धरते बलात्।
तद्वद्भर्त्तारमादाय तेनैव सह मोदते ॥ ३१ ॥

---

अलङ्कारः, शोभासम्पादक इति यावत्, तेन पत्या, विरहिता वर्जिता, एषा नारी शोभनाऽपि रूपलावण्यालङ्कारवत्यपि, न शोभते न राजते, मलिनेव प्रतिभाति इत्यर्थः, कान्तोज्झितायाः सर्वत्रैव अनादरणीयत्वादिति भावः। तथा च चाणक्यः,—"नार्या भूषणं पतिः" इति।

(ह) मनोलौल्यात्—चित्तचाञ्चल्यात्, चित्तविकारवशात् इत्यर्थः। पुष्पताम्बूलसदृशः,—कुसुमवत् पर्णवच्च क्षणप्रमोदहेतुरिति भावः। सेव्यसे—उपभुज्यसे।

(३०) पतिं सन्तोष्य आत्मनि परमविश्वासमुत्पादयितुम् अनुमरणमाहात्म्यं कीर्त्तयति, तिस्र इत्यादिश्लोकद्वयेन।—या नारी, भर्त्तारं पतिं, मृतमिति शेषः, अनुगच्छति अनुसरति, अनुम्रियते इत्यर्थः, सा नारी, मानवे नरदेहे, तिस्रः कोट्यः अर्द्धकोटी च सार्द्धत्रिकोटीसङ्ख्यकानि, यानि यावन्ति, लोमानि रोमाणि, सन्तीति शेषः, तावत्कालं तावत्सङ्ख्यकवर्षं, चिरकालमित्यर्थः, स्वर्गे वसेत् अवतिष्ठेत। (आङ्गिरसस्मृतौ "तावत्कालं वसेत्" इत्यत्र "तावन्त्यब्दानि सा" इति पाठान्तरम्)।

(३१) आङ्गिरसवचनं महाभारतवचनञ्च समुद्धृत्य अनुमृतामाहात्म्यमाह व्यालग्राहीति।—व्यालग्राही व्यालं सर्पं, ग्रहीतुं शीलं यस्य सः आहितुण्डिकः, सर्पाजीव इति यावत्, बिलात् विवरात्, व्यालं सर्पं, बलात् बलेन, बलसाहाय्येन इत्यर्थः, [ल्यब्लोपे पञ्चमी०] यथा उद्धरते उन्नयति, बहिरानयति इत्यर्थः, उद्धृत्य क्रीडति इति यावत्, तद्वत् तथा, भर्त्तारं पतिम्, आदाय गृहीत्वा, निरयादौ देशादुद्धृत्येत्यर्थः, तेनैव सह पत्यैव सार्द्धं, मोदते हृष्यति, रमते इत्यर्थः,

अपरञ्च,—चितौ परिष्वज्य विचेतनं पतिं
प्रिया हि या मुञ्चति देहमात्मनः ।
कृत्वाऽपि पापं शतलक्षमप्यसौ
पतिं गृहीत्वा सुरलोकमाप्नुयात् ॥ ३२ ॥

यतः,—
यस्मै दद्यात् पिता त्वेनां भ्राता वाऽनुमते पितुः ।
तं शुश्रूषेत जीवन्तं संस्थितञ्च न लङ्घयेत्" ॥ ३३ ॥

एतत् सर्वं श्रुत्वा (क) मन्दमतिः स रथकारः,—

---

पातिव्रत्यधर्मेण अनुमृता नारीति शेषः, अनुमृता तु स्वकर्मणा नरकपतितमपि स्वामिनम् अनुमरणजनितपुण्यबलेन स्वर्गं नयतीति भावः । अतो मयाऽपि प्राणेश्वराभावे अनुमर्त्तव्यमेव इति निष्कर्षः ।

(३२) चिताविति ।—शतलक्षम् असङ्ख्येयं, पापं दुष्कृतिं, कृत्वाऽपि आचरित्वाऽपि, या प्रिया या पत्नी, विचेतनं मृतं, पतिं भर्त्तारं, परिष्वज्य आलिङ्ग्य, आत्मनः स्वस्याः, देहं शरीरं, चितौ चितायां, मुञ्चति त्यजति, म्रियते इत्यर्थः, असौ अपि भर्त्रा सह अनुमृता ईदृशी शतलक्षपापकारिणी नारी अपि, पतिं गृहीत्वा भर्त्तारमादाय, सुरलोकं स्वर्गम्, आप्नुयात् गच्छेत्, भर्तृसहमृता स्वर्गे वसेदित्यर्थः, पत्न्याः पतिसहमरणं हि सकलपापप्रक्षालकं स्वर्गसाधनञ्च इति निष्कर्षः । वंशस्थविलं वृत्तम् ।

(३३) जीवतो मृतस्य वा पत्युः पदानुसरणस्य अवश्यकर्त्तव्यत्वे मनुस्मृतेः पञ्चमाध्यायोक्तं श्लोकं प्रमाणयति, यस्मै इति ।—तु पक्षान्तरे, किन्त्वित्यर्थः, ("तु पादपूरणे भेदे समुच्चयेऽवधारणे । पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे" ॥ इति मेदिनी) पिता जनकः, पितुरनुमते आदेशे, स्थित इति शेषः, भ्राता वा सहोदरो वा, एनां कन्यां, यस्मै वराय, दद्यात् प्रयच्छेत्, जीवन्तं जीवनेन विद्यमानं, सजीवमित्यर्थः, तं पतिं, शुश्रूषेत सेवेत, संस्थितञ्च मृतञ्च, ("परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः । मृतप्रमीतौ त्रिष्वेते" इत्यमरः) न लङ्घयेत् नावजानीयात्, अपि तु तमनुसरेदित्यर्थः । ("संस्थितिम्" इति पाठे—भर्त्तुः मर्य्यादाम् इत्यर्थः) । अतो मया सर्व्वथा कर्त्तव्यमिह भर्त्तुरनुसरणमिति भावः ।

(क) मन्दमतिः,—मूर्खः ।

"धन्योऽहं, यस्य (ख) एतादृशी भार्य्या स्नेहवती प्रियवादिनी" इति (ग) मनसि निधाय तां खट्वां स्त्रीपुरुषसहितां मूर्ध्नि धृत्वा सानन्दं नर्त्तितवान्। अतोऽहं ब्रवीमि,—'प्रत्यक्षेऽपि कृते दोषे' इत्यादि"।

[इति रथकार-तद्धनारकथा]।

ततोऽहं तेन राज्ञा (घ) यथाव्यवहारं सम्पूज्य प्रस्थापितः। शुकोऽपि मम पश्चादागच्छन्नास्ते। एतत् सर्वं ज्ञात्वा (ङ) यथाकार्य्यमनुसन्धीयताम्"। चक्रवाको विहस्याऽऽह,—"देव! बकेन एतावद्देशान्तरं गत्वा यथाशक्ति राजकार्य्यमनुष्ठितं, किन्तु स्वभाव एष मूर्खाणाम्। यतः,—

शतं दद्यान्न विवदेदिति विज्ञस्य सम्मतम्।
विना हेतुमपि द्वन्द्वमेतत् मूर्खस्य लक्षणम्" ॥ ३४ ॥

---

(ख) एतादृशी—ईदृशी पतिपरायणा।

(ग) मनसि निधाय—विचिन्त्य।

(घ) यथाव्यवहारं—दूतानुरूपव्यवहारं, दूतं प्रति यादृशः व्यवहारः कर्त्तव्यः तदनुरूपव्यवहारेणेत्यर्थः। सम्पूज्य—समादृत्य। प्रस्थापितः,—प्रेरितः, [प्र+स्था+णिच्+क्तः "अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ" (७।३।३६पा०) इति पुगागमः]।

(ङ) यथाकार्य्ये—कर्त्तव्यानुरूपम्। अनुसन्धीयताम्—अन्विष्यताम्, अवधार्य्यतामित्यर्थः।

(३४) बकस्य मूर्खत्वे हेतुमाह, शतमिति।—शतम् आत्मनः बहुसहस्रकमपि इष्टं स्वार्थं वा, दद्यात् उपेक्षेत, परित्यजेदिति यावत्, परन्तु न विवदेत् न विरुध्यात्, [वैमत्यार्थकवदधातोः आत्मनेपदविधानात् परस्मैपदमव ध्येयम्]। इति एतत्, विज्ञस्य विदुषः, सम्मतम् अभिमतम्, उपदेश इति यावत्, साधवः प्रभूतस्वार्थविनिमयेनापि विवादकारणं परिहर्त्तुं स्वीकुर्व्वन्ति इत्यर्थः, हेतुं कारणं, विनाऽपि द्वन्द्वं कलहः, कर्त्तव्यमिति शेषः, एतत् अकारणकलहकरणरूपं, मूर्खस्य हिताहितविवेकासमर्थस्य, लक्षणं चिह्नं, मूर्खाः खलु अकारणं विग्रहन्ति, पण्डितास्तु कारणे सत्यपि कलहात् निवर्त्तन्ते इत्यर्थः। "कालो गच्छति मूर्खाणां निद्रया कलहेन वा" इति भावः।

राजाऽऽह,—"अलमनेन (च) अतीतोपालम्भनेन, (छ) प्रस्तुतम् (ज) अनुसन्धीयताम्"। चक्रवाको ब्रूते,—"देव ! (झ) विजने ब्रवीमि। यतः,—

वर्णाकारप्रतिध्वानैर्नेत्रवक्त्रविकारतः।
अप्यूहन्ति मनो धीरास्तस्माद्रहसि मन्त्रयेत्" ॥ ३५ ॥

ततो राजा मन्त्री च स्थितौ तत्र, अन्येऽन्यत्र गताः। चक्रवाको ब्रूते,—"देव ! अहमेवं जानामि, कस्यापि (ञ) अस्मन्नियोगिनः (ट) प्रेरणया वकेनेदमनुष्ठितम्। यतः,—

वैद्यानामातुरः श्रेयान् व्यसनी यो नियोगिनाम्।
विदुषां जीवनं मूर्खः सद्वर्णो नृपतेर्जनः" ॥ ३६ ॥

---

(च) अतीतोपालम्भनेन—अतिक्रान्तविषये तिरस्करणेन, गतस्य शोचनयेत्यर्थः।

(छ) प्रस्तुतम्—प्रकृतविषयः, आसन्नविग्रहे कर्त्तव्यम् इत्यर्थः।

(ज) अनुसन्धीयताम्—अन्विष्यतां, निरूप्यताम् इत्यर्थः।

(झ) विजने—रहसि, निर्जने इत्यर्थः।

(३५) निभृतमन्त्रणस्य कारणमाह, वर्णेति।—धीराः विद्वांसः, वर्णः मुखरागादिः, आकारः वाह्याकृतिः, प्रतिध्वानः प्रतिध्वनिः, स्वरसंयोगविशेष इत्यर्थः, तैः, नेत्रस्य वक्त्रस्य तयोर्विकारस्तेन नयनभङ्ग्या मुखभङ्ग्या अपि, मनः हृद्गतं भावम्, ऊहन्ति तर्केण जानन्ति, ज्ञातुं शक्नुवन्तीत्यर्थः, तस्मात् मन्त्रभेदसम्भावनाया हेतोः, रहसि विजने, मन्त्रयेत् मन्त्रणां कुर्यात्, विचारयेदित्यर्थः, "षट्कर्णो भिद्यते मन्त्रः" इति स्मरणादिति भावः।

(ञ) अस्मन्नियोगिनः,—अस्माकमनुजीविनः।

(ट) प्रेरणया—नियोगेन, अस्मन्नियोगिकर्त्तृकनियुक्तः सन्नित्यर्थः।

(३६) राजपुरुषाणां नृपान्तरेण विग्रहसङ्घटने हेतुमाह, वैद्यानामिति।—आतुरः रोगी, वैद्यानां चिकित्सकानां, श्रेयान् मङ्गलजनक इत्यर्थः, लाभजनकत्वात् अभीष्टः इति भावः। यः, प्रभुरिति शेषः, व्यसनी विपन्नः, (वयतामभियोगादिति भावः), द्यूतपानाद्यासक्तः वा, सः नियोगिनाम् अनुजीविनां, श्रेयान् श्रेयस्करः, विविधोपायेन प्रभुं वञ्चयित्वा तद्धनेन आत्मपूरणावकाशलाभादिति भावः। मूर्खः निर्बोधः, विदुषां पण्डितानां, जीवनं प्राणरक्षाहेतुभूत इत्यर्थः, मूर्खाणुपदिश्य विविधप्रलोभन

राजा अब्रवीत्,—"भवतु, कारणमत्र पश्चान्निरूपणीयम्; सम्प्रति यत् कर्त्तव्यं, तत् ब्रूहि"। चक्रवाको ब्रूते,—"देव! (ठ) प्रणिधिस्तावत् तत्र (ड) प्रहीयताम्। ततः (ढ) तदनुष्ठानं बलाबलञ्च जानीमः। तथा हि,—

भवेत् स्वपरराष्ट्राणां कार्य्याकार्य्यावलोकने।
चारश्चक्षुर्महीभर्त्तुर्यस्य नास्त्यन्ध एव सः ॥ ३७ ॥

स च (ण) द्वितीयं विश्वासपात्रं गृहीत्वा यातु। तेनासौ

---

वाक्येन तान् प्रलोभ्य च पण्डिताः जीविकां निर्वाहयन्ति इति भावः। कलहयुक्तः, विवदमान इत्यर्थः, ("द्वन्द्वं रहस्ये कलहे तथा मिथुनयुग्मयोः" इति मेदिनी) जनः प्रजा इत्यर्थः, नृपतेः राज्ञः, जीवनस्य अर्थदण्डाद्युपायेन धनार्जन-सम्भावनयेति भावः। प्रभोर्व्यसनस्य नियोगिनां लाभजनकत्वात् अस्माकमेव दुर्गे कश्चित् पुरुषः विग्रहमिमं बकेन उत्पादयामास, यतः स्वार्थपराणां हि स्वाभीष्टसाधने प्रयासः, न जनपदाभीष्टसाधने इत्याशयः।

(ठ) प्रणिधिः,—चारः।

(ड) प्रहीयतां—प्रस्थाप्यतां, प्रेर्य्यतामित्यर्थः [प्र+हा+कर्मणि लोट्-त "घुमास्थागापाजहातिसां हलि" (६।४।६६ पा०) इति ईत्]।

(ढ) तदनुष्ठानं—तस्य राज्ञः कार्य्यं, युद्धोद्योगमित्यर्थः। बलाबलं—किं प्रभूतबलसम्पन्नः परिमितबलसम्पन्नो वा ? इत्यर्थः। जानीमः,—अवगच्छामः [ज्ञा लट्-मिप् "क्र्यादिभ्यः श्ना" (३।१।८१ पा०) इति श्ना "ई हल्यघोः" (६।४।११३ पा०) इति ईत् "श्नाऽभ्यस्तयोः—" (६।४।११२ पा०) इति आकारलोपः]।

(३७) राज्यशासने चाराणामुपयोगितामाह, भवेदिति।—महीभर्त्तुः राज्ञः स्वपरराष्ट्राणां स्वस्य परेषाञ्च राज्यानां सम्बन्धे, कार्य्याकार्य्यावलोकने किं कर्त्तव्यं किमकर्त्तव्यमित्यादिविषयपरिज्ञाने, स्वस्य पौरजानपदाः अधिकृताश्च तथा परराष्ट्रभूपालास्तत्सम्बन्धिनश्च किं कुर्वन्ति किं न कुर्वन्ति इत्यादिकं परिज्ञाय कर्त्तव्यनिर्णये इत्यर्थः, चारः गूढ़चर एव, चक्षुर्भवेत्, चारमुखादेव महीपतिः सर्वं वेत्तीत्यर्थः; यस्य नृपस्य, नास्ति, चारचक्षुरिति शेषः, स अन्धः एव अन्धवत् कर्त्तव्यसम्पादने अक्षमः इत्यर्थः, स्वपरराष्ट्राणां गूढ़व्यापारज्ञानाभावादिति भावः; अतः अवश्यमेव प्रणिधयः प्रेषितव्या इति निष्कर्षः।

(ण) द्वितीयं विश्वासपात्रं—सुविश्वस्तमपरं चारम्।

ह्रयं तत्रावस्थाय द्वितीयं (त) तत्रत्यमन्त्रकार्यं सुनिभृतं निश्चित्य निगद्य प्रस्थापयतु। तथा चोक्तम्,—

तीर्थाश्रमसुरस्थाने शास्त्रविज्ञानहेतुना।
तपस्विव्यञ्जनोपेतैः स्वचरैः सह संवदेत्॥ ३८॥

गूढ़चारश्च यो जले स्थले चरति; ततोऽसावेव बकः (थ) नियुज्यताम्। एतादृश एव कश्चित् बको (द) द्वितीयत्वेन प्रयातु, (ध) नियुज्यलोकाश्च राजद्वारे तिष्ठन्तु। किन्तु देव! एतदपि (न) सुगुप्तमनुष्ठातव्यम्। यतः,—

---

(त) तत्रत्यमन्त्रकार्यं—परराज्यसम्बन्धिगुप्तमन्त्रणादिकम्। सुनिभृतं—सुगुप्तम्। निगद्य—उक्त्वा, उपदिश्य इत्यर्थः। [नि+गद+ल्यप्]।

(३८) कामन्दकवचनमनुसृत्य गुप्तचरैः सह मन्त्रणायाः स्थानं प्रकारञ्चाह, तीर्थेति।—तपस्विनः तापसस्य, व्यज्यते अनेनेति व्युत्पत्त्या व्यञ्जनं चिह्नं, वेशः इत्यर्थः, तेन उपेताः अन्विताः तैः तपस्विवेशधारिभिः, स्वचरैः स्वकीयगूढ़चरैः चारैः, तीर्थं काश्यादिपुण्यस्थानम्, आश्रमः मुन्यादीनामावासः, तपोवनम् इत्यर्थः, सुरस्थानं देवालयः तस्मिन्, [एतेषां समाहारः] शास्त्रविज्ञानहेतुना शास्त्रार्थालोचनाव्याजेनेत्यर्थः, सह संवदेत् परराष्ट्रभावं जानीयात्, राजेति शेषः। यद्वा,—तीर्थाश्रमसुरस्थाने, अवस्थितैरिति शेषः, तपस्विव्यञ्जनोपेतैः स्वचरैः स्वकीयविश्वस्तचरान्तरैः सह, शास्त्रविज्ञानहेतुना, समागत्येति शेषः, संवदेत्, प्रणिधिरिति शेषः। ("तीर्थाश्रमसुरस्थाने" इत्यत्र "तीर्थाश्रमाश्रयस्थाने" तथा "संवदेत्" इत्यत्र "संवसेत्" इति कामन्दकनीतौ द्वादशसर्गोक्तपाठान्तरम्)।

(थ) नियुज्यताम्—आदिश्यतां, प्रणिधित्वेन प्रेर्यतामित्यर्थो वा। ("तद्गृह्यताम्" इति पाठे—प्रणिधित्वेन स्वीक्रियतामित्यर्थः)।

(द) द्वितीयत्वेन—सहचरत्वेनेत्यर्थः।

(ध) नियुज्यलोकाः,—प्रणिधित्वे नियुक्तस्य परिजनाः। तिष्ठन्तु—स्थापयन्तु इत्यर्थः, तथात्वे तस्य विश्वासहननस्यावसराभावादिति भावः। ("तद्गृहलोकाश्च" इति पाठान्तरम्)।

(न) सुगुप्तम्—अतीव गूढ़म्। अनुष्ठातव्यं—कर्त्तव्यम् [अनु+स्था+तव्य "उपसर्गात् सुनोतिसुवति—" (८।३।६५ पा०) इति षत्वम्]।

षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तश्च वार्त्तया।
इत्यात्मना द्वितीयेन मन्त्रः कार्य्यो महीभृता ॥ ३९ ॥

अपरञ्च,—मन्त्रभेदे हि ये दोषा भवन्ति पृथिवीपतेः।
न शक्यास्ते समाधातुमिति नीतिविदां मतम्" ॥४०॥

राजा (प) विमृश्योवाच,—"प्राप्तस्तावन्मयोत्तमः प्रणिधिः"। मन्त्री ब्रूते,—"देव! तदा सङ्ग्रामे जयोऽपि प्राप्तः"। (फ) अत्रान्तरे प्रतीहारः प्रविश्य प्रणम्योवाच,—"देव! जम्बूद्वीपादागतो द्वारि शुकस्तिष्ठति"। राजा चक्रवाकमालोकते। चक्रवाकेनोक्तम्,—(ब) "कृताऽऽवासे गत्वा तावत् तिष्ठतु, पश्चादानीय

(३९) मन्त्रिवीरेकोऽपि मध्यवर्त्ती वर्त्तते चेत् मन्त्रभेदः स्यात्, किं पुनर्बहवः इत्याह, षट्कर्ण इति।—मन्त्रः मन्त्रणा, षट्कर्णः षट् कर्णाः श्रवणानि यत्र सः त्रिभिः श्रुत इत्यर्थः, तथा वार्त्तया जनश्रुत्या, लोकमुखेनेत्यर्थः, ("वार्त्ता स्यात् जनश्रुतौ" इत्यमरः) प्राप्तः विदितश्च सन्, भिद्यते भेदं प्राप्नोति, जनसमाजे प्रकाशितो भवतीत्यर्थः, इति अस्माद्धेतोः, महीभृता राज्ञा, आत्मना स्वयं, द्वितीयेन द्वितीयपुरुषेण, सचिवेन सह इत्यर्थः, मन्त्रः मन्त्रणा, कार्य्यः कर्त्तव्यः, मन्त्रभेदे कार्य्यहानिः स्यादिति भावः। ("षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णस्तु धार्य्यते। द्विकर्णस्य तु मन्त्रस्य ब्रह्माऽप्येको न बुध्यते" ॥ इति गरुड़पुराणोक्तः पाठः)।

(४०) मन्त्रभेदस्य अनिष्टजनकत्वमाह, मन्त्रभेदे इति।—पृथिवीपतेः राज्ञः मन्त्रभेदे मन्त्रणाप्रकाशे, ये दोषाः अनिष्टानि, भवन्ति जायन्ते, ते दोषाः, समाधातुं संशोधयितुं, न हि नैव, शक्याः पार्य्याः, इति नीतिविदां नीतिज्ञानां, मतं सम्यक् उक्तिरिति यावत्, मन्त्रप्रकाशजनितमनिष्टन्तु अशक्यप्रतिकारमिति सर्वथा गोपितव्यमिति भावः। ("पृथिवीपतेः" इत्यत्र "पृथिवीक्षिताम्" तथा "इति नीतिविदां मतम्" इत्यत्र "कथञ्चिदिति मे मतिः" इति भारतीयाश्रमवासिकपर्वोक्तपाठान्तरम्। कालिकापुराणेऽपि श्लोकस्यास्य अनुरूपो दृश्यते)।

(प) विमृश्य—विविच्य।

(फ) अत्रान्तरे—अस्मिन्नवकाशे। प्रतीहारः,—दौवारिकः।

(ब) कृताऽऽवासे—कृतः राष्ट्रान्तरादागतदूतस्य अवस्थानार्थं निरूपितः, यः आवासः तस्मिन्। ("तावत्कृताऽऽवासे तिष्ठतु" इति पाठान्तरम्)।

द्रष्टव्यः" । "यथा आज्ञापयति देवः" इत्यभिधाय प्रतीहारः मुद्रां गृहीत्वा तमावासस्थानं गतः । राजाऽऽह,—(अ) "विग्रहस्तावत् समुपस्थितः" । चक्रवाको ब्रूते,—"देव ! तथाऽपि (र) सहसा विग्रहो न (य) विधिः । यतः,—

स किंभृत्यः स किंमन्त्री य आदावेव भूपतिम् ।
युद्धोद्योगं स्वभूत्यागं निर्दिशत्यविचारितम् ॥ ४१ ॥

अन्यच्च,—विजेतुं प्रयतेतारीन् न युद्धेन कदाचन ।
अनित्यो विजयो यस्मात् दृश्यते युध्यमानयोः ॥ ४२ ॥

अपरञ्च,—साम्ना दानेन भेदेन समस्तैरथवा पृथक् ।
साधितुं प्रयतेतारीन् न युद्धेन कदाचन ॥४३॥

---

(अ) विग्रहः,—युद्धम् ।

(र) सहसा—सम्यगनालोच्य ।

(य) विधिः,—विधेयः, शास्त्रानुमोदितः इत्यर्थः [ विधीयते इति कर्मणि क्तिः ] ।

(४१) सहसा विग्रहीतुम् उपदिशतः दुर्मन्त्रित्वमाह, स किमिति ।—यः आदौ प्रथममेव, अविचारितम् अविमृष्टं यथा तथा, पूर्व्वमनालोच्यैवेत्यर्थः, भूपतिं राजानं, युद्धोद्योगं युद्धाय उद्योगः चेष्टा तम्, अथवा स्वभूत्यागं पलायनं स्वराज्यार्पणं वा, निर्दिशति निरूपयति, उपदिशतीति यावत्, स किं कुत्सितः, अनुपयुक्त इत्यर्थः, भृत्यः अनुचरः, एवं सः किं कुत्सितः, मन्त्री मन्त्रणादायकः ; नैतादृशस्य वचनं ग्राह्यमिति भावः ।

(४२) "सहसा विग्रहो न विधिः" इति श्लोकं समर्थयितुं मनुसंहितायाः सप्तमाध्यायोक्तश्लोकद्वयमुपजीव्य आह, विजेतुमिति ।—यस्मात् कारणात्, युध्यमानयोः युद्धे प्रवर्त्तमानयोः द्वयोरपीत्यर्थः, विजयः जयलाभः, अनित्यः अनिश्चितः, दृश्यते लक्ष्यते, तस्मात् कदाचन कदाचिदपि, युद्धेन समरेण उपायेन, अरीन् शत्रून्, विजेतुं पराभवितुं, न प्रयतेत न चेष्टेत । ( श्लोकस्यास्य प्रथमार्द्धं मनुसंहितायां "पराजयश्च सङ्ग्रामे तस्मात् युद्धं विवर्ज्जयेत्" इत्येवं परिहृत्या शेषार्द्धत्वेन, शेषार्द्धन्तु प्रथमार्द्धत्वेन विन्यस्तं दृश्यते ) ।

(४३) साम्नेति ।—साम्ना प्रियवचनेन, अनुवशीकरणोपायभेदेन इत्यर्थः,

यतः,—सर्व एव जनः शूरो ह्यनासादितविग्रहः।
अदृष्टपरसामर्थ्यः सदर्पः को भवेन्न हि ? ॥ ४४ ॥

किञ्च,—न तथोत्थाप्यते ग्रावा प्राणिभिः दारुणा यथा।
अल्पोपायात् महासिद्धिरेतत् मन्त्रफलं महत् ॥ ४५ ॥

तच्च साम पञ्चविधं, तथा च,—"परस्परोपकाराणां दर्शनं गुणकीर्तनम्। सम्बन्धस्य समाख्यानमायत्याः सम्प्रकाशनम् ॥ वाचा पेशलया साधु तवाहमिति चार्पणम्। इति सामविधानज्ञैः साम पञ्चविधं स्मृतम्" ॥ इति। दानेन धनादिप्रदानेन, भेदेन शत्रुप्रकृतीनां परस्परम् अन्तर्विच्छेदं सङ्घटयित्वा आत्मसात्करणेन, समस्तैः एभिस्त्रिभिः युगपत्प्रयुक्तैः, अथवा पृथक् व्यस्तैर्वा, अरीन् शत्रून्, साधितुं वशीकर्तुं, ("विजेतुम्" इति मनुसंहितायाः सप्तमाध्यायोक्तपाठः) प्रयतेत चेष्टेत; युद्धेन दण्डरूपेण चतुर्थेन उपायेन, कदाचन न, प्रयतेतेति शेषः; ततः विजयसम्भावनाया अनित्यत्वादिति भावः। युद्धे अरिविजिगीष्वोरेकतरपराभवस्यावश्यम्भाव्यत्वात् सामादिवर्गैः शत्रून वशीकर्तुं शक्नुयाच्चेत्, युद्धं न कुर्य्यादिति निष्कर्षः। (भारतशान्तिपर्वणि राजधर्मव्याख्यानप्रकरणे अनयोरनुरूपौ श्लोकौ यथा,—"वर्जनीयं सदा युद्धं राज्यकामेन धीमता। उपायैस्त्रिभिरादानमित्युवाच बृहस्पतिः ॥ सान्त्वेन तु प्रदानेन भेदेन च नराधिपः। यमर्थं शक्नुयात् प्राप्तुं तेन तुष्यति पण्डितः" ॥ इति।

(४४) युद्धम् एव शूराशूरयोः परीक्षास्थानम् इति वक्तुमाह, सर्व इति।—अनासादितः अप्राप्तः, विग्रहः युद्धं येन सः, युद्धे अप्रवर्त्तमान इत्यर्थः, सर्व एव जनः शूरो हि शूरम्मन्य एव, भवतीति शेषः, हि तथाहि, अदृष्टम् अपरिज्ञातं, परस्य शत्रोः, सामर्थ्यं विक्रमः येन स तथोक्तः, शत्रुबलमजानन्, को जनः सदर्पः सगर्वः, न भवेत् ? अपि तु सर्व एव इत्यर्थः।

(४५) नेति।—ग्रावा प्रस्तरः, दारुणा काष्ठनिर्मितयन्त्रेण करणेन, ("कपिकल" इति प्रसिद्धेन) प्रस्तरनिम्ने काष्ठखण्डं दत्त्वा सवेगमुत्थापनेन इति वा, यथेदन्नापीति भावः, यथा उत्थाप्यते उत्क्षिप्यते, उत्थापयितुं शक्यते इत्यर्थः, प्राणिभिः जन्तुभिः, ज्ञानसामर्थ्ययुक्तैरपीति भावः, तथा न, उत्थाप्यते इति शेषः, अल्पोपायात् क्षुद्रादपि साधनात्, महती सिद्धिः महासिद्धिः महान् फललाभः, भवति चेदिति शेषः; एतत् एव महत् उत्तमं, मन्त्रस्य फलं मन्त्रफलं मन्त्रणायाः प्रभावः; यया तु मन्त्रणया स्वल्पेनैव उपायेन महती सिद्धिः जायते, सैव मन्त्रणा प्रशस्ता इति भावः।

किन्तु (र) विग्रहमुपस्थितं विलोक्य व्यवह्रियताम् । यतः,—

यथा कालकृतोद्योगात् कृषिः फलवती भवेत् ।
तद्वन्नीतिरियं देव ! चिरात् फलति न क्षणात् ॥ ४६ ॥

अपरञ्च,—दूरे भीरुत्वमासन्ने शूरता महतो गुणः ।
विपत्तौ हि महांल्लोके धीरत्वमधिगच्छति ॥ ४७ ॥

अन्यच्च,—प्रत्यूहः सर्वसिद्धीनामुत्तापः प्रथमः किल ।
अतिशीतलमप्यम्भः किं भिनत्ति न भूतलम् ? ॥ ४८ ॥

---

(र) विग्रहं—युद्धम्, उपस्थितं—प्रवृत्तमेव, विलोक्य—इत्येवं निश्चित्यैवेत्यर्थः, व्यवह्रियतां—कर्त्तव्यं निरूप्यतामित्यर्थः उद्‌युज्यतामित्यर्थो वा ।

(४६) यथेति ।—काले यथासमये, कृतः सम्पादितः, उद्योगः हलचालनादि-चेष्टा तस्मात्, कृषिः हलकर्षणं कर्म्म, यथा फलवती सफला, शस्योत्पादिकेत्यर्थः, भवेत्, हे देव ! राजन् !, इयं नीतिः राजनीतिः, तद्वत् तथा, चिरात् बहोः कालात् परं, फलति सिध्यति, सफला भवतीत्यर्थः, न क्षणात् न अल्पकालेन, फलतीत्यनुषङ्गः ; अतः युद्धारम्भात् प्रागेव उद्योगः करणीयः इति भावः ।

(४७) शूरत्वाशूरत्वप्रदर्शनयोः कालनियममाह, दूरे इति ।—दूरे भय-कारणे दूरवर्त्तिनि सति, भीरुत्वम् आशङ्का, भयहेतुपरिहारचेष्टा इत्यर्थः, आसन्ने समीपस्थे सति, भयकारणे इति शेषः, शूरता पराक्रमप्रदर्शनम्, इत्येव महतः प्राज्ञस्य, गुणः, हि तथाहि, लोके जगति, महान् स्थिरधीः पुरुषः, विपत्तौ विपदि समुप-स्थितायां, धीरत्वं धैर्य्यम्, अधिगच्छति अवलम्बते ; प्राज्ञस्तु अनागते भये भय-कारणं यथा न समागच्छति तथा प्रतिविदधाति, उपस्थिते च शूरतां प्रदर्शयति; अतो विपदि भीरुतापरिहारपूर्व्वकं धैर्य्यावलम्बनमेव गुणः, अतो भवताऽपि तथा वर्त्तितव्यम् इति भावः ।

(४८) आदावेव शौर्य्यस्य दोषमाह, प्रत्यूह इति ।—उत्तापः उष्णत्वम्, अतिहिंस्रत्वमित्यर्थः, क्रोधप्रदर्शनमिति भावः, सर्वसिद्धीनां सर्वकार्य्येषु अभीष्टलाभ-स्येत्यर्थः, प्रथमः प्रधानः, ("प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत" इति मेदिनी ) प्रत्यूहः अन्तरायः, किल निश्चये । उत्तापस्य सिद्धिव्याघातकत्वं समर्थयितुं शैत्यस्य कार्य्यसाधकतारूपं वैधर्म्यदृष्टान्तमाह, अम्भः जलम्, अतिशीतलम् अपि अतिशैत्य-गुणयुक्तमपि, किं भूतलं पृथ्वीतलं, न भिनत्ति ? न विदारयति ?, भूमिं द्विधा

विशेषतश्च, देव ! (ल) महाबलोऽसौ राजा चित्रवर्णः। यतः,—

बलिना सह योद्धव्यमिति नास्ति निदर्शनम्।
तद् युद्धं हस्तिना सार्द्धं नराणां मृत्युमावहेत् ॥ ४९ ॥

अन्यच्च,—स मूर्खः कालमप्राप्य योऽपकर्त्तरि वर्त्तते।
कलिर्बलवता सार्द्धं कीटपक्षोद्गमो यथा ॥ ५० ॥

---

क्षत्वा नदीनदादिरूपेण किं न प्रवहति ? इत्यर्थः, अपि तु भिनत्त्येव ;· अतिशीतगुणमपि अम्भः यदा भूमिं भेत्तुं शक्नोति, परन्तु उत्तापः तत्कर्म्मसम्पादने असमर्थो भवति, तदा कार्य्यसाधनाय धैर्य्याश्रयणमेव वरं, न तु उष्मप्रकाशः, तस्य कार्य्यविघातकत्वदर्शनात्, अतः आपातत एव तेजःप्रकाशनं न कर्त्तव्यमिति भावः। यद्वा,—अम्भः अतिशीतलमपि, भूतलम्, उत्तप्तमिति शेषः, किं न भिनत्ति ? भिनत्त्येव इत्यर्थः, तीव्रोत्तापेन सन्तप्तं भूतलं यथा शीतलजलप्राप्तिमात्रमेव भिद्यते, तथा क्रोधसन्तापितं द्विषतां धैर्य्यवद्व्यवहारेणैव विफलं भवति, कार्य्यवैफल्यञ्च जायते, अतो धैर्य्यावलम्बनमेव श्रेयः, न तु क्रोधः इति भावः।

(ल) महाबलः,—महाप्रतापशाली।

(४९) बलिनेति।—बलिना स्वापेक्षया बलवता, सह सार्द्धं, योद्धव्यं समरे प्रवर्त्तितव्यम्, इति एवम्प्रकारं, निदर्शनम् उदाहरणं, शास्त्रविधिरिति यावत्, न अस्ति न विद्यते, तथा हि हस्तिना गजेन, बलवत्तरेणेति भावः, सार्द्धं सह, युद्धं सङ्ग्रामः, भवति चेत् तर्हि इति शेषः, तत् युद्धं, नराणां मनुष्याणां, मृत्युं मरणम्, आवहेत् प्रापयेत्, जनयेदित्यर्थः। ("तद्युद्धं हस्तिना सार्द्धम्" इत्यत्र "हस्तिना सह युद्धं हि" इति पाठान्तरं सुगमम्। "न युद्धं हस्तिना सार्द्धं नराणां पादयुद्धवत्" इति पाठे—पादचारेण युद्धं यथा अकर्त्तव्यं, तथा हस्तिना सह युद्धं न युज्यते इत्यर्थः)।

(५०) "वहेदमित्रं स्कन्धेन यावन्न काल आगतः। तमेव चागते काले भिन्द्यात् घटमिवाश्मना" ॥ इति कामन्दकीययुक्तिमवलम्ब्याह, स इति।—यः कालं विग्रहोपयोगिसमयम्, अप्राप्य अलब्ध्वा, बलसञ्चयमकृत्वैव इत्यर्थः, अपकर्त्तरि शत्रौ, वर्त्तते तिष्ठति, शत्रून् विजेतुम् उद्यच्छति इत्यर्थः, सः जनः, मूर्खः मन्दमतिः, हिताहितविवेक एव तस्य नास्ति इत्यर्थः, बलवता स्वापेक्षया बलवत्तरेण, सार्द्धं सह, कलिः कलहः युद्धं वा, ("कलिः स्त्री कलिकायां ना शूराऽऽजिकलहे युगे" इति मेदिनी। आजिः युद्धम्)। कीटपक्षोद्गमः यथा पिपीलिकादीनां पक्षोदयः इव,

किञ्च,—कौर्मं सङ्कोचमास्थाय प्रहारमपि मर्षयेत्।
प्राप्तकालस्तु नीतिज्ञ उत्तिष्ठेत् क्रूरसर्पवत्॥ ५१॥

शृणु देव!—
महत्यल्पेऽप्युपायज्ञः सममेव भवेत् क्षमः।
समुन्मूलयितुं वृक्षांस्तृणानीव नदीरयः॥ ५२॥

अतो दूतोऽयं शुकोऽत्र (व) आश्वास्य तावत् ध्रियतां, यावत् दुर्गं सज्जीक्रियते। यतः,—

---

तद्वत् आत्मविनाशायैव भवतीत्यर्थः; यथा कीटादीनां पक्षोद्गमः आत्मनाशकरः, तथा बलवता विग्रहोऽपि, अतोऽयं साम्प्रतमसाम्प्रतमिति भावः।

(५१) कौर्ममिति।—नीतिज्ञः नीतिवेत्ता जनः, कौर्मं कच्छपसम्बन्धिनं, सङ्कोचं मुखाद्याकुञ्चनं, निश्चेष्टत्वमित्यर्थः, आस्थाय आश्रित्य, प्रहारं रिपुकृतपीड़नमपि, मर्षयेत् सहेत, प्राप्तकालस्तु लब्धवैरनिर्यातनावसरः पुनः, स्वपक्षाभ्युदयपरपक्षापचयरूपावसरं दृष्ट्वैवेत्यर्थः, क्रूरसर्पवत् दुष्टव्याल इव, उत्तिष्ठेत् वैरिकृतस्य प्रतिशोधार्थम् उद्गच्छेत्, अवसराभिज्ञाः खलु नीतिज्ञा इति भावः। ("प्राप्तकालस्तु नीतिज्ञः" इत्यत्र "काले प्राप्ते तु मतिमान्" इति कामन्दकीयः पाठः। भारतशान्तिपर्वीयापद्धर्मप्रकरणे अस्यानुरूपश्लोको यथा,—"नास्यच्छिद्रं रिपुर्विद्यात् विद्यात्छिद्रं परस्य तु। गूहेत् कूर्म्म इवाङ्गानि रक्षेत् विवरमात्मनः॥ वकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत्। वृकवच्चावलुम्पेत शरवच्च विनिष्पतेत्"॥ इति)।

(५२) महतीति।—नदीरयः नदीवेगः, वृक्षान् विशालतरून्, तथा तृणानि दूर्वादीनीव, उपायज्ञः सामाद्युपायचतुष्टयवित् जनः, महति प्रबले, तथा अल्पे क्षुद्रेऽपि च, शत्रौ इति शेषः, शत्रुसमुन्मूलने इत्यर्थः, समुन्मूलयितुम् उच्छेत्तुं, विनाशयितुमित्यर्थः, अन्यत्र—उत्पाटयितुं, समं तुल्यमेव, क्षमः समर्थो भवेत्। यद्वा,—नदीरयः तृणानीव तुच्छसुखोन्मूलनीयघासानीव, वृक्षान् महाद्रुमान्, दुःखोन्मूलनीयान् इति भावः, अपीति शेषः, समुन्मूलयितुं क्षमः भवेत्, एवम् उपायज्ञोऽपि महति तथा अल्पे च, शत्रावित्ति शेषः, सममेव तुल्यमेव, क्षमः विनाशसमर्थः, भवेत्, अतः उपाय एव अवलम्बनीय इति भावः।

(व) आश्वास्य—प्रियमधुरवाक्येन सन्तोष्य इत्यर्थः। ध्रियतां—रक्ष्यतां, न विसृज्यतामित्यर्थः। [धृ + कर्म्मणि लोट्-ताम्]।

एक: शतं योधयति प्राकारस्थो धनुर्धर: ।
शतं शतसहस्राणि तस्माद्दुर्गं विशिष्यते ॥ ५३ ॥

किञ्च,—अदुर्गविषय: कस्य नारे: परिभवास्पदम् ?
अदुर्गोऽनाश्रयो राजा पोतच्युतमनुष्यवत् ॥ ५४ ॥
दुर्गं कुर्य्यान्महाखातमुच्चप्राकारसंयुतम् ।
सयन्त्रं सजलं शैलसरिन्मरुवनाश्रयम् ॥ ५५ ॥
विस्तीर्णताऽतिवैषम्यं रसधान्येध्मसङ्ग्रहः ।
प्रवेशश्चापसारश्च सप्तैता दुर्गसम्पदः" ॥ ५६ ॥

---

(५३) मनुसंहिताया: सप्तमाध्यायोक्तश्लोकमुपन्यस्य दुर्गसज्जीकरणे फलमाह, एक इति ।—प्राकारस्थ: प्राचीरस्थ:, दुर्गस्थ: इति यावत्, धनुर्द्धर: योद्धा, एक: एकाकी एवेत्यर्थ:, शतं शतसङ्ख्यकं सैन्यं, योधयति युद्धं कारयति, शतेन सह योद्धुं समकक्षो भवतीत्यर्थ:, तथा शतं शतसङ्ख्यक: धनुर्द्धर:, शतसहस्राणि लक्षाणीत्यर्थ:, सैन्यानि योधयतीति शेष:, तस्मात् दुर्गं कोट्टं, विशिष्यते, राज्ञ इति शेष:। ("शतमेको योधयति दुर्गस्थो यो धनुर्द्धर:। शतं दशसहस्राणि तस्माद्दुर्गं प्रशस्यते" ॥ इति कालिकापुराणोक्तपाठान्तरम्) ।

(५४) दुर्गानाश्रये दोषमाह, अदुर्गविषय: इति ।—अदुर्गविषय: दुर्गाश्रयविरहित:, राजा इति शेष:, कस्य महत: क्षुद्रस्य वा इति यावत्, अरे: शत्रो:, न परिभवास्पदम् ? न पराभवस्थानम् ? भवेदिति शेष:, अपि तु स सर्वै: अनायासेनैव पराजेतुं शक्य इत्यर्थ: ; अदुर्ग: दुर्गरहित:, अत एव अनाश्रय: आश्रयविहीन:, राजा भूपति:, पोतच्युतमनुष्यवत् समुद्रे पोतभ्रष्ट: मनुष्य इव, निमग्नो भवेदिति शेष:; दुर्गरहितस्य विनाश: अवश्यमेव इति भाव: ।

(५५) दुर्गलक्षणमाह, दुर्गमिति ।—महाखातं विस्तृतसुगभीरपरिखावेष्टितम्, उच्चप्राकारसंयुतम् उन्नतप्राचीरयुक्तं, यन्त्रं युद्धोपयोगि अस्त्रादिकं, तेन सहितं, जलं पानाद्यर्थमुदकञ्च तेन सहितं वर्त्तमानं, तथा शैल: पर्वत:, सरित् नदी, मरु निर्जलदेश:, वनम् अरण्य, तानि आश्रय: संश्रयो यस्य तत् तादृशं, शैलादिवेष्टितमित्यर्थ:, दुर्गं कोट्टं, कुर्य्यात् ।

(५६) प्रशस्तदुर्गलक्षणमाह, विस्तीर्णतेति ।—विस्तीर्णता प्रशस्तता, अतिवैषम्यम् अतिशयेन वैषम्ययुक्तं, शत्रुभिर्दुराक्रम्यमित्यर्थ:, रस: जलं, धान्यं व्रीहि:, धान्य·

राजाऽऽह,—( श ) "दुर्गानुसन्धाने को नियुज्यताम् ?"। चक्रवाको ब्रूते,—

"यो यत्र कुशलः कार्य्ये तं तत्र विनियोजयेत्।
कार्य्येष्वदृष्टकर्मा यः शास्त्रज्ञोऽपि विमुह्यति॥ ५७॥

तदाहूयतां सारसः।" तथाऽनुष्ठिते सति समागतं सारसमवलोक्य राजोवाच,—"भोः सारस! त्वं सत्वरं दुर्गमनुसन्धेहि"। सारसः प्रणम्योवाच,—"देव! दुर्गं तावदिदमेव (ष) चिरात् सुनिरूपितमास्ते महत् सरः। किन्तु (स) एतन्मध्यद्वीपे भक्ष्यवस्तूनां सङ्ग्रहः क्रियताम्। यतः,—

धान्यानां सङ्ग्रहो राजन्! उत्तमः सर्वसङ्ग्रहात्।
निक्षिप्तं हि मुखे रत्नं न कुर्य्यात् प्राणधारणम्॥ ५८॥

---

शब्दोऽत्र भक्ष्यमात्रस्योपलक्षणम्; इध्मं काष्ठं, तेषां सङ्ग्रहः सञ्चयः, प्रवेशः प्रवेशमार्गश्च, तथा अपसारः बहिर्गमनमार्गश्च, सुरक्षितप्रवेशनिर्गममार्ग इत्यर्थः, अन्यैर्दुर्ज्ञेयप्रवेशनिर्गममार्ग इति वा भावः, एताः विस्तीर्णताऽतिवैषम्य जलादिसङ्ग्रह-धान्यसङ्ग्रह-काष्ठसङ्ग्रह-प्रवेशमार्ग-अपसारणमार्गरूपाः, सप्त सप्तसङ्ख्यकाः, दुर्गसम्पदः दुर्गस्य सम्पत्तयः, एतादृशगुणसम्पन्नं दुर्गं प्रशंसनीयमिति ज्ञातव्यम् इति भावः।

(श) दुर्गानुसन्धाने—दुर्गरचनार्थं स्थाननिरूपणे।

(५७) य इति।—यो जनः, यत्र यस्मिन्, कार्य्ये कर्मणि, कुशलः दक्षः, तं जनं, तत्र तस्मिन् कर्मणि, विनियोजयेत् नियुक्तं कुर्य्यात्; यः जनः, अदृष्टकर्मा कर्मादर्शी, गुरोरन्यस्य वा कार्य्यप्रणाल्यामदर्शनवान्, स्वयमज्ञातकर्मा इत्यर्थः, अवहुदर्शी इति यावत्, स जनः, शास्त्रज्ञोऽपि विद्वानपि, कार्य्येषु कर्मसु, कार्य्यकरणकाले इत्यर्थः, विमुह्यति प्रमाद्यति, कर्त्तव्यविमूढ़ो भवतीत्यर्थः, अतः दुर्गकर्मकुशल एव प्रेषयितव्य इति भावः।

(ष) चिरात्—बहोः कालात्, बहुकालावधि इत्यर्थः। सुनिरूपितं—सम्यक् निर्द्धारितम्।

(स) एतन्मध्यद्वीपे—एतस्य सरसः, मध्यद्वीपे मध्यवर्त्तिस्थलभागे। भक्ष्यवस्तूनां—खाद्यद्रव्याणाम्।

(५८) भक्ष्यसङ्ग्रहेषु धान्यसङ्ग्रहस्य उत्कर्षतामाह, धान्यानामिति।—है

किञ्च,—ख्यातः सर्वरसानां हि लवणो रस उत्तमः।
गृह्णीयात् तं विना तेन व्यञ्जनं गोमयायते" ॥ ५९ ॥

राजाऽऽह,—"सत्वरं गत्वा सर्वमनुष्ठीयताम्"। पुनः प्रविश्य (ह) प्रतीहारो ब्रूते,—"देव! सिंहलद्वीपादागतो मेघवर्णो नाम वायसः (क) सपरिवारो द्वारि वर्त्तते। स च देवपादान् द्रष्टुमिच्छति"। राजाऽऽह,—"काकः (ख) प्राज्ञः बहुदृश्वा च, तद्भवति स (ग) सङ्ग्राह्यः"। चक्रवाको ब्रूते,—"देव! अस्त्येवं, किन्त्वस्मद्विपक्षः काकः स्थलचरः, तेनास्मद्विपक्षपक्षे नियुक्तः कथं सङ्गृह्यते? तथा चोक्तम्,—

आत्मपक्षं परित्यज्य परपक्षेषु यो रतः।
स परैर्हन्यते मूढो नीलवर्णसृगालवत्" ॥ ६० ॥

---

राजन्! सर्व्वसङ्ग्रहात् सर्वेषां धनरत्नादीनां वस्तूनां सञ्चयात्, [निर्द्धारे षष्ठी०] धान्यानां व्रीहियवादीनां भक्ष्यद्रव्याणामित्यर्थः, सङ्ग्रहः सञ्चयः, उत्तमः उत्कृष्टः, सर्वथा कर्त्तव्य इत्यर्थः। कथं धान्यसङ्ग्रह उत्तमः इत्याह, हि यतः, रत्नं धनं, मुखे निक्षिप्त दत्तमपि, प्राणधारणं प्राणरक्षां, न कुर्य्यात् कर्त्तुं न शक्नुयात्, न हि रत्नं भक्षयित्वा कोऽपि जीवतीत्यर्थः, अतः भक्ष्यद्रव्यमेव सङ्ग्राह्यमिति भावः।

(५९) ख्यात इति।—सर्वरसानां मधुरादीनां षण्णां रसानां मध्ये, [निर्द्धारे षष्ठी] लवणः हि लवणरस एव, उत्तमः श्रेष्ठः, रसः आस्वाद्यः, ख्यातः प्रसिद्धः, तेन लवणेन, विना अन्तरेण, व्यञ्जनं तेमनं, सूपशाकाद्युपकरणमित्यर्थः, गोमयायते गोमयवत् विरसं भवति, [गोमयशब्दात् क्यङ्प्रत्ययेन गोमयाय इति नामधातुरयम्]। अतः तं लवणं, गृह्णीयात् सञ्चिनुयात्। ("गृह्णीयात् तम्" इत्यत्र "गृहीतञ्च" इति पाठे—तेन विना गृहीतं स्वीकृतं, भक्षितमित्यर्थः, व्यञ्जनं गोमयायते)।

(ह) प्रतीहारः,—द्वारपालः।

(क) सपरिवारः,—परिजनसहितः।

(ख) प्राज्ञः,—बुद्धिमान्। बहुदृश्वा—बहुदर्शी [बहु+दृश+क्वनिप्]।

(ग) सङ्ग्राह्यः,—समादेयः, अस्मत्पक्षे नियोज्यः इति यावत्।

(६०) आत्मपक्षमिति।—यः जनः, आत्मपक्षं स्वगणं, परित्यज्य विहाय,

राजोवाच,—"कथमेतत् ?"। मन्त्री कथयति,—

नीलवर्णशृगालकथा।—

शृगालः कश्चित् स्वेच्छया (घ) नगरोपान्ते भ्रमन् (ङ) नीलसन्धानभाण्डे निपतितः। पश्चात् (च) ततः उत्थातुमसमर्थः प्रातरात्मानं मृतवत् सन्दर्श्य स्थितः। अथ नीलीभाण्डस्वामिना मृत इति ज्ञात्वा तस्मात् समुत्थाप्य दूरे नीत्वा असौ परित्यक्तः। ततोऽसौ वनं गत्वाऽऽत्मानं नीलवर्णमवलोक्य अचिन्तयत्,—"अहमिदानीम् (छ) उत्तमवर्णः, तदात्मनः किम् (ज) उत्कर्षं न (झ) साधयामि ?" इत्यालोच्य शृगालानाहूय तेनोक्तम्,—"अहं भगवत्या वनदेवतया स्वहस्तेनारण्यराज्ये (ञ) सर्वौषधि-

---

आत्मीयान् विहाय इत्यर्थः, परपक्षेषु अनात्मीयेषु, अननुगतेषु इत्यर्थः, रतः अनुरक्तः, [रम+क्तः "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" (६।४।३७ पा०) इत्यनुनासिकलोपः] भवतीति शेषः, मूढः मन्दमतिः, स जनः, नीलवर्णशृगालवत् नीलवर्णरञ्जितः शृगाल इव, परैः विपक्षैः, हन्यते व्यापाद्यते, अतः विपक्षपक्षस्यास्य नियोगः न कार्य्यं इति भावः।

(घ) नगरोपान्ते—नगरसमीपे; नगरप्रान्ते इत्यर्थः।

(ङ) नीलसन्धानभाण्डे—संस्थापितनीलरसे पात्रे। सुरादिसम्पादनानुगुण-व्यापारो हि सन्धानं, सन्धानार्थं भाण्डं सन्धानभाण्डं; नीलस्य सन्धानभाण्डं नीलसन्धानभाण्डं यस्मिन् पात्रे नीलक्षुपान् संस्थाप्य तेभ्यः रसः निःसार्य्यते, तत् पात्रम् इत्यर्थः। ("नीलीभाण्डे" इति पाठे—वस्त्ररञ्जनार्थं रजकानां नीलीरसपूर्णे पात्रे इत्यर्थः।

(च) ततः,—नीलीभाण्डात्।

(छ) उत्तमवर्णः,—उत्तमः वर्णः यस्य तथाभूतः, उत्कृष्टवर्णसम्पन्न इत्यर्थः।

(ज) उत्कर्षं—स्वजात्यपेक्षया श्रेष्ठत्वम्।

(झ) साधयामि—सम्पादयामि।

(ञ) सर्वौषधिरसेन—सर्वासां निखिलानाम्, ओषधीनां कुष्ठमांसीहरिद्रा-सिंहीवचाशैलेयचन्दनैः। मुराचम्पककर्पूरमुस्तैः सर्वौषधिः स्मृतः" ॥ इत्युक्तद्रव्याणां,

रसेनाभिषिक्तः ; (ट) पश्यन्तु मम वर्णम्। तदद्याऽऽरभ्य अस्मदाज्ञयाऽस्मिन्नरण्ये (ठ) व्यवहारः कार्य्यः"। शृगालाश्च तं विशिष्टवर्णमवलोक्य (ड) साष्टाङ्गपातं प्रणम्योचुः,—यथाऽऽज्ञापयति देवः"। इत्यनेनैव (ढ) क्रमेण सर्वेष्वरण्यवासिषु (ण) आधिपत्यं तस्य बभूव। ततस्तेन (त) स्वज्ञातिभिरावृतेनाऽऽधिक्यं साधितम्। ततस्तेन सिंहव्याघ्रादीन् (थ) उत्तमपरिजनान् प्राप्य सदसि शृगालानवलोक्य (द) लज्जमानेनावज्ञाय (ध) दूरीकृताः सर्वे स्वज्ञातयः। ततो (न) विषण्णान् शृगालानवलोक्य केनचित् वृद्धशृगालेन एतत् प्रतिज्ञातम्,—(प) "मा विषीदत, यदनेन अनीतिज्ञेन वयं

---

"मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम्। शटीचम्पकमुस्तञ्च सर्वौषधिगणः स्मृतः"। इत्युक्तद्रव्याणां वा, रसेन निर्य्यासेन, तदाख्याभिषेकसाधनद्रव्यविशेषेण इति यावत्।

(ट) पश्यन्तु मम वर्णं—मम नीलवर्णत्वमेवात्र प्रमाणमित्यर्थः।

(ठ) व्यवहारः,—स्थितिः, आचरणम् इति यावत्। ("व्यवहारः स्थितौ पणे। द्रुभेदे—" इति हैमः)।

(ड) साष्टाङ्गपातं—"पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा। वचसा मनसा चैव प्रणामोऽष्टाङ्ग उच्यते"॥ इति अष्टानाम् अङ्गानां पातः पतनं, तेन सह वर्त्तमानं तत् यथा तथा।

(ढ) क्रमेण—अनुक्रमेण, प्रकारेणेत्यर्थः।

(ण) आधिपत्यं—प्रभुत्वम्।

(त) स्वज्ञातिभिः,—निजस्वजनवर्गैः। आवृतेन—वेष्टितेन। आधिक्यम्—औत्कर्ष्यं, प्रभुत्वमित्यर्थः। साधितं—स्थापितं, सम्पादितमित्यर्थः।

(थ) उत्तमपरिजनान्—उत्कृष्टजातीयामात्यादीन्। सदसि—सभायाम्।

(द) लज्जमानेन—त्रपमाणेन, लज्जामनुभवतेत्यर्थः।

(ध) दूरीकृताः,—निःसारिताः, स्वसभात इति शेषः।

(न) विषण्णान्—खिन्नान्।

(प) मा विषीदत—न विषण्णा भवत। [वि+सद+लोट्-त "पाघ्राध्माधेट्दृशार्त्तिसर्त्तिशदसदां—" (७।३।७८ पा०) इति सदो सीदादेशः]। अनीति

मर्मज्ञाः परिभूताः, तद्यथाऽयं नश्यति तथा (फ) विधेयम् । यतोऽमी व्याघ्रादयः (ब) वर्णमात्रविप्रलब्धाः शृगालमज्ञात्वा राजानममुं मन्यन्ते, तद्यथाऽयं (भ) परिचीयते तत् कुरुत । तत्रैवमनुष्ठेयं यथा वदामि,—सर्वे सन्ध्यासमये तत्सन्निधाने (म) महाऽऽरावमेकदैव करिष्यथ ; ततस्तं शब्दमाकर्ण्य (य) जातिस्वभावात् तेनापि शब्दः कर्त्तव्यः । यतः,—

य: स्वभावो हि यस्य स्यात् तस्यासौ दुरतिक्रमः ।
श्वा यदि क्रीयते राज्ञा स किं नाश्नात्युपानहम् ? ॥६१॥

---

ज्ञेन—नीतिशास्त्रानभिज्ञेन, अविवेकिनेत्यर्थः । मर्मज्ञाः,—रहस्यवेत्तारः, शृगालोऽयमिति जानन्तः इत्यर्थः । परिभूताः,—तिरस्कृताः ।

(फ) विधेयं—कर्त्तव्यम् । [ विदधातेः कर्म्मणि यत् ] ।

(ब) वर्णमात्रविप्रलब्धाः,—वर्णमात्रेण नीलवर्णं दृष्ट्वेत्यर्थः, विप्रलब्धाः,—वञ्चिताः ।

(भ) परिचीयते—प्रत्यभिज्ञायते, शृगालोऽयमिति ज्ञायते इत्यर्थः, व्याघ्रादिभिरिति शेषः ।

(म) महाऽऽरावम्—उच्चैः निनादम् ।

(य) जातिस्वभावात्—शृगालजातीनां नैसर्गिकप्रकृतिवशादित्यर्थः ; शृगालानामयं हि स्वभावो यत् केनापि एकेन शृगालेन रवे कृते सति तत्प्रतिशब्दः यावतो दूरान् गच्छेत् तावद्दूरस्थाः सर्व एव शृगालाः तदाकर्ण्य अवश्यमेवारावं कुर्युः इति ।

(६१) प्रकृतेर्दुस्त्यजत्वं दर्शयति, य इति ।—यस्य जनस्य, यः यादृशः, स्वभावः प्रकृतिः, स्यात् भवेत्, तस्य जनस्य, असौ स्वभावः, दुरतिक्रमः दुष्परिहरः, हि निश्चये । [ यस्य तस्य इत्यत्र सम्बन्धे षष्ठी, न कर्त्तरि, खल्प्रत्यययोगात् ] न जातु कश्चित् स्वभावं परित्यक्तुमलम् इत्यर्थः । अत्रोदाहरणमाह,—यदि श्वा कुक्कुरः, राज्ञा नृपेण, क्रीयते धनादिविनिमयेन गृह्यते, तदा स श्वा, किम् उपानहं चर्मपादुकां, [उप+नह+क्विप् । उपसर्गस्य दीर्घत्वम् । अस्य रूपम्—उपानत्, उपानहौ, उपानहः, उपानद्भ्याम्, उपानत्सु इत्यादि ] न अश्नाति ? न भक्षयति ? अपि तु अश्नात्येव, स्वभावस्य तत्राप्यनुसरणात् इति भावः ; न हि राजक्रीतः श्वा केवलं राजभोज्यमेवाश्नाति परन्तु चर्मपादुकामपि अश्नाति इति निष्कर्षः ।

ततः शब्दात् विज्ञाय व्याघ्रेण हन्तव्यः"। तथाऽनुष्ठिते सति तत् (र) वृत्तम्। तथा चोक्तम्,—

छिद्रं मर्म च वीर्यञ्च सर्वं वेत्ति निजो रिपुः।
दहत्यन्तर्गतश्चैव शुष्कं वृक्षमिवानलः॥ ६२॥

अतोऽहं ब्रवीमि,—'आत्मपक्षं परित्यज्य' इत्यादि"।

[ इति नीलवर्णशृगालकथा ]।

राजाऽऽह,—"यद्यप्येवं तथाऽपि दृश्यतां तावत् अयं दूरादागतः, (ल) तत्सङ्ग्रहे विचारः कर्त्तव्यः"। चक्रवाको ब्रूते,—"देव! (व) प्रणिधिस्तावत् (श) प्रहितो दुर्गश्च सज्जीकृतम्, अतः शुकोऽप्यानीय प्रस्थाप्यताम्। किन्तु (ष) योधबलैः सह दूरादेव तमवलोकय। यतः,—

---

("श्वा यदि क्रियते राजा" इति पाठान्तरे तु—श्वा कुकुरः, यदि राजा अधिपतिः, क्रियते, तस्मै आधिपत्यं दीयते इत्यर्थः, जनेन इति शेषः। अन्यत् सर्वं पूर्ववत्)।

(र) वृत्तं—सम्पन्नम्।

(६२) शत्रुभवोः किमपि अगोचरं नास्तीति कामन्दकनीतेरष्टमसर्गीयं वचनमनुसृत्य सदृष्टान्तमाह, छिद्रमिति।—निजः आत्मीयः जनः, रिपुः शत्रुः, भवति चेत् इति शेषः, तदा स छिद्रं रन्ध्रम्, अर्थादीनां न्यूनाधिक्यतामिति यावत्, मर्म च तथ्यञ्च, गुप्तरहस्यमित्यर्थः, वीर्यं बलञ्च, सर्वं वेत्ति जानाति; तस्य अप्रतिषिद्धप्रचारत्वादिति भावः; च किञ्च, अनलः दावानलः इत्यर्थः, शुष्कं वृक्षमिव नीरसं तरुमिव, अन्तर्गतः अभ्यन्तरस्थः सन्, स इति शेषः, दहति भस्मीकरोत्येव, अतिदारुणोऽयं स्वजनशत्रुः मर्मज्ञत्वादिति भावः। ("छिद्रं कर्म च विभवं विजानाति निजो रिपुः। दहत्यन्तर्गतश्चैव शुष्कवृक्षमिवानलः"॥ इति कामन्दकीयपाठः)।

(ल) तत्सङ्ग्रहे—तस्य शुकस्य आनयने। विचारः,—विवेचना।

(व) प्रणिधिः,—चरः, ("प्रणिधिर्याचने चरे" इति हैमः)।

(श) प्रहितः,—प्रेरितः [ प्र + हि + क्तः ]।

(ष) योधबलैः,—योद्धृसैन्यैः, वीरपुरुषैरिति यावत्।

नन्दं जघान चाणक्यस्तीक्ष्णदूतप्रयोगतः ।
तत् दूरान्तरितं दूतं पश्येद्वीरसमन्वितः" ॥ ६३ ॥

ततः सभां कृत्वा आहूतः शुकः काकोऽपि । शुकः किञ्चित् (ग) उन्नतशिराः दत्तासने समुपविश्य ब्रूते,—"भो हिरण्यगर्भ ! त्वां महाराजाधिराजः श्रीमच्चित्रवर्णः समाज्ञापयति,—"यदि जीवितेन (ङ) श्रिया वा प्रयोजनमस्ति, तदा सत्वरमागत्यास्मच्चरणौ प्रणम, नो चेदवस्थातुं स्थानान्तरं ( क ) परिचिन्तय"। एतच्छ्रुत्वा राजा सकोपमाह,—"आः !! सभायामस्माकं न कोऽपि विद्यते, यः ( ख ) एनं गलहस्तयति ?"। ततः उत्थाय मेघवर्णो ब्रूते,—"देव ! आज्ञापय, हन्मि चैनं दुष्टशुकम्।" सर्वज्ञो राजानं काकञ्च सान्त्वयन् ब्रूते,—"भद्र ! मैवं, शृणु तावत्,—

---

(६३) अथ प्रसिद्धदृष्टान्तेन दूतस्य अन्तिकावस्थापने दोषं प्रदर्शयन्नाह, नन्दमिति ।—चाणक्यः कौटिल्यः, तदाख्यः चन्द्रगुप्तामात्यः इत्यर्थः, तीक्ष्णदूतप्रयोगतः चतुरदूतोपायेन, प्रचण्डदूतप्रयोगेणेति वा, नन्दं तदाख्यं नृपतिं, जघान हतवान्, तत् तस्मात्, राजेति कर्तृपदमूहनीयम् ; वीरसमन्वितः योद्धृप्रकर्षवेष्टितः सन्, दूरान्तरितं दूरावस्थितं, दूतं, यद्वा,—दूतं दूरान्तरितं दूरव्यवहितं यथा तथा, पश्येत्, वैदेशिकं दूतं राजसमीपे सहसा न स्थापयेदित्यर्थः । पुरा किल पितृश्राद्धदिने श्राद्धीयान्नं भोक्तुं समाहूतः चाणक्यः नन्देन राज्ञा शिखाऽऽकर्षणेन पणामनात् बहिष्कृतः । इत्थमपमानितः स पुनः नन्दवंशं समूलघातं हन्तुं कृतप्रतिज्ञः छद्मवेशिना दूतेन नन्दं घातयित्वा तद्वंशीयान् अन्यांश्च सर्वान् घातयामास, चन्द्रगुप्तं राजानं कृत्वा तेन राज्यमशासयच्च इति ।

(ग) उन्नतशिराः,—ऊर्द्ध्वीकृतमस्तकः । दत्तासने समुपविश्य—राज्ञा दत्ते आसने आसीन इत्यर्थः ।

(ङ) श्रिया—ऐश्वर्य्येण, राज्येन इत्यर्थः । [ करणे ३या० ]।

(क) परिचिन्तय—चिन्तया स्थिरीकुरु इत्यर्थः, अनुसन्धेहि इति यावत्, देशमिमं परित्यज्य स्थानान्तरं गच्छ इति निष्कर्षः ।

(ख) एनं—शुकम् । गलहस्तयति—गले हस्तौ यस्य, तं करोतीति

न सा सभा यत्र न सन्ति वृद्धाः
वृद्धा न ते ये न वदन्ति धर्म्मम् ।
धर्मः स नो यत्र न सत्यमस्ति
सत्यं न तत् यत् भयमभ्युपैति ॥ ६४ ॥

यतो राजधर्मश्चैषः,—

दूतो म्लेच्छोऽप्यवध्यः स्याद्राजा दूतमुखो यतः ।
उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ॥ ६५ ॥

---

गलहस्तयति, गले हस्तं दत्त्वा निःसारयतीत्यर्थः । [ "हस्त्यादिभ्यो ग्रहणे" (वा॰) इत्यनेन गलहस्तशब्दात् णिचि 'गलहस्ति' इति नामधातोः लटि रूपम् ]।

(६४) दूतानामवध्यत्वं विवक्षुः सर्वज्ञो मन्त्री भारतीद्योगपर्वीयश्लोक मवलम्ब्य वृद्धानां धर्म्मसङ्गतसत्यवाक्यस्य अवश्यवक्तव्यतामाह, नेति ।—यत्र सभायां, वृद्धाः प्रवयसः, बहुदर्शिनो विद्वांसः इति यावत्, न सन्ति न विद्यन्ते, सा सभा न सभात्वेन न परिगणनीया, ये वृद्धाः, धर्मं धर्म्मसङ्गतवचनं, न वदन्ति न उपदिशन्ति, ते वृद्धाः न वृद्धत्वेन न परिगणनीयाः, यत्र धर्मे, सत्यं तथ्यं, याथार्थ्यम् इत्यर्थः, अकापट्यम् इति यावत, न अस्ति न वर्त्तते, स धर्मः न न धर्म्मपदवाच्यः, यत् सत्यं, भयम् आशङ्कां, संशयमित्यर्थः, ("भयम्" इत्यत्र "छलम्" इति पाठः क्वचित्) अभ्युपैति गच्छति, प्राप्नोतीति यावत्, संशयमिश्रितं यत् सत्यमित्यर्थः, तत् सत्यं संशययुक्तं सत्यं न सत्यत्वेन परिगणनीयमित्यर्थः ; एतेनैतत् सूचितं यत्,—अहं धर्म्मसङ्गतं सत्यवचनं ब्रवीमि, मद्वचनमवहितः शृणु इति । ("वृद्धा न ते" इत्यत्र "न ते वृद्धाः" "धर्म्मः स नो" इत्यत्र "नासौ धर्म्मः" "सत्यं न तत् यत् भयमभ्युपैति" इत्यत्र "न तत् सत्यं यच्छलेनाभ्युपेतम्" इति भारतीद्योगपर्वीयः पाठः)। उपजातिः वृत्तम् ।

(६५) दूतस्यावध्यत्वं दर्शयति, दूत इति ।—दूतः म्लेच्छोऽपि हीनजातीयोऽपि किमुत ब्राह्मण इति भावः, अवध्यः वधानर्हः, स्यात् भवेत्, यतः यस्मात्, राजा दूतमुखः दूत एव मुखं यस्य सः, दूतमुखेन स्वाभिप्रायप्रकाशक इत्यर्थः, शस्त्रेषु खड्गादिषु, उद्यतेषु हन्तुमुद्यतेषु अपि ; प्राणात्ययेऽपीति भावः ; दूतः अन्यथा विपरीतं, स्वामिवाक्यमन्यरूपम् इत्यर्थः, न वदति न कथयति, अतो न हन्तव्य इति भावः ।

—स्वापकर्षं परोत्कर्षं दूतोक्तैर्मन्यते तु कः ? ।
सदैवावध्यभावेन दूतः सर्वं हि जल्पति" ॥ ६६ ॥

ततो राजा काकश्च स्वां (ग) प्रकृतिमापन्नौ । शुकोऽप्युत्थाय चलितः । पश्चाच्चक्रवाकेणाऽऽनीय (घ) प्रबोध्य कनकालङ्कारादिकं दत्त्वा (ङ) सम्प्रेषितः स्वदेशं ययौ । शुकोऽपि विन्ध्याचलं गत्वा स्वस्य राजानं चित्रवर्णं प्रणतवान् । तमालोक्य चित्रवर्णो राजाऽऽह,—"शुक ! का (च) वार्त्ता ? कीदृशोऽसौ देशः ?" । शुको ब्रूते,—"देव ! सङ्क्षेपादियं वार्त्ता, सम्प्रति युद्धोद्योगः क्रियताम् । देशश्चासौ कर्पूरद्वीपः (छ) स्वर्गैकदेशः, राजा च द्वितीयः स्वर्गपतिः, कथं वर्णयितुं शक्यते" । ततः सर्वान् (ज) शिष्टानाहूय राजा मन्त्रयितुमुपविष्टः, आह च तान्,—"सम्प्रति यत् कर्त्तव्यं तत् ब्रूत, विग्रहः पुनरवश्यं कर्त्तव्यः । तथा चोक्तम्,—

---

(६६) दूतस्य वार्त्ताहरत्वभावं प्रकटयति, स्वापकर्षमिति ।—को जनः, दूतोक्तैः दूतवचनैः, स्वस्य आत्मनः, अपकर्षः न्यूनता तं, परस्य शत्रोः, उत्कर्षः श्रेष्ठता तं, मन्यते जानाति ? न कोऽपि तथा स्वीकरोति इत्यर्थः, हि यतः, सदैव नित्यकालमेव, अवध्यभावेन अवध्यत्वात्, स्वमवध्यं मत्वा इत्यर्थः, दूतः सर्वं प्रियाप्रियादिरूपं नानाविधप्रभुसन्देशमित्यर्थः, जल्पति वदति ; प्रायेण जगति प्राणदण्डादिरूपकठोरशासनभयेन परुषभाषणादिकं न स्फुरति लोकानां, दूतस्य तु अवध्यत्वेन तद्भयाभावात् तदभावः इति भावः, अतः राजनीतिम् उल्लङ्घ्य तज्जल्पनोपरि कृतदोषत्वेन भवता न हन्तव्योऽयमिति हृदयम् ।

(ग) प्रकृतिमापन्नौ—पूर्वावस्थां प्राप्तौ, क्रोधात् विरतौ इत्यर्थः ।

(घ) प्रबोध्य—सान्त्वयित्वा, प्रियवचसा प्रसाद्येत्यर्थः ।

(ङ) सम्प्रेषितः,—विसर्जितः ।

(च) वार्त्ता—वृत्तान्तः ।

(छ) स्वर्गैकदेशः,—स्वर्गैकांशः, स्वर्गतुल्य इत्यर्थः ।

(ज) शिष्टान्—विबुधान् ।

असन्तुष्टा द्विजा नष्टाः सन्तुष्टाश्च महीभुजः।
सलज्जा गणिका नष्टा निर्लज्जाश्च कुलाङ्गनाः" ॥ ६७ ॥

दूरदर्शी नाम गृध्रो मन्त्री ब्रूते,—"देव! (झ) व्यसनितया विग्रहो न (ञ) विधिः। यतः,—

मित्त्रामात्यसहायाश्च यदा स्युर्दृढभक्तयः।
शत्रूणां विपरीताश्च कर्त्तव्यो विग्रहस्तदा ॥ ६८ ॥

अन्यच्च,—भूमिर्मित्रं हिरण्यञ्च विग्रहस्य फलं त्रयम्।
यदैतन्निश्चितं भावि कर्त्तव्यो विग्रहस्तदा" ॥ ६९ ॥

---

(६७) चाणक्यवचनमुपन्यस्य राज्ञां शमगुणाश्रयणे दोषमाह, असन्तुष्टा इति।—असन्तुष्टाः अप्रसन्नाः, दानादेरल्पप्राप्तिहेतोः दातरि अप्रीतमनसः इत्यर्थः, द्विजाः ब्राह्मणाः, नष्टाः हताः, दुःखभाज इत्यर्थः, महीभुजः राजानश्च, सन्तुष्टाः अल्पेनैव सन्तोषमनुभवन्तः, मया प्रजाभ्यः यः करः गृह्यते, यावांश्च देशः ममाधिकारे अस्ति तेनैव अलमिति मन्यमानाः इत्यर्थः, नष्टाः दुःखभाज इत्यर्थः, ("सन्तुष्टा इव पार्थिवाः" "सन्तुष्टाः पार्थिवाः सदा" इति पाठान्तरद्वयम्); सलज्जा लज्जान्विताः, गणिका वारविलासिन्यः, नष्टाः अर्थार्ज्जनासामर्थ्यात् दुःखभाजः इत्यर्थः, निर्लज्जाः लज्जाहीनाः, कुलाङ्गनाः कुलवध्वश्च, नष्टा निन्दनीयाः, तदिदानीं अवश्यमेव युद्धोद्योगः कर्त्तव्यः अतः उपायं स्थिरीकुरुत इति भावः।

(झ) व्यसनितया—विपद्युक्तत्वात् क्रोधजदोषयुक्तत्वात् वा। ("व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः।

(ञ) विधिः,—कर्त्तव्यः।

(६८) विग्रहकालं निर्द्दिशति, मित्रेति।—यदा यस्मिन् काले, मित्राणि मित्रभावापन्नाः राजानः इत्यर्थः, अमात्याः सचिवाः, सहायाः सैन्यादिस्वपक्षीयाः, चकारात् पौराश्च, दृढा अविचलिता, भक्तिः अनुरागो येषां ते तथोक्ताः, अतिशयमानुकूला इत्यर्थः, स्युः; तथा शत्रूणाञ्च विपरीताः अदृढभक्तयः, प्रतिकूला इति यावत्, मित्रामात्यसहाया इति शेषः, स्युः, तदा विग्रहः युद्धं, कर्त्तव्यः विधेयः।

(६९) कामन्दकीयदशमसर्गोक्तं श्लोकमवलम्ब्य विग्रहस्य फलं कालञ्च निर्द्दिशति, भूमिरिति।—भूमिः राज्यं, मित्रं सुहृत्, बन्धुसङ्ग्रहः इत्यर्थः, हिरण्यं सुवर्णं, त्रयं त्रिसङ्ख्यकमेतत्, विग्रहस्य युद्धस्य, फलं परिणामः, लाभ इत्यर्थः, यदा अवि-

राजाऽऽह,—"मम (ट) बलानि तावदवलोकयतु मन्त्री, (ठ) तदैतेषाम् (ड) उपयोगो ज्ञायताम्। (ढ) एवम् आहूयतां (ण) मौहूर्त्तिकः, स शुभलग्नं यात्रार्थं (त) विदधातु। मन्त्री वदति—"देव! (थ) तथाऽपि सहसा यात्राकरणमयुक्तम्। यतः,—

विशन्ति सहसा मूढ़ा येऽविचार्य्य द्विषद्बलम्।
खड्गधारापरिष्वङ्गं लभन्ते ते सुनिश्चितम्" ॥ ७० ॥

राजाऽऽह,—"मन्त्रिन्! मम (द) उत्साहभङ्गं सर्वथा

---

...ताते, एतत् वयं, निश्चितं स्थिरं, भावि भविष्यति, तदा विग्रहः युद्धं, कर्त्तव्यः ...विधेयः, अन्यथा त्वन्यथैव इति भावः। ("यदैतन्नियतं भावि तदा विग्रहमाचरेत्" ...पुस्तकांश कामन्दकीयः पाठः)।

(ट) बलानि—सैन्यानि।

(ठ) तदा—तर्हि, तथा सति इत्यर्थः।

(ड) उपयोगः,—उपयुक्तता, कार्य्यक्षमत्वम् इत्यर्थः।

(ढ) एवम्—उपयोगं ज्ञात्वेत्यर्थः।

(ण) मौहूर्त्तिकः,—मुहूर्त्तं लग्नं वेत्तीति मौहूर्त्तिकः, लग्ननिर्णायको दैवज्ञः।

(त) विदधातु—करोतु, निरूपयतु इत्यर्थः।

(थ) तथाऽपि—स्वपक्षाणामुपयुक्तत्वे सत्यपि।

(७०) सहसा यात्राकरणे दोषमाह, विशन्तीति।—ये मूढ़ाः मूर्खाः, द्विषतः शत्रोः, बलं सैन्यं सामर्थ्यं वा, अविचार्य्य अविविच्य, शत्रुबलाबलम् अनिरूप्येत्यर्थः, सहसा अवितर्कितं यथा तथा, विशन्ति युद्धे प्रवर्त्तन्ते इत्यर्थः, ते मूढ़ाः, सुनिश्चितम् अवश्यमेव, खड्गधारा खड्गस्य निशितमुखं, तीक्ष्णाग्रभाग इत्यर्थः, ("धारा सैन्याग्रिमस्कन्धे तुरङ्गगतिपञ्चके। घटादिच्छिद्रसन्तत्योः प्रपाते स्याद्वर्षस्य च॥ खड्गादेर्निशितमुखे" इति मेदिनी) तया परिष्वङ्गम् आलिङ्गनम्, आघातमिति भावः, लभन्ते प्राप्नुवन्ति, अवश्यमेव म्रियन्ते इत्यर्थः, अतः प्रागरिबलाबलपरीक्षणमेव कर्त्तव्यमिति भावः।

(द) उत्साहभङ्गम्—अध्यवसायनाशम्।

(ध) मा कृथाः। (न) विजिगीषुर्यथा (प) परभूमिमाक्रामति, तथोपदिश"। गृध्रोऽब्रवीत्,—"देव! तत् कथयामि, किन्तु (फ) तदनुष्ठितमेव फलप्रदम्। तथा चोक्तम्,—

किं मन्त्रेणाननुष्ठाने शास्त्रवत् पृथिवीपतेः?।
न ह्यौषधपरिज्ञानात् व्याधेः शान्तिः क्वचिद्भवेत् ॥७१॥

राजाऽऽदेशस्यानतिक्रमणीय इति (ब) यथाश्रुतं निवेदयामि। शृणु देव!—

नद्यद्रिवनदुर्गेषु यत्र यत्र भयं नृप!।
तत्र तत्र च सेनानीर्यायात् व्यूहीकृतैर्बलैः ॥ ७२ ॥

---

(ध) मा कृथाः,—न कुरु [ माङ्योगे लुङ् अडागमाभावश्च ]।

(न) विजिगीषुः,—विजेतुमिच्छुः, विजयाकाङ्क्षी इत्यर्थः।

(प) परभूमिं—शत्रुराज्यम्।

(फ) तत्—कर्म्म। अनुष्ठितमेव—आचरितमेव।

(७१) विनाऽनुष्ठानं केवलमन्त्रेण न कार्य्यसिद्धिरित्याह, किमिति।—अननुष्ठाने शास्त्रानुयायिनः कार्य्यस्य असम्पादने सति, पृथिवीपतेः राज्ञः, शास्त्रवत् केवलमभ्यस्तशास्त्रेणेव, मन्त्रेण मन्त्रणया, किम्? किं फलम्? शास्त्रज्ञानं यथा तदनुयायि अनुष्ठानं विना विफलं भवति, तद्वत् मन्त्रोऽपि तदनुयायिना कार्य्येण विना न फलप्रदो भवति इत्यर्थः, हि तथाहि, क्वचित् कुत्रापि, औषधपरिज्ञानात् औषधमात्रज्ञानेन, प्रयोगेण विनेति भावः, व्याधेः रोगस्य, शान्तिरुपशमः, न हि नैव, भवेत्, अतोऽत्र मन्त्रणानुरूपमनुष्ठातव्यमेव इति भावः।

(ब) यथाश्रुतं—यथाशास्त्रम्। ("श्रुतमाकर्णिते शास्त्रे" इति मेदिनी)।

(७२) कामन्दकीयनीतेरेकोनविंशसर्गोक्तश्लोकानवलम्ब्य चतुर्भिः सङ्ग्रामयात्राविधानमुपदिशति, नदीति।—नृप! हे राजन्! नद्यद्रिवनदुर्गेषु नदी सरित्, अद्रिः पर्वतः, वनम् अरण्यं, दुर्गं दुर्गमस्थानं सेनानिवासो वा, तेषु मध्ये, यत्र यत्र येषु येषु स्थानेषु, भयं शङ्का, शत्रुभ्यः आक्रमणाशङ्का इति यावत्, विद्यते इति शेषः, तत्र तत्र च तेषु तेषु च स्थानेषु, सेनानीः सेनापतिः, व्यूहीकृतैः रचितव्यूहैः यथाशास्त्रं विन्यस्तैरित्यर्थः, ("व्यूहस्तु बलविन्यासः" इत्यमरः) बलैः सैन्यैः सह यायात् गच्छेत्; युद्धार्थमिति शेषः।

बलाध्यक्षः पुरो यायात् प्रवीरपुरुषान्वितः ।
मध्ये कलत्रं स्वामी च कोषः फल्गु च यद्बलम् ॥ ७३ ॥
पार्श्वयोरुभयोरश्वा अश्वानां पार्श्वतो रथाः ।
रथानां पार्श्वतो नागा नागानाञ्च पदातयः ॥ ७४ ॥
पश्चात् सेनापतिर्यायात् खिन्नानाश्वासयन् शनैः ।
मन्त्रिभिः सुभटैर्युक्तः प्रतिगृह्य बलं नृपः ॥ ७५ ॥
समेयात् विषमं नागैर्जलाढ्यञ्च महीधरम् ।
सममश्वैर्जलं नौभिः सर्वत्रैव पदातिभिः ॥ ७६ ॥

(७३) यात्रायां व्यूहसन्निवेशप्रकारमाह, बलाध्यक्ष इति।—बलाध्यक्षः सेनाध्यक्षः, "बलाध्यक्ष" शब्देनात्र सेनापतेः सहकारीति मन्तव्यं, "पश्चात् सेनापतिर्यायात्" इत्युक्तेः ; प्रवीरपुरुषान्वितः वीरप्रधाननरैः सहितः सन्, पुरः अग्रे, यायात् गच्छेत्, मध्ये मध्यदेशे, कलत्रं स्त्रीजनः, स्वामी राजा, कोषः धनं, यच्च फल्गु असारं, हीनबलमित्यर्थः, निर्वीर्य्यमिति यावत्, ("असारं फल्गु" इत्यमरः) बलं सैन्यं, तत् यायादिति पूर्वेणान्वयः ।

(७४) पार्श्वयोरिति।—उभयोः द्वयोः, पार्श्वयोः वामदक्षिणयोः भागयोः, अश्वाः वाजिनः, अश्वानां पार्श्वतः पार्श्वे, रथाः स्यन्दनानि, रथानां पार्श्वतः पार्श्वे, नागाः हस्तिनः, नागानाञ्च पार्श्वतः पदातयः पादचाराः, पदातिसैनिका इत्यर्थः, गच्छेयुरिति शेषः [ उभयत्र पार्श्वपदे सप्तम्याः तसिल्प्रत्ययः ]।

(७५) पश्चादिति।—सेनापतिः सेनानीः, खिन्नान् भीतान्, श्रान्तान्, पीड़ितान् वा, सेनापुरुषान् इति शेषः, आश्वासयन् आश्वस्तान् कुर्वन्, पश्चात् पृष्ठतः, पूर्वोक्तानां सेनादीनामिति शेषः, शनैः मन्दं मन्दं, यायात्, नृपः राजा, मन्त्रिभिः अमात्यैः, सुभटैः निपुणैर्योद्धृपुरुषैः, युक्तः सन्, बलं पूर्वोक्तप्रकारेण सज्जितं सैन्यं, प्रतिगृह्य नीत्वा, यायादिति शेषः ; सर्वथा सुरक्षितेन राज्ञा गन्तव्यम्, अन्यथा सर्वमेव विफलं स्यादिति भावः ।

(७६) भारतशान्तिपर्वीयराजधर्मव्याख्यानप्रकरणोक्तश्लोकानुपजीव्य द्वाभ्यां स्थानभेदेन याननियममाह, समेयादिति।—विषमम् उन्नतानतं, बन्धुरमिति यावत्, जलैः आढ्यं सम्पन्नं जलाढ्यम् आनूपदेशं, जलाकीर्णं प्रदेशञ्चेत्यर्थः, तथा महीधरं पर्वतं, ("जलाढ्यं समहीधरम्" इति पाठे—जलप्रायं पर्वतसङ्कुलं विषमं

हस्तिनां गमनं प्रोक्तं प्रशस्तं जलदागमे ।
तदन्यत्र तुरङ्गाणां पत्तीनां सर्वदैव हि ॥ ७७ ॥
शैलेषु दुर्गमार्गेषु विधेयं नृप ! रक्षणम् ।
स्वयोधैः रक्षितस्यापि स्वपनं योगिनिद्रया ॥ ७८ ॥
नाशयेत् कर्षयेच्छत्रुं दुर्गकण्टकमर्दनैः ।
परदेशप्रवेशे च कुर्य्यादाटविकान् पुरः ॥ ७९ ॥

---

प्रदेशमित्यर्थः) नागैः हस्तिसैन्यैः, समीयात् समागच्छेत्, [ सम्+आङ्+इन्+लिङ्-यात् ] तत्र तत्र अश्वानां दुर्गमत्वादिति भावः, समं समतलम्, अवन्धुरं प्रदेशमित्यर्थः, अश्वैः, तत्र तेषां सुगमत्वात् इति भावः, जलं जलमयं नद्यादिकं, नौभिः नौकाभिः, सर्वत्रैव सर्वास्मिन्नेव स्थाने, पदातिभिः पादचारैः साधवः, पदातिसैन्यैरित्यर्थः, समीयात् इति सर्वत्र योजना ; तथा च यदभिगम्यं यत् स्थानं तत्र तेनैव यातव्यमिति हृदयम् ।

(७७) कालभेदेन याननियममाह, हस्तिनामिति ।—जलदागमे वर्षासु, हस्तिनां गमनं हस्तिभिः साधनैः यात्रा, तदानीमश्वैः पिच्छिले वर्त्मनि गन्तुं दुष्करत्वात् गतिमान्द्येन गमनविलम्बाच्च इति भावः, तदन्यत्र जलदागमादन्यस्मिन् काले, ग्रीष्मादौ इत्यर्थः, तुरङ्गाणाम् अश्वानां, पत्तीनां पदातीनां, गमनं सर्वदैव हि नित्यकालम् एव, प्रशस्तं श्रेष्ठं, प्रोक्तं कथितम् ।

(७८) शैलेष्विति ।—नृप ! हे राजन् ! शैलेषु पर्वतेषु, पर्वतमयदेशेषु इत्यर्थः, दुर्गमार्गेषु दुर्गमपथेषु दुर्गपथेषु वा, रक्षणम् अवधानम्, आत्मरक्षणमित्यर्थः, विधेयं कर्त्तव्यम्, अथवा नृपरक्षणमिति एकपदं, नृपस्य रक्षणम् इत्यर्थः ; तथा स्वयोधैः स्वकीययोद्धृपुरुषैः, रक्षितस्यापि कृतरक्षाविधानस्यापि, योगिनिद्रया योगिनां निद्रावत् निद्रया, अप्रगाढनिद्रया इत्यर्थः, योगिनो यथा कदाऽपि प्रगाढतया निद्रां न यान्ति तथा इति यावत्, स्वपनं निद्रा, उचितमिति शेषः, विजिगीषुभिः प्रतिपदं सावधानैर्भवितव्यमिति भावः ।

(७९) कामन्दकनीतेरेकोनविंशसर्गोक्तश्लोकमवलम्ब्य रिपुबलोच्छेदप्रकारमाह, नाशयेदिति ।—दुर्गस्य कोट्टस्य, सेनाऽऽवासस्य इत्यर्थः, कटकस्य राजधान्याः, मर्दनैः पीड़नैः, दुर्गस्थान् राजधानीस्थांश्च सेनापुरुषान् अवमर्द्य इत्यर्थः ; यद्वा,—

यत्र राजा तत्र कोषो विना कोषं न राजता ।
सुभटेभ्यस्ततो दद्यात् को हि दातुर्न युध्यते ? ॥ ८०॥

यतः,—न नरस्य नरो दासः दासस्त्वर्थस्य भूपते ! ।
गौरवं लाघवं वाऽपि धनाधननिबन्धनम् ॥ ८१ ॥

दुर्गे ये कटकाः सेनाः, तेषां मर्द्दनैः, दुर्गस्थसैनिकान् पराजित्य इत्यर्थः, ("कटकस्त्वद्रिनितम्बे वाहुभूषणे । सेनायां राजधान्याच" इति हैमः । "दुर्गकण्टक-मर्द्दनैः" इति पाठे—दुर्गाणि कण्टकाः चुद्रशत्रवः, यांवोपघातकरा इति भावः; ("कण्टको न स्त्रियां चुद्रशत्रौ मत्स्यादिकीकसे। नैयायिकाद्रिदोषोक्तौ स्यात् रोमाचद्रुमाङ्गयोः" ॥ इति मेदिनी ) तेषां मर्द्दनैः ) शत्रुं कर्षयेत् आक्रमेत्, नाशयेत ह्न्याद्वा, परस्य शत्रोः, देशप्रवेशे राज्यप्रवेशे, आटविकान् अरण्यचरान् शौद्रपुरुषान्, भिल्लकिरातादीन् इत्यर्थः, पुरः अग्रे, कुर्य्यात्; आटविकैः प्रदर्शितमार्गैः शत्रुराज्यं प्रविशेदित्यर्थः ।

(८०) यत्रेति।—यत्र यस्मिन् स्थाने, राजा, तिष्ठेदिति शेषः, तत्र कोषः अर्थौघः, धनराशिरित्यर्थः, धनागारः इति यावत्, ( "कोषोऽस्त्री कुड्मले खड्गपिधाने-ऽर्थौघदिव्ययोः" इति मेदिनी ) रक्षणीय इति शेषः, कोषं विना धनराशिव्यति-रेकेण, राजता राजत्वं, न, तिष्ठेदिति शेषः ; प्रभुत्वं हि धनमूलमिति भावः ; ततः तस्माद्धनात, ततः तस्मात्, कोषं विना राजताऽसम्भवादिति वा, सुभटेभ्यः सुदक्षयोद्धृभ्यः, दद्यात् प्रयच्छेत्, धनमिति शेषः, हि यतः, को जनः, दातुः धनदस्य, दातृपक्षमवलम्ब्येत्यर्थः, [ सम्बन्धविवक्षया षष्ठी ] न युध्यते ? परैः सह न विग्रह्णाति ? अपि तु सर्व एवेत्यर्थः, "अर्थेन सर्वे वशाः" इति भावः ।

(८१) भारतीयभीष्मपर्वोक्तश्लोकमवलम्ब्य धनप्रभावमाह, नेति।—भूपते ! हे राजन् ! नरः मानवः, नरस्य मनुष्यस्य, दासः अधीनः, न, भवतीति शेषः, तु किन्तु, अर्थस्य धनस्य एव, दासः, तथा हि, गौरवं सम्मानं, श्रेष्ठत्वमित्यर्थः, वा अथवा, लाघवं लघुत्वमपि, हीनतेत्यर्थः, धनाधननिबन्धनं धनसद्भाव-धनासद्भाव-मूलम् ; धनेन बलवान् लोक इति भावः। ( "अर्थस्य पुरुषो दासः दासस्त्वर्थो न कस्यचित् । इति सत्यं महाराज ! बद्धोऽस्म्यर्थेन कौरवैः" ॥ इति भारतभीष्मपर्वीयपाठः ) ।

अभेदेन च युध्येत रक्षेच्चैव परस्परम् ।
फल्गु सैन्यञ्च यत्किञ्चिन्मध्ये व्यूहस्य कारयेत् ॥ ८२॥
पदातींश्च महीपालः पुरोऽनीकस्य योजयेत् ।
उपरुध्यारिमासीत राष्ट्रञ्चास्योपपीडयेत् ॥ ८३ ॥
स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा ।
वृक्षगुल्मावृते चापैरसिचर्मायुधैः स्थले ॥ ८४ ॥

---

(८२) कामन्दकनीतेरेकोनविंशतिसर्गोक्तश्लोकमुपजीव्य सैन्यानां परस्परकर्त्तव्यमाह, अभेदेनेति ।—परस्परम् अन्योन्यम्, अभेदेन ऐक्येन, मिलित्वेत्यर्थः, सर्वेषामस्माकमेक एव स्वार्थ इति निश्चित्य अन्योऽन्यपार्थक्यबुद्धिं समुत्सृज्येति यावत्, युध्येत युद्धं कुर्य्यात्, ("युध्येयुः" इति पाठः प्रामादिकः, कामन्दकीये "अभेदेन च युध्येरन् रक्षेयुश्च परस्परम्" इति पाठात्) रक्षेच्चैव त्रायेत एव च, परस्परं साहाय्यं कुर्य्यादेवेत्यर्थः, यत् किञ्चित् फल्गु हीनबलञ्च, सैन्यं, विद्यते इति शेषः, तत् व्यूहस्य सेनासन्निवेशविशेषस्य, मध्ये मध्यभागे, कारयेत् विदध्यात्, अन्यथा विपद्यते इति भावः ।

(८३) पदातीनिति ।—महीपालः राजा, पदातीन् पादचारान् सैनिकान्, अनीकस्य रणस्य, रणक्षेत्रस्येत्यर्थः, यद्वा,—अनीकस्य सैन्यस्य, व्यूढसैन्यसङ्घस्येत्यर्थः, ("अनीकोऽस्त्री रणे सैन्ये" इति मेदिनी) पुरः अग्रे, योजयेत् स्थापयेत्, तथा अरिं शत्रुम्, उपरुध्य अवरुध्य, आसीत वर्त्तेत, अस्य अरेः, राष्ट्रं राज्यञ्च, उपपीड़येत् राष्ट्रे उपद्रवं जनयेत् । श्लोकस्यास्य उत्तरार्द्धं मनुसंहितायां सप्तमाध्याये दृश्यते ।

(८४) मनुसंहितायाः सप्तमाध्यायोक्तं श्लोकमुपन्यस्य समानूपादिस्थानभेदेन हस्त्यश्वादिभिर्युद्धनियममाह, स्यन्दनेति ।—समे समतलप्रदेशे, स्यन्दनानि रथाः, अश्वाः वाजिनश्च तैः, तथा अनूपे जलप्राये, ("जलप्रायमनूपं स्यात्" इत्यमरः) [अनुगता आपोऽत्र इति अनु+अप्+"ऋक्पूरब्धूः—" (५।४।७४ पा०) इति अः, "ऊदनोर्देशे" (६।३।९८ पा०) इति अपस्य ऊत्] जलाकीर्णे देशे इत्यर्थः, नौद्विपैः नौकाभिः हस्तिभिश्च, वृक्षगुल्मावृते तरुलताऽऽच्छन्नस्थाने, चापैः धनुर्भिः, स्थले अन्यत्र देशे, असिचर्मायुधैः खड्गखेटकास्त्रैः करणैः, युध्येत् युद्धं कुर्य्यात्, [युधेरात्मनेपदित्वात् "युध्येत्" इति प्रयोगः कथं सिध्यति ? इत्यत्राह

दूषयेच्चास्य सततं यवसान्नोदकेन्धनम्।
भिन्द्याच्चैव तड़ागानि प्राकारान् परिखास्तथा॥ ८५॥
बलेषु प्रमुखो हस्ती न तथाऽन्यो महीपतेः।
निजैरवयवैरेव मातङ्गोऽष्टायुधः स्मृतः॥ ८६॥
बलमश्वश्च सैन्यानां प्राकारो जङ्गमो मतः।
तस्मादश्वाधिको राजा विजयी स्थलविग्रहे॥ ८७॥

तथा ह्युक्तम्,—

---

वामनः,—"युध्येदिति युधः क्वचि" (५ अधि० २ अ० २८ सू०) युधः क्वचि, युधमात्मन इच्छेत् युध्येदिति]।

(८५) शत्रोर्भक्त्याद्युपकरणनाशे मनुसंहितायाः सप्तमाध्यायोक्तश्लोकं प्रमाणयति, दूषयेदिति।—अस्य शत्रोः, यवसं घासादितृणम्, अश्वादिभोज्यमित्यर्थः, अन्नं भोज्यम्, उदकं जलम्, इन्धनं काष्ठं, तेषां समाहारस्तत्, सततं नित्यमेव, दूषयेत् दूषितं कुर्य्यात्, विषादिभिः अव्यवहार्य्यं कुर्य्यात् इत्यर्थः, तथा तड़ागानि सरांसि, प्राकारान् प्राचीरवेष्टनानि, परिखाः खेयानि, दुर्गादिपरितः खातानि च इत्यर्थः, भिन्द्यात् एव विनष्टं कुर्य्यादित्यर्थः।

(८६) बलेष्विति।—महीपतेः राज्ञः, बलेषु हस्त्यश्वरथपदात्याख्येषु सैन्येषु मध्ये, हस्ती गजः, प्रमुखः मुख्यः, सर्वश्रेष्ठः इत्यर्थः, ("प्रमुखं प्रथमे मुख्ये" इति हैमः) अन्यः अश्वादिः, तथा तद्वत् प्रमुखः, न। कुतः? इत्याह,—मातङ्गः हस्ती, निजैः अवयवैः स्वकीयैः पादचतुष्टयदन्तद्वयशुण्डपुच्छरूपैः अष्टाभिरङ्गैः एव, अष्टायुधः अष्टविधास्त्रवान्, स्मृतः कथितः, तथा च सर्वाण्येव अङ्गानि प्रहरणरूपाणि शत्रुनाशयोग्यानि गजस्य इत्यर्थः।

(८७) बलमिति।—सैन्यानां मध्ये, अश्वः घोटकः, घोटकरूप इत्यर्थः, बलञ्च सैन्यं पुनः, तुरङ्गसैन्यमित्यर्थः, जङ्गमः गमनशीलः, प्राकारः प्राचीरं, दुर्गप्राकारसदृश इत्यर्थः, मतः सम्मतः, विदुषामिति शेषः, स्थावरौ दुर्गप्राकारौ यथा दुर्गाभ्यन्तरस्थं सैन्यं विपक्षात् रक्षति, जङ्गमम् अश्वसैन्यमपि समन्तादवस्थितं सैन्यानीतराणि तथा रक्षति इत्यतस्तेषां जङ्गमप्राकारत्वं बोध्यम्; तेन हेतेन आत्मरक्षा कर्त्तुं शक्यते इति भावः, तस्मात् जङ्गमप्राकारत्वात्, अश्वाः अधिकाः यस्य स अश्वाधिकः अधिकाश्वसैन्यवान् इत्यर्थः, राजा भूपतिः, स्थलविग्रहे स्थलयुद्धे, विजयी

युध्यमाना हयारूढ़ा देवानामपि दुर्जयाः ।
अपि दूरस्थिता येषां वैरिणो हस्तवर्त्तिनः ॥ ८८ ॥
प्रथमं युद्धकारित्वं समस्तबलपालनम् ।
दिङ्मार्गाणां विशोधित्वं पत्तिकर्म प्रचक्षते ॥ ८९ ॥
स्वभावशूरमस्त्रज्ञमविरक्तं जितश्रमम् ।
प्रसिद्धक्षत्रियप्रायं बलं श्रेष्ठतमं विदुः ॥ ९० ॥

---

विजेता, भवेदिति शेषः, तथा च विजिगीषुणा प्रभूत एव अश्वसङ्ग्रहः कार्य्य इति भावः ।

(८८) अश्वजन्तूनामौत्कर्ष्यमाह, युध्यमाना इति ।—हयारूढ़ाः हयान् अश्वान्, आरूढ़ाः अधिष्ठिताः, अश्वसाधनाः इत्यर्थः, अश्वमारुह्येति भावः युध्यमानाः युद्धाय प्रवर्त्तमानाः, सेनापुरुषाः इति शेषः, देवानामपि, [ सम्बन्धविवक्षया षष्ठी, न कर्त्तरि "दुर्जयाः" इत्यस्य खल्प्रत्ययान्तत्वात् ] किमुत नराणाम् ? इति भावः, दुर्जयाः दुर्द्धर्षाः, देवैरपि जेतुम् अशक्याः इत्यर्थः, येषाम् अश्वारूढ़ानां सैनिकानां, दूरस्थिताः विप्रकृष्टदेशस्थिता अपि, वैरिणः शत्रवः, हस्तवर्त्तिनः करतलस्थाः, करतलस्थितवत् अतीव सुग्राह्या इति भावः, भवन्तीति शेषः, अतः विजयार्थिना अश्वाः सङ्ग्रहीतव्या इति भावः ।

(८९) पदातिकर्त्तव्यं निर्दिशति, प्रथममिति ।—समस्तबलपालनं हस्त्यादि चतुरङ्गसेनारक्षणं, प्रथमं मुख्यं, युद्धकारित्वं युद्धनैपुण्यम इत्यर्थः, तथा दिङ्मार्गाणां दिशां मार्गाणां प्रवेशनिर्गमद्वाराणाञ्च, विशोधित्वं निर्विघ्नत्वं, निर्बाधत्वमिति यावत्, पत्तिकर्म पादचाराणां कार्य्यं, प्रचक्षते आहुः, नीतिज्ञा इति शेषः । यद्वा,—प्रथमम् आदौ, युद्धारम्भे इत्यर्थः, युद्धकारित्वं सङ्ग्रामकरणं, समस्तबलपालनं सर्वेषां सैन्यानां रक्षाविधानमित्यर्थः, तथा दिङ्मार्गाणां दिशां तथा मार्गाणाम् अरिदेशगमनोचित-पथानां, यस्यां दिशि येन मार्गेण गमनं कर्त्तव्य, तत्तद्दिशां मार्गाणाञ्च इत्यर्थः, विशोधितं विशोधकत्व. मार्गावरोधिवृक्षादीनामपसारणेन विषमभूमीनां समीकरणेन च विशुद्धितासम्पादनमित्यर्थः, पत्तिकर्म पदातिसैनिकानां कार्य्यं, प्रचक्षते ।

(९०) स्वभावेति ।—स्वभावशूर प्रकृत्या वीरम्, अस्त्रज्ञम् अस्त्रप्रयोगकुशलम्, अविरक्तं स्वामिनि अनुरक्तं, सततं कर्त्तव्यकर्मणि उत्साहविशिष्टमिति यावत्, जितः आयत्तीकृतः, श्रमः क्लेशः येन तत् जितश्रमं क्लेशसहिष्णु इत्यर्थः, प्रसिद्धक्षत्रिय

यथा प्रभुकृतान्मानात् युध्यन्ते भुवि मानवाः।
न तथा बहुभिर्दत्तैर्द्रविणैरपि भूपते! ॥ ९१ ॥
वरमल्पबलं सारं न बह्वी मुण्डमण्डली।
कुर्य्यादसारभङ्गो हि सारभङ्गमपि स्फुटम् ॥ ९२ ॥
अप्रसादोऽनधिष्ठानं देयांशहरणञ्च यत्।
कालयापोऽप्रतीकारस्तत्र वैराग्यकारणम् ॥ ९३ ॥

वीरत्वेन ख्यातक्षत्रियबहुलं, बलं सैन्यं, श्रेष्ठतमं मुख्यं, विदुः जानन्ति, विद्वांस इति शेषः, तथा च नृपतिः ईदृग्गुणोपेतं सैन्यं कर्त्तुं यतेत इत्यर्थः।

(९१) यथेति।—भूपते! हे राजन्! भुवि भूतले, मानवाः सैनिकपुरुषा इति यावत्, प्रभुकृतात् स्वामिकृतात्, मानात् समादरात्, स्वामिसकाशे सम्मानादिलाभात् हेतोः इत्यर्थः, यथा यादृशं, युध्यन्ते उत्साहेन विग्टह्णन्ति, तथा तादृशं, बहुभिः प्रभूतैः, द्रविणैः धनैः, दत्तैरपि समर्पितैरपि, न, युध्यन्ते इति शेषः, मानधना हि महान्तः, अतः तेषां समादरो विधेय इति भावः।

(९२) वरमिति।—सारं बलवत्, प्रभूतबलविक्रमसम्पन्नमित्यर्थः, अल्पबलम् अल्पसङ्ख्यकमपि सैन्यं, ("बलं शक्तिर्बलं सैन्यं बलं स्थौल्यं बलो बली" इति शाश्वतः) वरं श्रेयः, बह्वी प्रभूता, मुण्डमण्डली मस्तकश्रेणी, मुण्डगणनया प्रभूतसङ्ख्यका असाराः सैनिकपाशा इति भावः, न, वरमिति शेषः। अत्र हेतुमाह,—हि यतः, असाराणां दुर्बलानां, भङ्गः पराङ्मुखत्वं, पलायनमित्यर्थः, सारभङ्गमपि साराणां सारवतां, बलवतां सैन्यानामपीत्यर्थः, भङ्गम् उत्साहभङ्गं, कुर्य्यात् जनयेत्, इति स्फुटं सुव्यक्तमेव; बहूनां पलायनदर्शनेन स्वपक्षपराजयशङ्कया इति भावः।

(९३) अप्रसाद इति।—अप्रसादः स्वसैन्यं प्रति स्वामिनः अप्रसन्नता, अनुग्रहप्रदर्शनाभावो वा, ("प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु" इति मेदिनी) अनधिष्ठानम् अनायकत्वं, सैन्यमध्ये अनवस्थानमिति वा, अन्तराऽन्तरा सैन्यमध्ये अवस्थाय तेषां शूरत्वे उत्साहाप्रदानमित्यर्थो वा, यच्च देयांशस्य दातव्यस्य वेतनादेः, हरणं सङ्कोचः, दानाभावः इत्यर्थः, लुण्ठनप्राप्तधनस्य आत्मसात्करणं वा, कालयापः आशुसम्पाद्ये कर्म्मणि अयथाविलम्बः, शमो निश्चेष्टतया अवस्थानं वा, अप्रतीकारः विपदः अभावादेवां अप्रतिविधानम्, एतत् सर्वं, तत्र बलेषु, वैराग्यस्य विरक्तेः, कारणं हेतुः; अतस्तानि परिहरेदिति भावः।

अपीड़यन् बलं शत्रून् जिगीषुरभिषेणयेत्।
सुखसाध्यं द्विषां सैन्यं दीर्घयानप्रपीड़ितम् ॥ ९४ ॥
दायादादपरो यस्मात् नास्ति भेदकरो द्विषाम्।
तस्मादुत्थापयेत् यत्नाद्दायादं तस्य विद्विषः ॥ ९५ ॥
सन्धाय युवराजेन यदि वा मुख्यमन्त्रिणा।
अन्तःप्रकोपणं कार्य्यमभियोक्तुः स्थिरात्मनः ॥ ९६ ॥

(९४) अपीड़यन्निति।—जिगीषुः विजेतुमिच्छुः नृपतिः, बलं स्वसैन्यम्, अपीड़यन् अव्यथयन्, एकदा दीर्घपथपर्य्यटनेन तेषां पीड़ाम् अनुत्पादयन् इत्यर्थः, मन्दगमनेन विश्रामयन् इति भावः, शत्रून् अरीन्, अभिषेणयेत् सेनया अभियायात्, सेनया शत्रोः अभिमुखं यायात् इत्यर्थः, ("यत् सेनयाऽभिगमनमरौ तदभिषेणनम्" इत्यमरः)। [सेनया अभियानम् इति अभियानार्थे अभिपूर्वकात् सेनाशब्दात् "सत्याप—" (३।१।२५ पा०) इति णिच्-प्रत्यये अभिषेणयति इति नामधातुः, ततः लट्-तिप्। "उपसर्गात् सुनोति—" (८।३।६५ पा०) इति षत्वम्]। अत्र यतः इति पदमूह्यम्; दीर्घयानप्रपीड़ितं दीर्घमार्गपर्य्यटनेन प्रपीड़ितं क्लान्तं, सैन्यं द्विषां शत्रूणां, सुखसाध्यं सुखेन उच्छेद्यम्, अनायासेन उन्मूलयितुं शक्यमित्यर्थः, [कर्त्तरि षष्ठी] अतः मन्दं मन्दं यायात् इति भावः।

(९५) दायादादिति।—यस्मात् यतः, द्विषां शत्रूणां, दायं धनम्, आददाति गृह्णाति इति तस्मात् दायादात् सपिण्डात्, ज्ञातेरित्यर्थः, ("सपिण्डपुत्रौ दायादौ" इति शाश्वतः) [अन्यार्थशब्दयोगे पञ्चमी] अपरः अन्यः, भेदकरः परस्परं विघटयिता, नास्ति, तस्माद्धेतोः, यत्नात् यत्नेन, तस्य विद्विषः शत्रोः, दायादं सपिण्डम्, उत्थापयेत् प्रकोपयेत्, तैः प्रकृतिवर्गान् भेदयितुम् उत्साहयेत् इत्यर्थः, अन्तर्भेदेन शत्रोरुन्मूलनस्य सुकरत्वादिति भावः।

(९६) कामन्दकीयनवमसर्गोक्तं श्लोकमवलम्ब्य शत्रोरन्तःप्रकोपणोपायमाह, सन्धायेति।—युवराजेन यौवराज्ये अभिषिक्तेन राजपुत्रेण, यदिवा अथवा, मुख्यमन्त्रिणा प्रधानामात्येन सह, सन्धाय सन्धिं स्थापयित्वा, तयोः राज्यकामुकत्वात् इति भावः; स्थिरात्मनः निश्चिन्तस्य, उद्योगविहीनस्य इत्यर्थः, अभियोक्तुः अभियोक्तुः, आक्रमितुरित्यर्थः, विजिगीषोरिति यावत्, अन्तःप्रकोपणं प्रकृतिवर्गाणामसन्तोषोत्पादनं, कार्य्यं कर्त्तव्यम्। ("युवराजेन सन्धाय प्रधानपुरुषेण वा। ततः प्रकोपं जनयेदभियोक्तुः स्थिरात्मनः" ॥ इति कामन्दकीयपादः)।

क्रूरं मित्रं रणे चापि भङ्गं दत्त्वाऽभिघातयेत् ।
अथवा गोग्रहाऽऽकृष्ट्या तन्मुख्याऽऽश्रितबन्धनात् ॥ ९७ ॥
स्वराष्ट्रं वासयेद्राजा परदेशापहारणात् ।
अथवा दानमानाभ्यां वासितं धनदं हि तत् ॥ ९८ ॥

अथवा ( भ ) किं बहुना उदितेन,—

आत्मोदयः परग्लानिर्द्वयं नीतिरितीयती ।
तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते" ॥ ९९ ॥

---

( ९७ ) क्रूरमिति ।—क्रूरञ्च खलञ्च, कपटाचारमित्यर्थः, मित्रं मित्रभावापन्नं राजानं, रणे युद्धे, भङ्गं दत्त्वाऽपि सङ्ग्रामात् विरम्यापि, अभिघातयेत् नाशयेत्, अथवा किंवा, विनाशासमर्थे विनाशायुक्तत्वे वा इत्यर्थः, गोग्रहाकृष्ट्या गोग्रहणतत्त्वेन आकर्षणेन, सबलेनाकर्षणेनेत्यर्थः, तस्य विपक्षस्य, मुख्याः प्रधानानि, ये आश्रिताः सहायाः, सहायभूताः राजानः इत्यर्थः, तेषां बन्धनात् निरोधात्, गतिरोधेन स्वपक्षतानयनेन वा इति भावः ; अभिघातयेदिति शेषः । यद्वा,—गोग्रहाकृष्ट्या गवां ग्रहणं येन सः गोग्रहः पाशः, तस्य आकृष्ट्या आकर्षणेन, गोगलस्थरज्ज्वाकर्षणेन गवाकर्षणवत् इति भावः ; तन्मुख्याश्रितबन्धनात् तस्य मुख्याः प्रवराः, ये आश्रिताः अधीनाः, अमात्यभृत्यादयः, पुत्रकलत्रादयो वा इति यावत्, तेषां बन्धनात् बन्धनं कृत्वा इत्यर्थः, तेषां निरोधनेन तमाकृष्य वशीकुर्य्यादिति भावः । (कामन्दकीयाष्टादशसर्गे अस्यानुरूपश्लोको यथा,—"मृगयासम्प्रयुक्तं वा हन्याच्छत्रुं व्यपाश्रयः । अथवा गोग्रहाकृष्ट्या तल्लक्ष्यं मार्गबन्धनात्" ॥ इति ।

( ९८ ) स्वराष्ट्रमिति ।—राजा विजिगीषुर्नृपः, परदेशापहारणात् परस्य शत्रोः, देशः राज्यं, तस्य अपहारणात् अपचयसाधनात्, विविधोपद्रवैश्च शत्रुराज्यमुच्छिद्य इत्यर्थः, ( "अपहारस्त्वपचयः" इत्यमरः ) अथवा किंवा, दानमानाभ्यां दानं मानञ्च प्रदायेत्यर्थः, स्वराष्ट्रं वासयेत् स्वराज्यं स्थापयेत्, शत्रोः प्रजावृन्दमिति शेषः, हि यतः, वासितं प्रजाभिः कृतावासं, तत् स्वराज्यं, धनदं धनप्रदम्, ऐश्वर्य्यसम्पन्नमित्यर्थः, भवेदिति शेषः ।

( भ ) किमिति ।—बहुना उदितेन किम् ?—वाक्प्रपञ्चेनालमित्यर्थः । [ वदधातोः क्तप्रत्ययः, वारणार्थक-किंशब्दयोगे तृतीया ] ।

( ९९ ) स्ववक्तव्यमुपसंहरति, आत्मोदय इति ।—आत्मनः स्वस्य, उदयः उन्नतिः,

राज्ञा विहस्योक्तम्,—"सर्वं सत्यमेतत्। किन्तु,—

अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम्।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ?" ॥१००॥

तत उत्थाय राजा (म) मौहूर्त्तिकाऽऽवेदितलग्ने प्रस्थितः। अथ (य) प्रणिधिप्रहितश्चरो हिरण्यगर्भसमीपमागत्य

---

वृद्धिरिति यावत्, परग्लानिः परस्य शत्रोः, ग्लानिः हानिः, ("परज्यानिः" इति शिशुपालवधोक्तपाठेऽपि तुल्य एवार्थः) इति एतत्, द्वयं द्विधा, इदं परिमाणमस्या इति इयती एतावती, एतदनधिका इत्यर्थः, नीतिः नयसङ्ग्रहः, एतद्द्वयातिरिक्तो न कश्चित् नीतिपदार्थोऽस्तीत्यर्थः। यदन्यत् षाड्गुण्यादिवर्णनं तत् सर्वमस्यैव प्रपञ्चः इत्याह, तदिति।—तत् स्वपरयोः उपचयापचयरूपं द्वयम्, ऊरीकृत्य अङ्गीकृत्य, मुख्यत्वेन स्वीकृत्य इत्यर्थः, कृतिभिः पण्डितैः, नीतिशास्त्रकुशलैरित्यर्थः, वाचस्पत्यं वाग्मित्वं, प्रतायते वितन्यते, विस्तार्यते इत्यर्थः, [प्र+तन+कर्मणि लट्-ते "तनोतेर्यकि" (६।४।४४ पा०) इति आत्वम्] यादृशेनोद्योगेन स्वपक्षाभ्युदयः परपक्षस्य चापचयो भवेत्, तादृशमेवोद्योगं कृत्वा सत्वरमेव शत्रुर्यातव्यः, न तु विलम्बेन न वा अनुद्योगेन इति भावः। श्लोकोऽयं माघविरचितमहाकाव्यस्य द्वितीयसर्गे दृश्यते।

(१००) नीतिसम्मतमपि भवदुक्तं न पक्षिभ्यः अस्मभ्यं रोचते इत्याह, अन्यदिति।—उच्छृङ्खलं स्वेच्छाचारानुगतम्, उल्लङ्घितशास्त्रनियममित्यर्थः, प्रसह्य पीडनक्षममिति भावः, सत्त्वं बलं, तेजः इत्यर्थः, अन्यत् अन्यविधं, शास्त्रनियन्त्रितं मन्वादिशास्त्रेणोदाहृतं, शत्रोर्व्यसने यातव्यमित्येवंरूपेण नियमितमित्यर्थः, सत्त्वम् अन्यत् अन्यप्रकारं, नेदम् उपयुज्यते उभयोः नितरां विरुद्धत्वात् नैकत्रावस्थान-मित्यर्थः। अत्र दृष्टान्तमाह, सामानाधिकरण्यमिति।—हि तथाहि, तेजः ज्योतिः, तिमिरम् अन्धकारः तयोः, परस्परविरुद्धस्वभावयोः इति भावः, सामानाधि-करण्यमेकत्रावस्थानं, कुतः ? न कुतोऽपि सम्भवेदित्यर्थः, उभयोः सहावस्थान-विरोधादिति भावः। युक्तियुक्तं नयान्वितमपि भवतः वाक्यजातं बलहीनविषयत्वात् नास्माकं प्रबलानां प्रीतिप्रदमतोऽधुनैव गन्तव्यमिति निष्कर्षः। अयमपि शिशु-पालवधस्य द्वितीयसर्गे दृश्यते।

(म) मौहूर्त्तिकाऽऽवेदितलग्ने—दैवज्ञनिरूपितशुभसमये।

(य) प्रणिधिप्रहितः,—प्रणिधिना गुप्तचरेण, प्रधानचरेणेति यावत्, प्रहितः प्रेरितः। चरः,—पुरुषः, सहकारी गुप्तचरः इत्यर्थः।

प्रणिधिरुवाच,—"देव ! समागतप्रायो राजा चित्रवर्णः, सम्प्रति (र) मलयपर्वतोपत्यकायां (ल) समावासितकटको वर्त्तते। (व) दुर्गशोधनं प्रतिक्षणम् (श) अनुसन्धातव्यम्; यतोऽसौ गृध्रो महामन्त्री। किञ्च केनचित् सह तस्य विश्वासकथा-प्रसङ्गेन (ष) एतदिङ्गितम् अवगतं मया,—यदनेन प्रागेव कोऽप्यस्मद्दुर्गे नियुक्तः"। चक्रवाको ब्रूते,—"देव! काक एवासौ सम्भवति"। राजाऽऽह,—"न कदाचिदेतत्। यद्येवं, तदा कथं तेन शुकस्य (स) अभिभवाय उद्योगः कृतः? अपरञ्च शुकस्याऽऽगमनात् तस्य विग्रहोत्साहः, स च चिरात् अत्राऽऽस्ते"। मन्त्री वदति,—"तथाऽपि (ह) आगन्तुकः शङ्कनीयः"। राजाऽऽह,—"आगन्तुका अपि कदाचिदुपकारका दृश्यन्ते। शृणु,—

परोऽपि हितवान् बन्धुर्बन्धुरप्यहितः परः।
अहितो देहजो व्याधिर्हितमारण्यमौषधम्॥ १०१॥

---

(र) मलयेति।—मलयाचलसन्निहितभूमौ।

(ल) समावासितकटकः,—संस्थापितवस्त्रराजधानीकः, कृतशिविरसन्निवेशः वा, संस्थापितसैन्य इत्यर्थः। ("कटकस्त्वद्रिनितम्बे बाहुभूषणे। सेनायां राजधान्याञ्च" इति हैमः)।

(व) दुर्गशोधनं—दुर्गस्य संस्कारः। प्रतिक्षणं—सर्वदैव।

(श) अनुसन्धातव्यम्—अन्वेष्टव्यं, सर्वदा सर्वथा सावहितः द्रष्टव्यमित्यर्थः।

(ष) एतदिङ्गितम्—एतत् वक्ष्यमाणम्, इङ्गितं चेष्टाविशेषः इत्यर्थः।

(स) अभिभवाय—निर्यातनाय।

(ह) आगन्तुकः,—नवागतः, अज्ञातकुलशीलः इत्यर्थः।

(१०१) आगन्तोरपि उपकारकत्वं प्रमाणयति, पर इति।—हितवान् हितकारी, ("हितकृत्" इति पाठान्तरम्) परः शत्रुरपि, बन्धुः मित्रम्, अहितः अहितकारी, बन्धुरपि मित्रमपि, परः शत्रुः, उभयत्र भवतीति शेषः। अत्र दृष्टान्तमाह,—देहजः स्वदेहात् उत्पन्नः, आत्मीय इत्यर्थः, व्याधिः रोगः, अहितः

अपरञ्च,—आसीत् वीरवरो नाम शूद्रकस्य महीपतेः।
सेवकः स्वल्पकालेन स ददौ सुतमात्मनः" ॥ १०२॥

चक्रवाकः पृच्छति,—"कथमेतत् ?"। राजा कथयति,—

शूद्रकनृपति-वीरवरनामकराजपुत्रकथा।—

"अहं पुरा शूद्रकस्य राज्ञः क्रीड़ासरसि कर्पूरकेलिनाम्नो राजहंसस्य पुत्त्र्या कर्पूरमञ्जर्य्या सहानुरागवान् अभवम्। तत्र वीरवरो नाम राजपुत्रः कुतश्चित् देशादागत्य राजद्वारमुपगम्य (क) प्रतीहारमुवाच,—"अहं (ख) वर्त्तनार्थी राजपुत्रः, मां राजदर्शनं कारय"। ततस्तेनासौ राजदर्शनं कारितो ब्रूते,—"देव ! यदि मया सेवकेन प्रयोजनमस्ति तदा (ग) अस्मद्वर्त्तनं क्रियताम्"। शूद्रक उवाच,—"किं ते वर्त्तनम् ?"। वीरवरेणोक्तम्,—"प्रत्यहं (घ) सुवर्णशत-

---

क्लेशकरः, किन्तु आरण्यं वनजातं, नितराम् असम्पृक्तमित्यर्थः, औषधं भेषजं, हितं पथ्यं, स्वास्थ्यकरम् इत्यर्थः, उपकारापकारमूलकौ हि लोके मित्रामित्रौ इति भावः।

(१०२) तदेव कथाप्रसङ्गेन द्रढयति, आसीदिति।—शूद्रकस्य तदाख्यस्य महीपतेः राज्ञः, वीरवरो नाम सेवकः कश्चित् परिजनः, आसीत् बभूव, स स्वल्पकालेन अचिरेण, नियोगं प्राप्यैव इत्यर्थः, आत्मनः स्वस्य, सुतं पुत्रं, ददौ समर्पितवान्, सर्वमङ्गलायै राज्ञः राज्यरक्षार्थं जीवितार्थञ्च स्वपुत्रं बलिरूपेण उपजहार इत्यर्थः।

(क) प्रतीहारं—दौवारिकम्। [प्रति+हृ+घञ् "उपसर्गस्य घञ्यमनुष्ये बहुलम्" "क्विप्-घञादौ क्वचिद् भवेत्" इति उपसर्गस्य दीर्घता]।

(ख) वर्त्तनार्थी—जीविकार्थी, जीविकानिर्वाहार्थं धनप्रार्थी इत्यर्थः ("आजीवो जीविका वार्त्ता वृत्तिर्वर्त्तनजीवने" इत्यमरः)।

(ग) अस्मद्वर्त्तनं क्रियतां—मम वृत्तिः निरूप्यतामित्यर्थः।

(घ) सुवर्णशतचतुष्टयं—शतचतुष्टयसुवर्णमुद्राः। ("सुवर्णपञ्चशतानि" इति पाठान्तरम्)।

चतुष्टयम्"। राजाऽऽह,—"का ते (ङ) सामग्री ?"। वीरवरो ब्रूते,—"द्वौ बाहू तृतीयश्च खड्गः"। राजाऽऽह,—(च) "नैतच्छक्यम्"। तच्छ्रुत्वा वीरवरः प्रणम्य चलितः।

अथ मन्त्रिभिरुक्तम्,—"देव ! दिनचतुष्टयस्य वर्त्तनं दत्त्वा ज्ञायतामस्य (छ) स्वरूपं, किमुपयुक्तोऽयम् एतावद्वर्त्तनं गृह्णाति अनुपयुक्तो वा" इति। ततो मन्त्रिवचनादाहूय (ज) ताम्बूलं दत्त्वा तद्वर्त्तनं दत्तवान्। यतः,—

ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं
वातघ्नं कफनाशनं क्रिमिहरं दौर्गन्ध्यदोषापहम्।
वक्त्रस्याभरणं मलापहरणं कामाग्निसन्दीपनं
ताम्बूलस्य सखे ! त्रयोदशगुणाः स्वर्गेऽप्यमी दुर्लभाः ॥१०३॥

---

(ङ) सामग्री—द्रव्य. कार्य्यसाधनार्थमुपकरणम् इत्यर्थः।

(च) नैतच्छक्यम्—एतत् प्रत्यहं सुवर्णचतुष्टयं वर्त्तनमित्यर्थः, न शक्यं न समर्थनीयम्, एतावद्वर्त्तनं दातुं मया न शक्यते इत्यर्थः।

(छ) स्वरूपं—स्वभावः, कार्य्यनैपुण्यानैपुण्यमित्यर्थः।

(ज) ताम्बूलं दत्त्वा—समादरसूचकत्वात् कस्मिन्नपि कार्य्ये केनापि कस्यापि नियोगकाले ताम्बूलदानस्य प्रथा पूर्व्वकालादिदानीमपि वर्त्तते च।

(१०३) ताम्बूलस्य दुर्लभत्वेन तद्दानस्य समादरसूचकत्वं समर्थयितुं तद्गुणानाह, ताम्बूलमिति।—ताम्बूलं कटुतिक्तमुष्णमधुरं कटुतिक्तरसमुष्णवीर्य्यं तथा प्रियञ्च, मनोज्ञञ्चेत्यर्थः, ("मधुरस्तु रसे विषे। मधुरं रसवत्स्वादुप्रियेषु मधुरोऽन्यवत्" ॥ इति विश्वः) क्षारं क्षाररसयुक्तं, क्षाररसत्वात् कफनिःसारकमित्यर्थः, कषायान्वितं कषायरसयुक्तं, वातघ्नं वातोपशमनं, कफनाशनं श्लेष्मदोषनिवारकं, क्रिमिहरं क्रिमिदोषनाशनं, दौर्गन्ध्यदोषापहं दुर्गन्धहरं, मुखदुर्गन्धनाशनमित्यर्थः, वक्त्रस्य मुखस्य, आभरणं शोभाजनकं, अधररञ्जकत्वादिति भावः, मलापहरणं मलनिःसारकं, कामाग्निसन्दीपनं कन्दर्पानलवर्द्धनं, सखे ! हे मित्र !, ताम्बूलस्य पर्णस्य, एते त्रयोदश गुणाः धर्म्माः, सन्तीति शेषः; अमी गुणाः, एकस्मिन्नेव वस्तुनि इति भावः, स्वर्गेऽपि सुरलोकेऽपि, दुर्लभाः दुष्प्रापाः, दैवदुर्लभमेतत् अतः सादरं दत्तम् इति भावः। शार्दूलविक्रीडितं वृत्तम्।

(झ) वर्त्तनविनियोगश्च राज्ञा (ञ) सुनिभृतं निरूपितः। तदर्द्धं वीरवरेण देवेभ्यो ब्राह्मणेभ्यो दत्तं, (ट) स्थितस्य अर्द्धं दुःखितेभ्यः, तदवशिष्टं भोज्यविलासव्ययेन च। एतत् सर्वं नित्यकृत्यं कृत्वा राजद्वारमहर्निशं खड्गपाणिः सेवते। यदा च राजा स्वयं समादिशति, तदा स्वगृहमेव याति।

अथैकदा कृष्णचतुर्दश्यां रात्रौ (ठ) सकरुणक्रन्दनध्वनिं स राजा शुश्राव। तच्छ्रुत्वा राजा ब्रूते,—"कः कोऽत्र द्वारि तिष्ठति?"। तदा तेनोक्तम्,—"देव! अहं वीरवरः"। राजोवाच,—(ड) "क्रन्दनानुसरणं क्रियताम्"। वीरवरोऽपि,—"यथा आज्ञापयति देवः" इत्युक्त्वा चलितः। राज्ञा चिन्तितम्,—"अयमेकाकी राजपुत्रो मया (ढ) सूचीभेद्ये तमसि प्रहितः, नैतदुचितम्, अहमपि गत्वा (ण) निरूपयामि किमेतत्" इति। ततो राजाऽपि खड्गमादाय (त) तदनुसरणक्रमेण नगरात् बहिर्निर्जगाम। ततो गत्वा वीरवरेण रुदती रूपयौवनसम्पन्ना सर्वालङ्कारभूषिता काचित् स्त्री दृष्टा (थ) पृष्टा च,—"का त्वं,

(झ) वर्त्तनविनियोगः,—वर्त्तनस्य जीविकायाः, जीविकार्थं गृहीतस्वार्थस्येत्यर्थः, विनियोगः क्रियासु प्रयोगः, यथायथविभागेन व्ययः इत्यर्थः।

(ञ) सुनिभृतं—सुगुप्तं यथा तथा। निरूपितः,—निर्णीतः, ज्ञात इत्यर्थः।

(ट) स्थितस्य—अवशिष्टस्य अर्द्धस्य, द्विशतस्येत्यर्थः।

(ठ) सकरुणक्रन्दनध्वनिं—शोकव्यञ्जकरोदनशब्दम्।

(ड) क्रन्दनानुसरणं—रोदनानुगमनं, रोदनध्वनिं लक्ष्यीकृत्य गत्वा ज्ञायतां किमेतदित्यर्थः।

(ढ) सूचीभेद्ये—अतिनिविड़े इत्यर्थः। तमसि—अन्धकारे। प्रहितः,—प्रेरितः।

(ण) निरूपयामि—निश्चिनोमि।

(त) तदनुसरणक्रमेण—राजपुत्रस्य पश्चात् गत्वा [प्रकृत्यादित्वात् तृतीया]।

(थ) पृष्टा—जिज्ञासिता। [प्रच्छ+क्त+स्त्रियां टाप्]।

किमर्थं रोदिषि ?" इति। स्त्रिया उक्तम्,—"अहमेतस्य शूद्रकस्य राजलक्ष्मीः, चिरादेतस्य (द) भुजच्छायायां महता सुखेन विश्रान्ता। (ध) देव्या अपराधेन तृतीये दिवसे राजा पञ्चत्वं यास्यति, अहमनाथा भविष्यामि, इदानीं नात्र स्थास्यामि, इति रोदिमि"। वीरवरो ब्रूते,—"यत्र (न) अपायः सम्भवति तत्रोपायोऽप्यस्ति, तत् कथं पुनरिह (प) आवासो भगवत्या भवति ?"। लक्ष्मीरुवाच,—"यदि त्वमात्मनः पुत्रस्य शक्तिधरस्य (फ) द्वात्रिंशल्लक्षणोपेतस्य मस्तकं स्वहस्तेन छित्त्वा

(द) भुजच्छायायां—बाहुबलरूपच्छायायां, भुजबलेन रक्षिता सतीत्यर्थः।

(ध) देव्याः,—महिष्याः, कृताभिषेकायाः पत्न्या इत्यर्थः ("देवी कृताभिषेकायाम्" इत्यमरः)। अपराधेन—दोषेण।

(न) अपायः,—नाशः, विपत्तिरित्यर्थः। उपायः,—प्रतीकारः।

(प) आवासः,—अवस्थितिः।

(फ) द्वात्रिंशल्लक्षणोपेतस्य—महापुरुषस्य द्वात्रिंशत्संख्यकलक्षणयुक्तस्य। यदुक्तं सामुद्रिके,—"पञ्च सूक्ष्मः पञ्च दीर्घः सप्त रक्तः षडुन्नतः। त्रिह्रस्वपृथुगम्भीरो द्वात्रिंशल्लक्षणो महान्" ॥ इति। तथा च महापुरुषस्य अपाङ्ग-करचरणतल-तालोष्ठ-जिह्वा-नखानि इति सप्त रक्तानि; वक्षः-स्कन्ध-नख-नासा-कटि-मुखानि इति षट् उन्नतानि; ललाट-ललाटोरःस्थलानि इति त्रीणि पृथूनि; ग्रीवा-जङ्घा लिङ्गानि इति त्रीणि ह्रस्वानि; नाभि-कण्ठस्वर-स्वभावाः त्रयो गम्भीराः; भुज-नासा-नेत्र-जानु-कपोलानि इति पञ्च दीर्घाणि; त्वक्-केश-लोम-दन्ताङ्गुलिसन्धय इति पञ्च सूक्ष्माः; इत्येतानि द्वात्रिंशल्लक्षणानि। अन्यच्च यथा,—"रागः सप्तसु किञ्च षट्स्वपि शिशोरङ्गेषूच्चं तुङ्गता विस्तारस्त्रिषु खर्वता त्रिषु तथा गम्भीरता च त्रिषु। दैर्घ्यं पञ्चसु किञ्च पञ्चसु सखे! संप्रेक्षते सूक्ष्मता द्वात्रिंशद्वरलक्षणः कथमसौ गोपेषु सम्भाव्यते ?" ॥ इति श्रीहरिभक्तिरसामृतसिन्धुः। "सप्तसु नेत्रान्तपादकरतलतालधरोष्ठजिह्वानखेषु। षट्सु वक्षःस्कन्धनखनासिकाकटिमुखेषु। त्रिषु कटिललाटवक्षःसु। केचित कटिस्थाने शिरः पठन्ति। त्रिष्वपि ग्रीवाजङ्घामेहनेषु। पुनस्त्रिषु नाभिस्वरसत्त्वेषु। पञ्चसु नासाभुजनेत्रहनुजानुषु। पुनः पञ्चसु त्वक्-केशरोमदन्ताङ्गुलिपर्वसु"। इति श्रीजीवगोस्वामिकृता दुर्गमसङ्गमनी नाम्नी टीका।

भगवत्याः सर्वमङ्गलायाः (ब) उपहारं करोषि, तदा राजा (भ) शतायुर्भविष्यति, अहञ्च सुचिरं सुखं निवसामि" इत्युक्त्वा अदृश्या अभवत्। ततो वीरवरेण स्वगृहं गत्वा (म) निद्राऽलसा स्ववधूः प्रबोधिता पुत्रश्च। तौ निद्रां परित्यज्य उत्थाय उपविष्टौ। वीरवरस्तत् सर्वं लक्ष्मीवचनमुक्तवान्। तच्छ्रुत्वा शक्तिधरः सानन्दं ब्रूते,—"धन्योऽहम् एवम्भूतः, स्वामिराज्यरक्षार्थं यस्य (य) उपयोगः। (र) तात! कोऽधुना विलम्बः? कदाऽपि तावदेवंविधे कर्मणि एतस्य देहस्य विनियोगः श्लाघ्यः। यतः,—

धनानि जीवितञ्चैव परार्थे प्राज्ञ उत्सृजेत्।
तन्निमित्तो वरं त्यागो विनाशे नियते सति" ॥ १०४ ॥

शक्तिधरस्य माता ब्रूते,—"अस्मत्कुलोचितं यद्येवं न कर्त्तव्यं तदा गृहीतराजवर्त्तनस्य (ल) निस्तारः कथं

---

(ब) उपहारं—बलिम्।

(भ) शतायुः,—वर्षशतपरमायुः, दीर्घजीवी इत्यर्थः।

(म) निद्राऽलसा—निद्रया अवशीभूताङ्गी। स्ववधूः,—निजभार्य्या। प्रबोधिता—जागरिता।

(य) उपयोगः,—कार्य्यकारिता।

(र) तात!—पितः! ("तातोऽनुकम्प्ये जनके" इति मेदिनी)।

(१०४) परार्थे देहत्यागस्य श्लाघ्यतां समर्थयन्नाह, धनानीति।—प्राज्ञः पण्डितः, [प्रजानातीति प्रज्ञः "आतश्चोपसर्गे" (३।१।१३६ पा०) इति कर्त्तरि क-प्रत्ययः। ततः "प्रज्ञादिभ्यश्च" (५।४।३८ पा०) इति स्वार्थे अण्-प्रत्ययः] धनानि अर्थान्, जीवितञ्च प्राणांश्च, परार्थे अन्यनिमित्तमेव, उत्सृजेत् त्यजेत्, वितरेदित्यर्थः, विनाशे मरणे, नियते निश्चये सति, तन्निमित्तः परार्थः, (अत्र "सन्निमित्ते" इति पाठे—सतां साधूनां निमित्ते, तेषाम् उपकारार्थमित्यर्थः) त्यागः वितरणं, वरं श्रेयान्। [वरमित्यत्र विधेयप्राधान्यात् क्लीबत्वम्]। यदि अवश्यमायमेव मरणं लगति, तदा लोकानामुपकारायैव मरणं श्लाघ्यं कर्त्तव्यञ्च इत्यर्थः।

(ल) निस्तारः,—परिमोक्षः इत्यर्थः।

भविष्यति ?"। इत्यालोच्य सर्वे (व) सर्वमङ्गलायतनं गताः। तत्र सर्वमङ्गलां सम्पूज्य वीरवरो ब्रूते,—"देवि! प्रसीद, विजयतां शूद्रको महाराजः, गृह्यताम् अयम् उपहारः" इत्युक्त्वा पुत्रस्य शिरश्चिच्छेद। ततो वीरवरश्चिन्तयामास,— "गृहीतराजवर्त्तनस्य निस्तारः कृतः, अधुना निष्पुत्रस्य मे जीवनं (श) विड़म्बनम्" इति आलोच्याऽऽत्मनः शिरश्चिच्छेद। ततः स्त्रियाऽपि स्वामिपुत्रशोकार्त्तया (ष) तदनुष्ठितम्। एतत् सर्वं श्रुत्वा दृष्ट्वा च शूद्रकः साश्चर्यं चिन्तयामास,—

"जायन्ते च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः।
अनेन सदृशो लोके न भूतो न भविष्यति ॥ १०५ ॥

तत् (स) एतत्परित्यक्तेन मम राज्येनापि किं प्रयोजनम्?"। ततः स्वशिरश्छेत्तुम् (ह) उल्लसितः खड्गः शूद्रकेणापि। अथ भगवत्या सर्वमङ्गलया प्रत्यक्षभूतया राजा करे

(व) सर्वमङ्गलाऽऽयतनं—सर्वमङ्गलायाः आयतनं चैत्यं, मन्दिरमित्यर्थः।

(श) विड़म्बनं—विफलमित्यर्थः।

(ष) तदनुष्ठितम्—आत्मनः शिरश्छेदेत्यर्थः।

(१०५) जायन्ते इति।—मद्विधाः ममेव विधा प्रकारः येषां ते मादृशाः इत्यर्थः, क्षुद्रजन्तवः लघुचित्ताः प्राणिनः, जायन्ते उत्पद्यन्ते, ("जीवन्ति" इति पाठान्तरम्) म्रियन्ते च मृत्युं प्राप्नुवन्ति च, परन्तु अनेन वीरवरेण, सदृशः तुल्यः, एतत्सदृश उदारचेता जनः इत्यर्थः, लोके जगति, न भूतः न जातः, न भविष्यति न उत्पत्स्यते; अनन्यसाधारणोऽयं जन इति भावः। (नागानन्दे अस्यानुरूपश्लोकी दृश्यते यथा,—"जायन्ते च म्रियन्ते च मादृशाः क्षुद्रजन्तवः। परार्थबद्धकक्षाणां त्वादृशामुद्भवः कुतः?" ॥ इति)।

(स) एतत्परित्यक्तेन—ईदृशमहापुरुषशून्येन।

(ह) उल्लसित.,—उत्तोलितः इत्यथः। ("समुत्थापितः" इति पाठान्तरः धृतः। "उल्लसितः" इत्यत्र "उल्लालितः" इति पाठकल्पना साध्वी, उल्लालितः उत्तोलितः इत्यर्थः।

धृतः, उक्तश्च,—"पुत्र ! प्रसन्नाऽस्मि ते, अलमलं (क) साहसेन, इदानीं ते राज्यभङ्गो नास्ति"। राजा साष्टाङ्गं प्रणम्य उवाच,—"देवि ! न मे राज्येन जीवितेन (ख) श्रिया वा प्रयोजनमस्ति। यदि मयि (ग) अनुकम्पा क्रियते, तदा मम (घ) आयुःशेषेणापि अयं सदारपुत्रो राजपुत्रो जीवतु। अन्यथा अहं (ङ) यथाप्राप्तां गतिं गच्छामि"। भगवती उवाच,—"पुत्र! अनेन ते (च) सत्त्वोत्कर्षेण भृत्यवात्सल्येन च सर्वथा सन्तुष्टाऽस्मि, गच्छ, विजयी भव। अयमपि सपरिवारो राजपुत्रो जीवतु" इत्युक्त्वा देवी अदृश्याऽभवत्। ततो वीरवरः सपुत्रदारः प्राप्तजीवनः स्वगृहं गतः। राजाऽपि तैः (छ) अलक्षितः सत्वरं प्रासादपृष्ठं गत्वा तथैव (ज) सुप्तः। अथ वीरवरो द्वारस्थः पुनर्भूपालेन पृष्टः सन्नुवाच,—"देव ! सा रुदती स्त्री मामवलोक्य अदृश्या अभवत्। न काऽपि अन्या वार्त्ता विद्यते"। तद्वचनमाकर्ण्य सन्तुष्टो राजा साश्चर्यं चिन्तयामास,—(झ) "कथमयं श्लाघतां महासत्त्वः ? यतः,—

(क) साहसेन—दण्डेन, आत्मनाशेनेत्यर्थः, दुष्करकर्म्मणा वा, अविमृश्यकारितया वा। ("साहसन्तु दमे दुष्करकर्म्मणि अविमृश्यकृतौ धार्ष्ट्ये" इति हैम॰।)

(ख) श्रिया—सम्पदा।

(ग) अनुकम्पा—दया, अनुग्रहः इति यावत्।

(घ) आयुःशेषेणापि—मदीयावशिष्टजीवितकालेनापि।

(ङ) यथाप्राप्तां—यथाव्यवसितां, शिरश्छेदनरूपाम् अवलम्बिताम् इत्यर्थः। गतिं—दशाम्।

(च) सत्त्वोत्कर्षेण—चित्तस्य प्राशस्त्येन, सत्त्वगुणप्राधान्येनेत्यर्थो वा, धैर्यातिशय्येन इति यावत्। भृत्यवात्सल्येन—अनुजीविनां प्रति स्नेहेन।

(छ) अलक्षितः,—अदृष्टः, प्रच्छन्न इत्यर्थः।

(ज) सुप्तः,—शयितः, ("स्वापः शयनाज्ञतिदृशोः" इति मेदिनी)।

(झ) कथमयं श्लाघतां महासत्त्वः,—महासत्त्वः उन्नतमनाः, मनस्वी

प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः।
दाता सत्पात्रवर्षी स्यात् प्रगल्भः स्यादनिष्ठुरः॥ १०६॥

एतत् (ञ) महापुरुषलक्षणम् एतस्मिन् सर्वमस्ति"। ततः स राजा प्रातः (ट) शिष्टसभां कृत्वा सर्ववृत्तान्तं (ठ) प्रस्तुत्य प्रसादात् तस्मै कर्णाटराज्यं ददौ।

[इति शूद्रकनृपति-वीरवरनामकराजपुत्रकथा]।

तत् किमागन्तुरेव (ड) विरुद्धः? तत्रापि उत्तमाधममध्यमाः सम्भवन्ति"। चक्रवाको ब्रूते,—

---

महाबलो वा, अयं वीरवरः, कथं केन प्रकारेण, श्लाघताम्? आत्मगुणमाविष्करोतु? स्वमुखेन आत्मप्रशंसां करोतु इत्यर्थः; नैतादृशं सद्विगर्हितं कर्म्म उदारचेतसि अस्मिन् कथमपि सम्भवतीति भावः।

(१०६) भारतशान्तिपर्वीयराजधर्म्मव्याख्यानप्रकरणोक्तं श्लोकमुपजीव्य महासत्त्वानामनात्मश्लाघित्वं प्रदर्शयति, प्रियमिति।—अकृपणः दैन्यहीनः, अकातरः सन् इत्यर्थः, प्रियं मधुरं, ब्रूयात् कथयेत्; प्रियं वक्तुं कार्पण्यं न कार्य्यम् इति भावः; शूरः विक्रान्तः, अविकत्थनः आत्मश्लाघारहितः, स्यात् भवेत्, दाता दानशीलः सन्, सत्पात्रे गुणशालिनि जने, दानयोग्ये जने इति यावत्, वर्षतीति वर्षी, स्यात्, सत्पात्रे एव प्रचुरं दद्यादित्यर्थः, प्रगल्भः साहसी सन् इत्यर्थः, अनिष्ठुरः सदयः, स्यात् भवेत्; अयन्तु एवं सर्वलक्षणोपेतः महापुरुष इति भावः यद्वा,—अकृपणः अक्षुद्रः, उदारमना इत्यर्थः, जन इति शेषः, प्रियं मधुरं, ब्रूयात् कथयेत्, अकृपण एव प्रियं वक्तुं शक्नुयात् न कृपण इति भावः; शूरः वीरः, अविकत्थनः आत्मश्लाघाविवर्जितः, स्यात्, शूरः कदाऽपि आत्मश्लाघां न करोति इत्यर्थः, दाता वदान्यः, सत्पात्रवर्षी स्यात्, दाता सत्पात्रे एव दद्यात्, नासत्पात्रे इत्यर्थः, प्रगल्भः प्रतिभासम्पन्नः, अनिष्ठुरः निर्दयताविवर्जितः, स्यात्। ("दाता सत्पात्रवर्षी स्यात्" इत्यत्र "दाता नापात्रवर्षी स्यात्" इति महाभारतीयपाठः)।

(ञ) महापुरुषलक्षणम्—पुरुषश्रेष्ठचिह्नम्।

(ट) शिष्टसभा—प्रश्लिष्टसमाजम्।

(ठ) प्रस्तुत्य—कीर्त्तयित्वा। प्रसादात्—अनुग्रहात्, प्रसन्नताहेतोरित्यर्थः, प्रसन्नः सन् इति यावत्।

(ड) विरुद्धः,—अपकारी। तत्रापि—आगन्तुकेष्वपि।

"योऽकार्य्यं कार्य्यवच्छास्ति स किंमन्त्री नृपेच्छया।
वरं स्वामिमनोदुःखं तन्नाशो न त्वकार्य्यतः ॥ १०७ ॥
वैद्यो गुरुश्च मन्त्री च यस्य राज्ञः प्रियंवदः।
शरीरधर्मकोषेभ्यः क्षिप्रं स परिहीयते ॥ १०८ ॥

शृणु देव!—

पुण्याल्लब्धं यदेकेन तन्ममापि भविष्यति।
हत्वा भिक्षुं यतो मोहान्निध्यर्थी नापितो हतः" ॥१०९॥

राजा पृच्छति,—"कथमेतत्?"। मन्त्री कथयति,—

---

(१०७) दुष्टामात्यलक्षणं सदमात्यकर्त्तव्यञ्चाह, यः इति।—यः मन्त्री, नृपेच्छया राजाभिप्रायानुसारेण, राज्ञः चित्ततोषणार्थेत्यर्थः, अकार्य्यम् अकर्त्तव्यं, कर्त्तुमयोग्यमित्यर्थः, कार्य्यवत् कर्त्तव्यमिव, कर्त्तुं योग्यमिव इत्यर्थः, शास्ति उपदिशति, स किंमन्त्री स निन्दनीयः सचिवः, स्वामिनः राज्ञः, मनोदुःखम् अभिप्रायानुसारेण कार्य्याकरणात् चित्तक्षोभः, अपीति शेषः, वरं श्रेयः, तु किन्तु, अकार्य्यतः अनुचितानुष्ठानात्, स्वामिनं तोषयितुं तदकार्य्यानुमोदनादित्यर्थः, तन्नाशः तस्य स्वामिनः, नाशः ध्वंसः, न, वरमिति पूर्वेणान्वयः, न श्रेयान्, न युक्तियुक्त इति यावत्, अत भवतां मनोऽनुकूलं भवतु न वा, मया तु अवश्यमेव हितं वक्तव्यम् इति भावः।

(१०८) अमात्यादौ चाटुवादपरे राज्ञः अनिष्टं प्रदर्शयति, वैद्य इति।—वैद्यः चिकित्सकः, गुरुः धर्मोपदेशकः, मन्त्री सचिवश्च, यस्य राज्ञः नृपतेः, प्रियंवदः अनुकूलभाषणपरः, अकर्त्तव्येऽपि विषये प्रभुचित्तविनोदनार्थं तदनुमोदक इत्यर्थः, भवेदिति शेषः, स राजा, शरीरधर्मकोषेभ्यः कायधर्मधनेभ्यः, [अपादाने पञ्चमी] क्षिप्रम् आश्वेव, परिहीयते भ्रश्यते, तस्य वैद्ये चाटुभाषिणि शरीरनाशः, धर्मोपदेशके गुरौ तथाभूते धर्म्मनाशः, सचिवे च तथा सति सर्वधननाशश्च इति क्रमेण अवश्यम्भावि इत्यर्थः। [कर्मकर्त्तरि प्रयोगः]।

(१०९) नीतिविरुद्धस्य एकत्र कुत्रापि अव्यापत्कारितादर्शनेन सर्वत्र तथाविधत्वसम्भावना न श्रेयोमूला इति दृष्टान्तद्वारा समर्थयते, पुण्यादिति।—यत् वस्तु, एकेन जनेन, पुण्यात् पुण्यबलात्, तपश्चरणादिनेति यावत्, लब्धं प्राप्तं, तत् वस्तु, मम अकृतपुण्यस्यापीत्यर्थः, भविष्यति लब्धं भविष्यति, किम्? इति शेषः, नैव भाविष्यतीत्यर्थः, अत ईदृशी चिन्ता नैव विधेया इति भावः; कुतो न

नापित-भिक्षुककथा ।—

"अस्ति अयोध्यायां पुरि चूडामणिर्नाम क्षत्रियः । तेन धनार्थिना महता क्लेशेन भगवान् (ढ) चन्द्रार्द्धचूडामणिः चिरमाराधितः । (ण) ततः क्षीणपापोऽसौ स्वप्ने दर्शनं दत्त्वा (त) भगवदादेशात् (थ) यक्षेश्वरेण आदिष्टः,—"त्वमद्य प्रातरेव क्षौरं कारयित्वा लगुडहस्तः सन् स्वगृहद्वारि (द) निभृतं स्थास्यसि । ततो यमेवागतं भिक्षुकं (ध) प्राङ्गणे पश्यसि, तं (न) निर्दयं लगुड़प्रहारेण हनिष्यसि । ततोऽसौ भिक्षुकस्तत्क्षणात् सुवर्णकलसो भविष्यति । तेन त्वं यावज्जीवं सुखी भविष्यसि" । ततः तथा अनुष्ठिते सति तत् वृत्तम् । ततः क्षौरकरणाय आनीतेन नापितेन तत्सर्वमालोक्य चिन्तितम्,—"अहो ! (प) निधिप्राप्तेरयमुपायः, तदहमपि एवं किं न करोमि ?" । ततः प्रभृति स नापितः प्रतिदिनं तथाविधलगुड़हस्तः सुनिभृतं भिक्षुकागमनमपेक्षते । एकदा तेन तथा प्राप्तो भिक्षुको लगुड़ेन आहत्य व्यापादितः । तेन अपराधेन सोऽपि

---

विधेया इति वक्तुं दृष्टान्तमाह, यतः मोहात् लोभान्धतया अज्ञानादित्यर्थः, निध्यर्थी धनाकाङ्क्षी, नापितः कश्चित् चौरकारः, भिक्षुं कञ्चित् भिक्षुकं, हत्वा विनाश्य, हतः हतः, राजपुरुषैर्व्यापादितः इत्यर्थः ।

(ढ) चन्द्रार्द्धचूड़ामणिः,—चन्द्रस्य अर्द्धः चन्द्रार्द्धः सः चूड़ामणिः शिरोभूषणं यस्य सः, चन्द्रशेखरः इत्यर्थः । आराधितः,—उपासितः ।

(ण) ततः,—भगवदाराधनातः । क्षीणपापः,—पापमुक्तः ।

(त) भगवदादेशात्—भगवतः महादेवस्य, आदेशात् अनुज्ञातः ।

(थ) यक्षेश्वरेण—कुवेरेण । आदिष्टः,—आज्ञप्तः ।

(द) निभृतं—प्रच्छन्नं यथा तथा, तूष्णीमित्यर्थः ।

(ध) प्राङ्गणे—चत्वरे ।

(न) निर्दयं—निष्ठुरम् ।

(प) निधिप्राप्तेः,—धनलाभस्य ।

नापितो राजपुरुषैस्ताडितः पञ्चत्वं गतः। अतोऽहं ब्रवीमि,—'पुण्याल्लब्धं यदेकेन' इत्यादि"।

[इति नापित-भिक्षुककथा]।

राजाऽऽह,—

"पुरावृत्तकथोद्गारैः कथं निर्णीयते परः ?।
किं स्यान्निष्कारणो बन्धुः किं वा विश्वासघातकः ॥११०॥

यातु यातु. (फ) प्रस्तुतमनुष्ठीयताम्। (ब) मलयाधित्यकायां (भ) समावासितो वर्त्तते चित्रवर्णो नाम राजा। तदधुना किं (म) विधेयम् ?"। मन्त्री वदति,—"देव! (य) आगतप्रणिधिमुखात् श्रुतं यन्महामन्त्रिणो गृध्रस्य उपदेशे चित्रवर्णेन अनादरः कृतः; अतोऽसौ मूढो जेतुं शक्यः। तथा चोक्तम्,—

(११०) आगन्तुकस्य विश्वस्तत्वाविश्वस्तत्वनिर्णये पुरावृत्तप्रसङ्गः न प्रमाणमित्याह, पुरेति।—पुरावृत्तस्य इतिहासस्य, कथायाः प्रबन्धस्य, उद्गारैः उद्गीरणैः, उद्गारै-रित्यर्थः, ऐतिहासिकप्रसङ्गोत्कीर्त्तनैरिति यावत्, परः नवागतः, किं निष्कारणो बन्धुः अकृत्रिमनित्रं, किं विश्वासघातकः विश्वासहन्ता, वा स्यात् भवेत्, ("किं स्यान्नि-ष्कारणो बन्धुः" इत्यत्र "स्यान्निष्कारणबन्धुर्वा" इति पाठान्तरम्) इति कथं केन प्रकारेण, निर्णीयते ? अवधार्यते ? इतिहासकथानुशीलनेन न कथमपि अयं शत्रुर्मित्रं वा इति निर्णेतुं शक्यते इत्यर्थः, एतदर्थं तव ऐतिहासिकप्रसङ्गोत्कीर्त्तनं निरर्थक-मिति भावः।

(फ) प्रस्तुतम्—उपस्थितम्। अनुष्ठीयताम्—विधीयतां, यथाकर्त्तव्यं स्थिरी-क्रियतामित्यर्थः।

(ब) मलयाधित्यकायां—मलयपर्वतस्योपरि, ("उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्व-मधित्यका" इत्यमरः)। ["उपाधिभ्यां त्यकन् आसन्नारूढयोः" (५।२।३४ पा०) इति त्यकन्]।

(भ) समावासितः,—संस्थापितावासः, कृतशिविरसन्निवेशः इत्यर्थः।

(म) विधेयं—कर्त्तव्यम्।

(य) आगतप्रणिधिमुखात्—उपस्थितचारमुखात्।

लुब्धः क्रूरोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः ।
मूढो योधावमन्ता च सुखोच्छेद्यो रिपुः स्मृतः ॥१११॥

ततोऽसौ यावदस्मद्दुर्गावरोधं न विदधाति, तावत् नद्यद्रिवनवर्त्मसु तद्बलानि हन्तुं सारसादयो नियुज्यन्तां सेनापतयः ।

तथा चोक्तम्,—

दीर्घवर्त्मपरिश्रान्तं नद्यद्रिवनसङ्कुलम् ।
घोराग्निभयसन्त्रस्तं क्षुत्पिपासार्दितं तथा ॥११२॥
प्रमत्तं भोजनव्यग्रं व्याधिदुर्भिक्षपीड़ितम् ।
असंस्थितमभूयिष्ठं वृष्टिवातसमाकुलम् ॥ ११३ ॥

---

(१११) कामन्दकीयाष्टमसर्गोक्तं श्लोकं प्रमाणीकृत्य योधावमन्तॄणां शत्रूणां सुजेयत्वमाह, लुब्ध इति ।—लुब्धः लोभपरवशः, अत एव अदातृत्वात् अनाश्रयणीय इति भावः ; क्रूरः कपटी, अत एव सतामनभिगमनीय इति भावः ; अलसः आलस्यपरः, चिरक्रियः इत्यर्थः, स्वयमेव अवसादयस्त इति भावः ; ("अवशः" इति पाठे—अजितेन्द्रियः, अजितेन्द्रियस्य रिपुभूयस्त्वादिति भावः ) असत्यः मिथ्यावादी, अतः यथाप्रतिज्ञाताकरणात् मण्डलैर्नैवापेक्षणीय इति भावः ; प्रमादी अनवहितः, आत्मरक्षणनिश्चेष्ट इति भावः ; भीरुः भयशीलः, दूरादेव पलायनपर इति भावः ; अस्थिरः अव्यवस्थितचित्तः, निःसहायत्वादाक्रमणमात्रसाध्य इति भावः ; मूढः मन्दबुद्धिः, हिताहितविवेकशून्यः इत्यर्थः, अज्ञानबाहुल्यादवसन्न इति यावत्, योधावमन्ता सैनिकावज्ञाता च, स्वयोधैरेव परित्यज्यमानत्वादिति भावः ; रिपुः शत्रुः, सुखोच्छेद्यः अनायासेन उन्मूलयितुं शक्यः, स्मृतः कथितः, विद्वद्भिः इति शेषः ।

(११२) कामन्दकनीतेरेकोनविंशसर्गोक्तश्लोकानवलम्ब्य विशिष्यकैण शत्रुनिर्यातनप्रकारं दर्शयति, दीर्घेति ।—महीपालः एवम्भूतं परसैन्यं विघातयेदिति तृतीयश्लोकेनान्वयः । कीदृशं तत् ?—दीर्घेण प्रकृष्टेन, वर्त्मना मार्गेण, पथिगमनेनेत्यर्थः, परिश्रान्तं क्लान्तं, नद्यद्रिवनसङ्कुलं नदी सरित्, अद्रिः पर्वतः, वनम् अरण्यं, तैः सङ्कुलं क्लिष्टं, तैः रुद्धगतिं इत्यर्थः, घोराग्निभयसन्त्रस्तं भीषणवह्निभयव्याकुलं, तथा किञ्च, क्षुधा बुभुक्षया, पिपासया तृष्णया च, अर्दितं पीड़ितं, क्षुधार्त्तं तृषार्त्तञ्च इत्यर्थः ।

(११३) प्रमत्तमिति ।—पुनः किम्भूतम् ?—प्रमत्तं मद्यपानादिना विगतचेतनं, भोजनव्यग्रम् आहारासक्तं, व्याधिः रोगः, दुर्भिक्षम् अन्नाभावः, ताभ्यां

पङ्कपांशुजलाच्छन्नं सुव्यस्तं दस्युविद्रुतम् ।
एवम्भूतं महीपालः परसैन्यं विघातयेत् ॥११४॥

अन्यच्च,—अवस्कन्दभयाद्राजा प्रजागरकृशं तथा ।
दिवासुप्तं सदा हन्यान्निद्राव्याकुलसैनिकम् ॥११५॥

अतस्तस्य (र) प्रमादिनो बलं गत्वा (ल) यथाऽवकाशं दिवानिशं निघ्नन्त्वस्मत्सेनापतयः"। तथाऽनुष्ठिते चित्रवर्णस्य सैनिकाः सेनापतयश्च बहवः निहताः। ततश्चित्रवर्णो विषण्णः स्वमन्त्रिणं दूरदर्शिनमाह,—"तात! (व) किमिति त्वया

---

पीड़ितं क्लिष्टम्, असंस्थितम् अनिविष्टम्, इतस्ततो विक्षिप्तमिति यावत्, अनाशनम् इत्यर्थौ वा, भूयिष्ठम् अतिशयेन बहु न भवतीति अभूयिष्ठम् अल्पसङ्ख्यकम्, [ अतिशयेन बहु इति बहु+"अतिशायने तमबिष्ठनौ" (५।३।५५ पा०) इति इष्ठनि कृते "बहोर्लोपो भू च बहोः" (६।४।१५८ पा०) इति बहोः स्थाने भूरादेशे "इष्ठस्य यिट् च" (६।४।१५९ पा०) इति इष्ठस्य इकारलोपः यिडागमश्च] वृष्ट्या वर्षेण, वातेन प्रचण्डवायुना, समाकुलम् अतीव कातरम्।

(११४) पङ्केति।—पुनः किम्भूतम्?—पङ्कः कर्दमः, पांशवः रजांसि, जलं वारि, तैः आच्छन्नं व्याप्तं, पङ्कादिपूर्णमार्गे पर्यटनात् खिन्नमित्यर्थः, सुव्यस्तम् इतस्ततो विक्षिप्तं, विपदि पतितत्वा तदुद्धारार्थं व्याकुलचित्तमिति वा, दस्युविद्रुतं तस्कराद्युपद्रुतं, महीपालः राजा, एवम्भूतम् ईदृशं, परसैन्यं शत्रुबलं, विघातयेत् नाशयेत्, सर्वथा उपद्रुतानि एव पराभवेदित्यर्थः; अतः दीर्घवर्त्मभ्रमणपरिश्रान्तत्वात् नद्यद्रिवनसङ्कुलत्वाच्च अवसरोऽयमस्माकं तानि निहन्तुमिति भावः।

(११५) कामन्दकीयैकोनविंशतिसर्गोक्तश्लोकमुपजीव्य शत्रुनिर्घातने प्रकारान्तरमाह, अवस्कन्देति।—राजा नरपतिः, अवस्कन्दभयात् आक्रमणशङ्कया, नैशान्धकारे सुगुप्तमाक्रान्तिभयादिति भावः, प्रजागरकृशं रात्रिजागरणक्लान्तम्, अत एव दिवा दिवसे, सुप्तं निद्रितं, तथा निद्राव्याकुलसैनिकं निद्राभिभूतसैन्यं, सदा नित्यकालं, हन्यात् व्यापादयेत्।

(र) प्रमादिनः,—अनवहितस्य, अमात्यवाक्ये अदत्तावधानस्येत्यर्थः।

(ल) यथाऽवकाशम्—अवसरक्रमेण।

(व) किमिति—कथम्।

(ग्र) अस्मदुपेक्षा क्रियते ? किं वा क्वापि अस्माकम् (घ) अविनयोऽस्ति ?। तथा चोक्तम्,—

न राज्यं प्राप्तमित्येव वर्त्तितव्यमसाम्प्रतम्।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥११६॥

अपरञ्च,—दक्षः श्रियमधिगच्छति पथ्याशी कल्यतां सुखमरोगी।
उद्योगी विद्याऽन्तं धर्मार्थयशांसि च विनीतः" ॥११७॥

गृध्रोऽवदत्,—"देव ! श्रूयताम्,—

अविद्वानपि भूपालो विद्यावृद्धोपसेवया।
परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥११८॥

(ग्र) अस्मदुपेक्षा—अस्मान् प्रति औदासीन्यम्।

(घ) अविनयः,—औद्धत्यम्, अविनीतभावः इत्यर्थः।

(११६) भारतीदुर्योगपर्वीयवचनं प्रमाणीकृत्य अविनयस्य दोषमाह, नेति।—राज्यं राष्ट्रं, प्राप्तं लब्धम्, अधिगतमिति यावत्, इति, मत्वेति शेषः, असाम्प्रतम् अयुक्तम्, अनुचितं यथा तथा इत्यर्थः, ("युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः) नैव वर्त्तितव्यम् अवस्थातव्यम्, आचरितव्यमित्यर्थः, नोद्धतं व्यवहर्त्तव्यमिति यावत्, कुतः ? इत्याह,—हि यतः, जरा वार्द्धकम्, उत्तमम् उत्कृष्टं, रूपमिव सौन्दर्य्यमिव, अविनयः औद्धत्यं, श्रियं सम्पदं, हन्ति नाशयति, अविनयी सम्पदो भ्रश्यते इति भावः।

(११७) विनीतस्तु सुखमाप्नोतीति दर्शयति, दक्ष इति।—दक्षः कार्य्यकुशलः जनः, श्रियं सम्पदं, पथ्यं हितं, हितभोज्यमित्यर्थः, अश्नातीति पथ्याशी हितभोजी, कल्यतां नीरोगत्वं, ("कल्यो नीरोगदक्षयोः" इति शाश्वतः), अरोगी रोगहीनः, सुखं मनःप्रसादम्, उद्योगी उद्यमवान्, विद्याऽन्तं सर्वशास्त्रपारं, विनीतश्च विनयसम्पन्नश्च, धर्मः सदनुष्ठानजनितं पुण्यम्, अर्थः धनं, यशः कीर्त्तिः तानि, अधिगच्छति लभते, विनयी तु धार्म्मिकः धनवान् यशस्वी च भवतीत्यर्थः।

(११८) विद्वत्संसर्गस्य गुणमाह, अविद्वानिति।—भूपालः राजा, अविद्वान् शास्त्रज्ञानविहीनोऽपि, विद्यया ज्ञानेन, वृद्धाः श्रेष्ठाः, विद्वद्वरेण्या इत्यर्थः, तेषाम् उपसेवया परिचर्य्यया, विदुषां सङ्गं लब्ध्वा इत्यर्थः, जलासन्नतरुः यथा जलाशयसन्निहितः वृक्षः इव, पराम् उत्तमां, श्रियं सम्पदम्, अवाप्नोति लभते, जलसमीपस्थः वृक्षः यथा

अन्यच,—पानं स्त्री मृगया द्यूतमर्थदूषणमेव च ।
वाग्दण्डयोश्च पारुष्यं व्यसनानि महीभुजाम् ॥ ११९ ॥

किञ्च,— न साहसैकान्तरसानुवर्त्तिना
न चाप्युपायोपहतान्तरात्मना ।
विभूतयः शक्यमवाप्तुमूर्जिता
नये च शौर्य्ये च वसन्ति सम्पदः ॥१२० ॥

---

आसन्नजलाशयस्थं जलमाकृष्य प्रवर्द्धमानः सन् शोभां दधाति, तथा मूर्खोऽपि नृपतिः ज्ञानवृद्धपरिचरणपरः इति समुदितार्थः ; भवता खलु न तथा कृतमित्य-निष्टमापतितमिति भावः ।

(११९) मन्वादिनीतिशास्त्रप्रदर्शितं राज्ञां विपत्तिनिमित्तं दर्शयति, पानमिति ।—पानं मद्यसेवनं, स्त्री अत्यर्थं स्त्र्यासक्तिः, परदारादिकं वा, मृगया आखेटः, पश्वादिहननमित्यर्थः, मृगयायामत्यासक्तिरिति यावत्, द्यूतम् अक्षक्रीड़ादि, अर्थदूषणञ्च अन्यायतः प्रजाभ्यः अर्थग्रहणं न्यायतो देयस्य अदानञ्च, अपरिमित-व्ययिता वा, वाक् च दण्डश्च तयोः वाग्दण्डयोः पारुष्यञ्च कर्कशता च, स्वल्पेऽपराधे अपराधाभावे वा कठोरवाक्यप्रयोगः कठोरदण्डप्रयोगश्चेत्यर्थः, एतानि सर्वाणि महीभुजां राज्ञां, व्यसनानि कामजकोपजदोषाः, विपत्कारणानि इत्यर्थः ; ("व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः), एवकारो निश्चये ; एतैरेव राजा राज्यभ्रष्टो भवति इति भावः ।

(१२०) नीतिपूर्वकशौर्य्यप्रदर्शनस्य सम्पत्तिजनकत्वमाह, नेति ।—साहसं दोषगुणावविचार्य्य सहसा कार्य्योद्योगः एव, एकान्तः मुख्यः, रसः भावानुबन्धः, तम् अनुवर्त्तते यः स तेन, यद्वा,—साहसे बलात्कारकृतकर्म्मणि एव, शौर्य्यप्रदर्शने एव इत्यर्थः, एकान्तः दृढ़ः, रसः अनुरागः, तम् अनुवर्त्तते अनुगच्छति, आश्रयतीत्यर्थः, यः स तेन, नीतिवर्जितशौर्य्यप्रदर्शनपरेणेत्यर्थः, न, उपायेन साधनेन, नीतिशास्त्रोक्त-सामादिरूपेणेत्यर्थः, उपहतः आक्रान्तः, अन्तरात्मा अन्तःकरणं, मनः इत्यर्थः, यस्य सः तेन अपि, ऊर्जिताः महत्यः, विभूतयः ऐश्वर्य्याणि, अवाप्तुं प्राप्तुं, न च तैव, शक्यं क्षमा इत्यर्थः, तथा हि नये च नीतौ च, शौर्य्ये च विक्रमे च, नीतिपूर्वके एव शौर्य्ये इत्यर्थः, सम्पदः सम्पत्तयः, वसन्ति तिष्ठन्ति । [ननु "शकिसहोश्च" (३।१।९९ पा०) इति सूत्रेण कर्म्मणि शकि कृते "शक्याः शक्यम्" इति रूपम् ;

त्वया स्वबलोत्साहमवलोक्य (म) साहसैकरसिकेन मया (ह) उपन्यस्तेषु अपि मन्त्रेषु (क) अनवधानं वाक्पारुष्यञ्च कृतम्। अतो दुर्नीतेः (ख) फलमिदमनुभूयते। तथा चोक्तम्,—

दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः ?
सन्तापयन्ति कमपथ्यभुजं न रोगाः ?।
कं श्रीर्न दर्पयति ? कं न निहन्ति मृत्युः ?
कं स्त्रीकृता न विषयाः परितापयन्ति ? ॥१२१॥

तेन सह "विभूतयः" इति भिन्नलिङ्गवचनस्य सामानाधिकरण्यं कुतः ? इति चेत्; न, "अक्ष्यश्च अमांसादिभिरपि युत प्रतिहन्तुम्" (भा०) इति महाभाष्यवचनात् 'अक्षमिति रूपं कर्म्माभिधायां विलिङ्गवचनस्यापि सामान्योपक्रमात्" (काव्या० सू० वृ० ५अ० २अ० २३ सू०) इति काशिकायां वामनवचनाच्च सिद्धम् इति दिक्] गुणसम्पन्नस्य शूरस्य च भोग्या एव सम्पद इत्यर्थः। वंशस्थविलं वृत्तम्।

(म) साहसैकरसिकेन—साहसमात्रावलम्बिना, न तु नीतिमार्गानुरागिणेति भावः।

(ह) उपन्यस्तेषु—वक्तुमुपक्रान्तेषु, कीर्त्तितेषु इत्यर्थः।

(क) अनवधानम्—अनादरः। वाक्पारुष्यं—कठोरवाक्यप्रयोगः, वाक्यापरोषणं इत्यर्थः।

(ख) फलं—सैन्यनाशरूपः परिणामः।

(१२१) मन्त्रिशक्तिम् अगणयतः दोषमाह, दुर्मन्त्रिणमिति।—नीतिदोषाः नीत्यवमाननाजन्याः अपराधाः, कं दुर्मन्त्रिणं दुष्टामात्यं दुष्टमन्त्रप्रयोगशीलं वा, सुमन्त्रणापरिहन्तारमित्यर्थः, न उपयान्ति ? न आश्रयन्ति ? अपि तु सर्वमेव दुष्टमन्त्रप्रयोगिणं सर्वे एव नीतिदोषाः सम्भवन्ति इत्यर्थः, रोगाः व्याधयः, अपथ्यभुजम् अहिताशिनं, कं जनं, न सन्तापयन्ति ? न क्लिश्नन्ति ? अपि तु सर्वमेवेत्यर्थः, श्रीः सम्पत्, कं जनं, न दर्पयति ? गर्वितं न करोति ? अपि तु सर्व एव ऐश्वर्य्येण मत्ता भवन्तीत्यर्थः, मृत्युः अन्तकः, कं न निहन्ति ? न विनाशयति ? को न मृत्युवशं गतः ? इति भावः; स्त्रीकृताः स्त्रीजनसम्पादिताः, स्त्रीष्ववस्थिता इत्यर्थः, विषयाः रूपादय इन्द्रियार्थाः, भोगासक्तय इति यावत्, कं जनं, न परितापयन्ति ? न क्षोभयन्ति ? रमणीरूपाद्युपभोगजमोहाः सर्वमेव क्लिश्नन्ति इत्यर्थः। वसन्ततिलकं वृत्तम्।

अपरञ्च,—मुदं विषादः शरदं हिमागमः
तमो विवस्वान् सुकृतं कृतघ्नता ।
प्रियोपपत्तिः शुचमापदं नयः
श्रियं समृद्धामपि हन्ति दुर्नयः ॥ १२२ ॥

ततो मयाऽपि आलोचितम्,—(ग) प्रज्ञाहीनोऽयं राजा, नो चेत् कथं (घ) नीतिशास्त्रकथाकौमुदीं (ङ) वागुल्काभिः (च) तिमिरयति ? यतः,—

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ?।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ? ॥१२३॥

---

(१२२) दुर्नीतिपरायणतया व्यापत्तिमाह. मुदमिति ।—विषादः मनोदुःखं, मुदं हर्षं, हिमागमः हिमर्तुः, शरदं शरत्कालं, शरदः शोभामित्यर्थः, विवस्वान् सूर्यः, तमः अन्धकारं, कृतघ्नता उपकारास्वीकारः, सुकृतं पुण्यं, प्रियोपपत्तिः इष्टलाभः, शुचं शोकं, नयः नीतिः, आपदं विपत्तिं, दुर्नयः दुर्नीतिः, समृद्धां विपुलामपि, श्रियं लक्ष्मीं, हन्ति नाशयति । वंशस्थविलं वृत्तम् ।

(ग) प्रज्ञाहीनः,—विवेकरहितः, मन्दमतिरित्यर्थः ।

(घ) नीतिशास्त्रकथाकौमुदीं—नीतिशास्त्रस्य अर्थशास्त्रस्य, कथा उपदेशवचनमेव, कौमुदी ज्योत्स्ना, कर्त्तव्यमार्गप्रदर्शकत्वात् अज्ञानतमोनिरासकत्वाच्च चन्द्रिकास्वरूपा इत्यर्थः, ताम् ।

(ङ) वागुल्काभिः,—वाचः वाक्यानि, सक्रोधभाषणानि इत्यर्थः, उल्का अग्निशिखाः इव ताभिः ।

(च) तिमिरयति—अन्धकारं करोति, आच्छादयति इत्यर्थः, दारुणा उल्का हि यथा स्वप्रभया चन्द्रप्रभां समभिभूय पतति, तथा तव क्रोधसन्तप्तः वाक्योघः अपि नीतिसारभूतं मदीयवाक्यजातं चन्द्रिकाविशदं समभिभूय प्रावर्त्तत तदानीमिति भावः ।

(१२३) मूर्खे नीत्युपदेशो विडम्बनमिति दर्शयितुं चाणक्यवचनमुपन्यस्यति, यस्येति ।—यस्य जनस्य, स्वयम् आत्मना, आत्मन इत्यर्थः, प्रज्ञा बुद्धिः, नास्ति, शास्त्रं शास्त्रोपदेश इत्यर्थः, तस्य जनस्य, किं करोति ? किं कर्त्तुं शक्नोति ? बुद्धिहीने शास्त्रोपदेशः विफल एव इति भावः ; लोचनाभ्यां नेत्रद्वयेन, विहीनस्य विरहितस्य

तेनाहमपि (क) तूष्णीं स्थितः"। अथ राजा (ज) बद्धाञ्जलिराह,—"तात! अस्त्ययं ममापराधः। इदानीं यथाऽहमवशिष्टबलसहितः प्रत्यावृत्य विन्ध्याचलं गच्छामि तथोपदिश"। गृध्रः (झ) स्वगतं चिन्तयति,—"कर्त्तव्याऽत्र प्रतीकारः। यतः,—

देवतासु गुरौ गोषु राजसु ब्राह्मणेषु च।
नियन्तव्यः सदा कोपो बालवृद्धाऽऽतुरेषु च" ॥ १२४ ॥

ब्रूते च विहस्य,—"देव! मा भैषीः, (ञ) समाश्वसिहि। शृणु देव!—

मन्त्रिणां भिन्नसन्धाने भिषजां सान्निपातिके।
कर्मणा व्यज्यते प्रज्ञा सुस्थे को वा न पण्डितः? ॥१२५॥

समक्षमित्यर्थः, दर्पणः मुकुरः, दर्पणदर्शनमिति भावः, किं करिष्यति? किमस्यस्य दर्पणेन? इत्यर्थः, अतो न मया किञ्चिदुपदेष्टव्यमिति भावः। उक्तञ्चान्यत्र,—"उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये" इति।

(क) तूष्णीं—मौनम्।

(ज) बद्धाञ्जलिः,—कृताञ्जलिः।

(झ) स्वगतम्—आत्मगतम्। प्रतीकारः,—प्रतिविधानम्।

(१२४) भारतीद्योगपर्वीयवचनमवलम्ब्य नृपादिकं प्रति क्रोधस्य उपसंहरणीयत्वमाह, देवतास्विति।—देवतासु इन्द्रादिदेवेषु, गुरौ पूजनीये जने, गोषु धेनुषु, राजसु नृपेषु, ब्राह्मणेषु विप्रेषु च, बालः शिशुः, वृद्धः स्थविरः, आतुरः रुग्णः तेषु च, सदा सर्वदा, कोपः क्रोधः, नियन्तव्यः उपसंहर्त्तव्यः, न कथमपि चिरं पोषयितव्य इति यावत्, अतोऽत्र कोपः परिहरणीय इति भावः। (अत्र प्रथमचरणे "दैवतेषु च यत्नेन" तथा "कोपः" इत्यत्र "क्रोधः" इति महाभारतीयपाठः)।

(ञ) समाश्वसिहि—आश्वस्तो भव। [सम+आ+श्वस+लोट् हि]।

(१२५) कार्यदर्शनेन बुद्धेः उत्कर्षापकर्षौ प्रकाशितौ भवतः इति दर्शयति, मन्त्रिणामिति।—भिन्नस्य भेदं गतस्य, प्रकृतिवर्गस्येति भावः, सन्धाने पुनःसंयोजने, उपजातप्रकृतीनां पुनर्मेलनसम्पादने इत्यर्थः, मन्त्रिणाम् अमात्यानां, तथा सान्निपातिके त्रिदोषप्रकोपजे वैषम्यजनिते विकारे, कष्टसाध्ये रोगविशेषे इति यावत्, भिषजां

अपरञ्च,—आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च।
महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ १२६ ॥

देव! ततो भवत्प्रतापादेव दुर्गं (ट) भङ्क्त्वा कीर्त्ति-प्रतापसहितं त्वामचिरेणैव कालेन विन्ध्याद्रिं नयामि"। राजाऽऽह,—"कथमधुना स्वल्पबलेन तत् सम्पद्यते?"। गृध्रो वदति,—"देव! सर्वं भविष्यति, यतः विजिगीषोः (ठ) अदीर्घसूत्रता (ड) विजयसिद्धेः अवश्यम्भावि लक्षणम्। तदद्य सहसैव दुर्गद्वारावरोधो विधीयताम्"।

---

चिकित्सकानां, कर्मणा क्रियया, तत्प्रतीकारार्थकर्मणः साधुत्वासाधुत्वदर्शनेनेत्यर्थः, प्रज्ञा बुद्धिः, प्रज्ञायाः साधुत्वमसाधुत्वं वा इत्यर्थः, व्यज्यते प्रकाश्यते, निर्णीयते इति यावत्, सुस्थे प्रकृतिस्थे, अनपेक्षितबुद्धिचातुर्य्ये विषये इत्यर्थः, को वा जनः, अमात्या-दीनां मध्ये इति शेषः, न पण्डितः? न विज्ञः, न पण्डितम्मन्यः इत्यर्थः, भवतीति शेषः, अपि तु सर्व एव इत्यर्थः, यो हि प्रज्ञाबलेन विपद उद्धर्त्तुं शक्नोति, स एव पण्डितः नान्य इति भावः।

(१२६) सङ्क्षेपतः मूर्खविदुषोर्लक्षणमाह, आरभन्ते इति।—अज्ञाः मन्द-मतयः, अल्पमेव तुच्छमेव, कार्य्यमिति शेषः, आरभन्ते उपक्रमन्ते, अल्पायाससाध्ये एव कार्य्ये प्रवर्त्तन्ते इत्यर्थः, परन्तु कामम् अत्यर्थं, व्यग्राः तत्साधनार्थं व्याकुलाश्च, भवन्ति जायन्ते, अधीरा भवन्तीत्यर्थः, कृतधियः बुद्धिमन्तो जनाः, महान् अधिकः आरम्भः कार्य्योद्योगः येषां ते तथोक्ताः, भवन्तीति शेषः, महत् कार्य्यं साधयितुं प्रवृत्ता भवन्तीत्यर्थः, परन्तु निराकुलाः अव्यग्राश्च, तिष्ठन्ति वर्त्तन्ते, न काचिदपि व्यग्रतां प्रकटयन्ति इत्यर्थः; निराकुलो भवान् तिष्ठतु, सर्वमेवाहं तं सम्पादयामीति भावः। श्लोकोऽयं शिशुपालवधस्य द्वितीयसर्गे दृश्यते।

(ट) भङ्क्त्वा—विशिय्य, विजित्य इत्यर्थः। कीर्त्तिप्रतापसहितं—यशसोऽधिकेन सह, अम्लानया कीर्त्त्या अखण्डेन प्रतापेन च सहेत्यर्थः।

(ठ) अदीर्घसूत्रता—दीर्घं चिरेण साध्यं, सूत्रम् आरब्धं कर्म यस्य, दीर्घं चिरकालसाध्यं, सूत्रं व्यवस्था यस्य इति वा, ("सूत्रं तन्तुव्यवस्थयोः" इति विश्वः) स न भवतीति अदीर्घसूत्रस्तस्य भावः, अचिरक्रियता, क्षिप्रकारिता इत्यर्थः। ("दीर्घसूत्रश्चिरक्रियः" इत्यमरः)।

(ड) विजयसिद्धेः,—जयलाभस्य।

अथ प्रणिधिना बकेनाऽऽगत्य हिरण्यगर्भस्य कथितम्,—"देव ! स्वल्पबल एवायं राजा चित्रवर्णो गृध्रस्य (ढ) वचनोपष्टम्भात् आगत्य दुर्गद्वारावरोधनं करिष्यति"। राजहंसो ब्रूते,—"भोः सर्वज्ञ ! किमधुना विधेयम् ?"। चक्रवाको वक्ति, "स्वबले (ण) सारासारविचारः क्रियताम्। तज्ज्ञात्वा सुवर्णवस्त्रादिकं (त) यथार्हं (थ) प्रसादप्रदानञ्च क्रियताम्। यतश्चोक्तम्,—

> यः काकिनीमप्यपथप्रपन्नां
> समुद्धरेन्निष्कसहस्रतुल्याम्।
> कालेषु कोटिष्वपि मुक्तहस्त-
> स्तं राजसिंहं न जहाति लक्ष्मीः॥ १२७॥

---

(ढ) वचनोपष्टम्भात्—वाक्यबलात्, उपदेशमनुसृत्य इत्यर्थः।

(ण) सारासारविचारः,—उत्कृष्टापकृष्टपरीक्षणम्।

(त) यथार्हं—यथायोग्यम्।

(थ) प्रसादप्रदानम्—अनुग्रहवितरणं, पुरस्कारार्पणम् इति यावत्।

(१२७) अवश्यकर्त्तव्यव्यये अकुण्ठितस्य अनपायसम्पद्भागित्वमाह, य इति।—यः, अपथप्रपन्नाम् असन्मार्गगताम्, अस्थानपतितामित्यर्थः, अकार्य्ये व्ययिता-मिति यावत्, काकिनीं कपर्दकमपि, पणचतुर्थांशमपि वा, (एक पयसा। "...ोदमानखण्डानां तुर्य्यांशेऽपि च काकिनी" इति रभसः। "वराटकानां ...कदशकत्रयं यत् सा काकिनी" इति लीलावती च। "काकिणी" इत्यपि भवति)। ...सहस्रतुल्यां निष्कं षोडशमाषकपरिमितसुवर्णानामष्टाधिकशतं, तेषां सहस्र-...म् अष्टसहस्राधिकलक्षसुवर्णतुल्यमित्यर्थः, यद्वा,—निष्कं दीनारः, सांव्यवहारि-...कमित्यर्थः, (टाका) तेषां सहस्रतुल्यं सहस्ररौप्यमुद्रातुल्यमित्यर्थः, ("साष्टे ...शते सुवर्णानां हेम्न्युरोभूषणे पले। दीनारेऽपि च निष्कोऽस्त्री" इत्यमरः), ...व्ययेति शेषः, समुद्धरेत् समुद्धृत्य स्थापयेदित्यर्थः, कालेषु समयेषु, उपयुक्त-...समुपस्थिते सतीत्यर्थः, कोटिषु कोटिसङ्ख्यकेषु अपि, बहुसङ्ख्यकेषु अपि ...र्थं, धनेषु इति शेषः, मुक्तहस्तः अबद्धपाणिः, प्रभूतव्ययशील इत्यर्थः, भवेदिति

हि—२७

अन्यच्च,—क्रतौ विवाहे व्यसने रिपुक्षये
यशस्करे कर्मणि मित्रसङ्ग्रहे ।
प्रियासु नारीष्वधनेषु बन्धुषु
ह्यतिव्ययो नास्ति नराधिपाष्टसु ॥ १२८ ॥

यतः,—मूर्खः स्वल्पव्ययत्रासात् सर्वनाशं करोति हि ।
कः सुधीः सन्त्यजेद्भाण्डं शुल्कस्यैवातिसाध्वसात् ?" ॥१२९॥

---

शेषः, तं तादृशं, राजसिंहं नृपश्रेष्ठं, [ राजा सिंह इव इति "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" ( २।१।५६ पा० ) इति उपमितकर्मधारयः ] ("स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः" ॥ इत्यमरः), लक्ष्मीः श्रीः, न जहाति न त्यजति, यथोचितव्ययशीलस्य सम्पत् न कदापि परिहीयते इति भावः । उपजातिः वृत्तम् ।

(१२८) कुत्र कुत्र मुक्तहस्तता न दोषायेत्याह, क्रताविति ।—नराधिप ! हे राजन् ! क्रतौ यज्ञे, यागाद्यनुष्ठाने इत्यर्थः, विवाहे परिणयकर्मणि, व्यसने विपदि, रिपुक्षये शत्रुविनाशे, शत्रुविनाशार्थमुपायानुष्ठाने इत्यर्थः, यशस्करे कीर्तिसाधने, कर्मणि क्रियायां, मित्रसङ्ग्रहे सुहृज्जनविषये, स्वपक्षवर्द्धनकरणविषये इत्यर्थः, प्रियासु वल्लभासु, पतिच्छन्दानुसारिणीषु इति यावत्, नारीषु स्त्रीषु, च अधनेषु दरिद्रेषु, बन्धुषु स्वजनेषु च, तादृशबन्धूनां साहाय्यार्थमित्यर्थः, [ सर्वत्र विषयसप्तमी ] अष्टसु एतेषु अष्टसु स्थानेषु, अतिव्ययः अमितव्ययिता, नास्ति न विद्यते, हि निश्चये, एतदर्थम् अतिव्ययोऽपि कर्त्तव्य एव इत्यर्थः । वंशस्थविलं वृत्तम् ।

(१२९) मूर्खः इति ।—मूर्खः मन्दबुद्धिर्जनः, स्वल्पव्ययत्रासात् अत्यल्पार्थव्ययभयात्, अत्यल्पस्यापि धनस्य व्ययमाशङ्क्य इत्यर्थः, हि निश्चितं, सर्वनाशं सर्वस्वध्वंसं करोति विदधाति, पश्चात् तस्य सर्वमेव नश्यति इत्यर्थः, कः सुधीः बुद्धिमान्, वणिगिति शेषः, शुल्कस्य घट्टादिषु राजप्रदेयकरस्यैव, ("शुल्क घट्टादिदेयं स्यात् वराददेयंऽस्त्रियाम्" इति मेदिनी) अतिसाध्वसात् अतिभयात्, भाण्डं मूलधनं, पण्यद्रव्यजातमिति यावत्, ("भाण्डं पात्रे वणिङ्मूलधने भूषाऽश्वभूषयोः" इति मेदिनी) सन्त्यजेत् ? परिहरेत् ? राज्ञे करप्रदानशङ्कया कः मूलधनं सर्वादौ निःक्षिपेत् इत्यर्थः, न कोऽपि स्वल्पस्य हेतोः बहु हातुमिच्छतीति भावः ।

राजाऽऽह,—"कथमिह समयेऽतिव्ययो युज्यते ? उक्तञ्च,—
"आपदर्थे धनं रक्षेत्" इति।

मन्त्री ब्रूते,—

"श्रीमतां कथमापदः ?"।

राजाऽऽह,—

"कदाचित् कुपिता लक्ष्मीः ?"

पुनर्मन्त्री ब्रूते,—

"सञ्चितार्थो विनश्यति ॥१३०॥

तद्देव ! (द) कार्पण्यं परित्यज्य (ध) स्वसुभटाः दान-मानाभ्यां पुरस्क्रियन्ताम्। तथा चोक्तम्,—

परस्परज्ञाः संहृष्टाः त्यक्तुं प्राणान् सुनिश्चिताः।
कुलीनाः पूजिताः सम्यग्विजयन्ते द्विषां बलम् ॥१३१॥

---

(१३०) समयविशेषे अतिव्ययोऽपि करणीय इत्यभिप्रायेण राजमन्त्रिणोरुक्ति-[प्रत्यु]क्ती आह, आपदिति।—आपदर्थं आपन्निवारणाय, धन वित्तं, रक्षेत् [सं]रक्षयात्। राज्ञा एवम् उक्ते सति तत्प्रत्युत्तरेण मन्त्री ब्रूते,—श्रीमतां धन-[शा]लिनां जनानाम्, आपदः विपत्तयः, कथम् ? कुतः सम्भवन्ति ?, ऐश्वर्यशालिनां [वि]पत्तिर्नास्ति इति भावः। कदाचित् कदाऽपि, लक्ष्मीः श्रीः, कुपिता अप्रसन्ना, [चे]द् भवेत ? इति शेषः, इति राज्ञा उक्ते तत्प्रत्युत्तरेण मन्त्री पुनः ब्रूते,—तदा [स]ञ्चितार्थो रक्षितमपि धनं, विनश्यति नष्टः भवति ; कमलाया विरागभाजनानां [स]ञ्चितान्यपि धनानि "निर्जगाम यदा लक्ष्मीर्गजभुक्तकपित्थवत्" इति न्यायेन [वि]नश्यन्ति ; अतः अवश्यकर्त्तव्यः व्ययः करणीय एव इति भावः।

(द) कार्पण्यं—क्षुद्रतां, व्ययकुण्ठतामित्यर्थः, कृपणतामिति यावत्।

(ध) स्वसुभटाः,—स्वकीयविक्रान्तयोद्धृपुरुषाः।

(१३१) भारतशान्तिपर्वीयराजधर्मव्याख्यानप्रकरणोक्तं श्लोकमवलम्ब्य स्ववले [स]त्कारप्रदानस्य गुणं प्रदर्शयति, परस्परेति।—परस्परम् अन्योन्यं, जानन्तीति [प]रस्परज्ञाः अन्योन्यमवस्थाभिज्ञाः, परस्परसहायका इति यावत्, ऐकमत्यमाश्रिता [इ]ति भावः, संहृष्टाः प्रसादलाभेन स्वामिनि हृष्टचित्ताः, प्राणान् जीवितं, त्यक्तुं

अपरञ्च,—सुभटाः शीलसम्पन्नाः संहताः कृतनिश्चयाः।
अपि पञ्चशतं शूरा मृद्नन्ति रिपुवाहिनीः ॥ १३२ ॥

किञ्च,—शिष्टैरप्यविशेषज्ञ उग्रश्च कृतनाशकः।
त्यज्यते किं पुनर्नान्यैर्यश्चाप्यात्मम्भरिर्नरः ॥ १३३ ॥

यतः,—सत्यं शौर्य्यं तथा त्यागो नृपस्यैते त्रयो गुणाः।
एतैस्त्यक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥ १३४ ॥

---

विसृष्टुं, सुनिश्चिताः कृतसङ्कल्पाः, स्वजीवितेनापि स्वामिनो मङ्गलसाधनाय कृतनिश्चयाः इत्यर्थः, कुलीनाः सत्कुलोत्पन्नाः, पूजिता योग्यपदप्रदानादिना समादृताः, स्वसैनिका इति शेषः, द्विषां शत्रूणां, बलं सैन्यं, सम्यक् सर्वतोभावेन, विजयन्ते पराभवन्ति, [ "विपराभ्यां जेः" ( १।३।१९ पा० ) इत्यात्मनेपदम् ]।

( १३२ ) भारतशान्तिपर्वणि राजधर्म्मव्याख्यानप्रकरणोक्तं श्लोकमुपजीव्य सुभटानामल्पेनापि कार्य्यसिद्धिरित्याह, सुभटा इति।—शीलसम्पन्नाः सत्स्वभावाः, संहताः परस्परं मिलिताः, ऐकमत्यमाश्रिता इत्यर्थः, कृतनिश्चयाः स्थिरसङ्कल्पाः, प्राणात्ययेन अपि शत्रूनविजित्य न रणात् निवर्त्तामहे इति प्रतिज्ञारूढाः इत्यर्थः, पञ्चशतं पञ्चशतसङ्ख्यका अपि, शूराः विक्रमवन्तः, सुभटाः निपुणयोद्धारः, रिपुवाहिनीः शत्रोश्चतुरङ्गसेनाः, मृद्नन्ति मर्द्दयन्ति, नाशयन्ति इत्यर्थः।

( १३३ ) आत्मसुखनिरतस्य अकृतज्ञस्य नरपतेः सर्वत्याज्यतामुपवर्णयति, शिष्टैरिति।—अविशेषज्ञः दोषगुणयोर्विश्लेषणे अनभिज्ञः, आत्मपरभेदज्ञाने मूढः वा, उग्रः सदा उद्धतप्रकृतिः, च तथा, कृतस्य नाशकः कृतनाशकः कृतघ्नः, च किञ्च, यः नरः लोकः, आत्मम्भरिरपि, स्वार्थपरोऽपि, भवतीति शेषः, स: शिष्टैरपि विशिष्टैरपि, धीरैरपीत्यर्थः, त्यज्यते परिह्रीयते, अन्यैः अपरैः, अशिष्टैरित्यर्थः, किं पुनर्न त्यज्यते इत्यनुषङ्गः, अपि तु सर्वथा त्यज्यते एवेत्यर्थः।

( १३४ ) कामन्दकनीतिचतुर्थसर्गोक्तश्लोकमवलम्ब्य राज्ञां प्रधानगुणानाह, सत्यमिति।—सत्यं सत्यनिष्ठता, शौर्य्यं वीरता, पुरुषकार इति यावत्, तथा त्यागः सत्पात्रे विनियोगः, एते त्रयः त्रिसङ्ख्यकाः, नृपस्य राज्ञः, गुणाः औत्कर्ष्याधायकधर्म्माः, स्यात्समुचिता इति शेषः, एतैः सत्यादिभिः गुणैः, त्यक्तः रहितः, महीपालः राजा, खलु निश्चितं, वाच्यतां निन्दनीयत्वं, प्राप्नोति लभते। ( "त्यागः सत्यञ्च शौर्य्यञ्च त्रय एते महागुणाः। प्राप्नोति हि गुणान् सर्वानेतैर्युक्तो नराधिपः"। इति कामन्दकीयपाठः )।

अमात्यास्तावदवश्यमेव पुरस्कर्त्तव्याः। तथा चोक्तम्,—

यो येन प्रतिबद्धः स्यात् सह तेनोदयी व्ययी।
स विश्वस्तो नियोक्तव्यः प्राणेषु च धनेषु च ॥ १३५ ॥

यतः,—धूर्त्तः स्त्री वा शिशुर्यस्य मन्त्रिणः स्युर्महीपतेः।
अनीतिपवनक्षिप्तोऽकार्य्याब्धौ स निमज्जति ॥१३६॥

शृणु देव!—

हर्षक्रोधौ यतौ यस्य कोषः स्वल्पव्ययेन च।
नित्यं भृत्यान्ववेक्षा च तस्य स्याद्धनदा धरा ॥१३७॥

---

(१३५) पुरस्कारहेतुमाह, स इति।—यो जनः, येन जनेन सह, प्रतिबद्धः सम्बद्धः, एकविधकार्य्यकरणादिना परस्परसम्बन्धयुक्त इत्यर्थः, स्यात् भवेत्, तथा तेन येन सह प्रतिबद्धः तेन सहेत्यर्थः, उदयी अभ्युन्नतः, तस्य अभ्युदये अभ्युदयवान् इत्यर्थः, व्ययी क्षयी च, तस्य विपदि विपन्नः इत्यर्थः, स तादृशः, विश्वस्तः विश्वासमापन्नः, समानसुखदुःखभागीत्यर्थः, जन इति शेषः, प्राणेषु जीवितेषु, जीवनरक्षार्थञ्च इत्यर्थः, धनेषु धनरक्षार्थञ्च, नियोक्तव्यः नियातव्यः; समसुखदुःखभागित्वात् धनप्राणरक्षणे अधिकृतत्वाच्च प्रीतिज्ञापनार्थं ते अवश्यमेव पुरस्कर्त्तव्याः, तेन च तेषां प्रभुकार्य्यसम्पादने आग्रहाधिक्यं भवतीति भावः।

(१३६) धनप्राणरक्षार्थं विश्वस्तमन्त्रिनियोगप्रस्तावे अनुपयुक्तमन्त्रिणो दोषमाह, धूर्त्त इति।—यस्य महीपतेः राज्ञः, धूर्त्तः शठः, स्त्री नारीजनः, वा अथवा, शिशुः बालकः, इति त्रयः मन्त्रिणः मन्त्रणादातारः, स्युः भवेयुः, स महीपतिः, अनीतिपवनक्षिप्तः अनीतिर्दुर्नय एव, पवनः वायुः, तेन क्षिप्तः इतस्ततः चालितः सन्, कर्त्तव्यात् भ्रष्टः सन्नित्यर्थः, अकार्य्यमेव दुष्कर्म्म एव, अब्धिः सागरः तस्मिन्, अनाचारसमुद्रे, ("कार्य्याब्धौ" इति पाठान्तरम्) निमज्जति निमग्नो भवति, विनश्यतीत्यर्थः, अतः परिहर्त्तव्या एते इति भावः। ("यत्र स्त्री यत्र कितवो बालो यत्रानुशासिता। मज्जन्ति तेऽवशा राजन्! नद्यामश्मप्लवा इव"॥ इति भारतीद्योगपर्व्वीयपाठः)।

(१३७) हर्षेति।—यस्य राज्ञः, हर्षक्रोधौ सम्मदकोपौ, यतौ नियमितौ, विपदि धैर्य्यम्, उन्नतौ च क्षमेत्यर्थः, इष्टप्राप्तौ न हृष्यति, अनिष्टप्राप्तौ च न कुप्यतीत्यर्थौ वा, सुखदुःखयोः समभाव इति भावः; स्वल्पव्ययेन परिमितव्ययेन;

येषां राज्ञा सह स्यातामुच्चयापचयौ ध्रुवम् ।
अमात्यान् नीतिमान् राजा नावमन्येत कर्हिचित् ॥१३८॥

यतः,—महीभुजो मदान्धस्य मज्जतोऽकार्य्यसागरे ।
स्खलतो हि करालम्बः सुश्लिष्टैरेव दीयते" ॥१३९॥

अथाऽऽगत्य प्रणम्य मेघवर्णो ब्रूते,—"देव ! (न) दृष्टिप्रसादं कुरु । एष युद्धार्थी विपक्षो दुर्गद्वारि तिष्ठति ; तद्देव-

च, कोषः धनागारः, यतः इति शेषः, [ विभक्तिविपरिणामेनान्वयः ] नित्यं सर्वदा, भृत्येषु अनुजीविषु, अन्ववेक्षा परिदर्शनं, भृत्यानां सुखदुःखपर्य्यवेक्षणमित्यर्थः, सुखसंविधाने दुःखमोचने च तत्पर इति भावः, तस्य राज्ञः, धरा पृथिवी, राज्यमिति यावत्, धनदा रत्नप्रसविनी, स्यात् भवेत, सर्वाः सम्पत्तयः तस्य एव करायत्ता इति भावः । ( "हर्षक्रोधौ समौ यस्य शास्त्रार्थे प्रत्ययस्तथा । नित्यं भृत्यानुपेक्षा च तस्य स्याद्धनदा धरा" ॥ इति पाठान्तरम् ) ।

( १३८ ) येषामिति ।—येषाम् अमात्यानाम्, उच्चयापचयौ अभ्युदयापचयौ, उन्नतिरवनतिश्च इत्यर्थः, राज्ञा नृपेण सह, ध्रुवं निश्चितं, स्यातां भवेतां, नृपस्याभ्युदये येषाम् अमात्यानाम् अभ्युदयः, क्षये च हानिः स्यात् इत्यर्थः, नीतिमान् राजनीतिकुशलः, राजा नृपतिः, कर्हिचित् कदाचिदपि, अमात्यान् तादृशान् समसुखदुःखभागिनः सचिवानित्यर्थः, न अवमन्येत न अवजानीयात्, तेषामवमानने स्वस्य अवमानं राज्यभ्रंशश्च अवश्यम्भावीति भावः ।

( १३९ ) कथं ते नावमन्तव्याः ? इत्याह, महीभुज इति ।—मदान्धस्य मदेन गर्वेण, ऐश्वर्य्यमत्ततया इत्यर्थः, अन्धस्य प्रज्ञाचक्षुरहितस्य, विवेकविहीनस्येत्यर्थः, अत एव अकार्य्यसागरे दुष्क्रियासमुद्रे, मज्जतः निमग्नस्य, नीतिविगर्हितकर्म्माचरणेन विपत्तिपारावारे निमग्नीभवत इत्यर्थः, महीभुजः राज्ञः सम्बन्धे, स्खलतः तीरादेव, निमज्जनोपक्रमे एवेत्यर्थः, ( अत्र "स्खलतः" इति पाठे—अत एव सखलतः इत्यर्थः ) सुश्लिष्टैरेव सुपण्डितैरेव, अमात्यैरिति शेषः, करालम्बः हस्तावलम्बनम्, उद्धारार्थमिति भावः, दीयते समर्प्यते, ईदृशा विद्वांस एव सदुपदेशेन तादृशं विपदः उद्धरन्तीत्यर्थः । ( अत्र द्वितीयपादे "मज्जतोऽहं दन्तिनः" तथा चतुर्थपादे "सद्भृत्यसचिवचेष्टितम्" इति पाठान्तरम् ) ।

( न ) दृष्टिप्रसादं—दृष्ट्या नेत्रेण, दृष्टिप्रदानेनेत्यर्थः, प्रसादम् अनुग्रहं, प्रसन्नदृष्टिपातम्, अनुग्रहदृष्टिप्रदानमित्यर्थः ।

प्रादादेशात् वहिर्निःसृत्य स्वविक्रमं दर्शयामि ; तेन (प) देवप्रसादस्य (फ) आनृण्यमुपगच्छामि"। चक्रवाको ब्रूते,—(ब) "मैवं, यदि वहिर्निःसृत्य योद्धव्यं, तदा दुर्गाऽऽश्रयणमेव निष्प्रयोजनम्। अपरञ्च,—

विषमोऽपि यथा नक्रः सलिलान्निःसृतोऽवशः।
वनाद्विनिर्गतः शूरः सिंहोऽपि स्याच्छृगालवत्" ॥१४०॥

वायसो ब्रूते,—"देव ! स्वयं गत्वा युद्धं दृश्यताम्। यतः,—

पुरस्कृत्य बलं राजा योधयेदवलोकयन्।
स्वामिनाऽधिष्ठितः श्वाऽपि किं न सिंहायते ध्रुवम् ?" ॥१४१॥

---

(प) देवप्रसादस्य—राजानुग्रहस्य।

(फ) आनृण्यम्—ऋणमुक्तिम्।

(ब) मैवं—वहिर्निःसृत्य विक्रमप्रदर्शनं न कर्त्तव्यमित्यर्थः।

(१४०) दृष्टान्तमुखेन दुर्गपरित्यागस्य दोषं प्रदर्शयति, विषम इति।—विषमः भीषणः, नक्रोऽपि कुम्भीरोऽपि, सलिलात् जलात्, निःसृतः निर्गतः, यथा अवशः अप्रभुः, जलचरत्वेन स्थलविचरणे अभ्यासाभावात् आत्मरक्षणेऽपि असमर्थः इत्यर्थः, भवतीति शेषः, शूरः विक्रान्तः, सिंहोऽपि पशुराजोऽपि, यथा वा वनात् अरण्यात्, स्वदुर्गादिति भावः, विनिर्गतः निःसृतः सन्, ("वनात् विनिर्गतः शूरः" इत्यत्र "वनात्तु प्रच्युतः सत्यम्" इति पाठान्तरम्) शृगालवत् जम्बुक इव, हीनविक्रम इति भावः, स्यात् भवेत्, तथा दुर्गात् वहिःस्थितः महाबलोऽपि योद्धा हीनबलः स्यादिति भावः। ("नक्रः स्वस्थानमाश्रित्य गजेन्द्रमपि कर्षति। स एव प्रच्युतः स्थानात् शुनाऽपि परिभूयते"॥ इत्यनुरूपः श्लोकः। एतदभिप्रायेण कश्चित् पठति,—"जानामि रे सर्प ! तव प्रभावं कण्ठस्थितो गर्जसि शङ्करस्य। स्थानं प्रधानं न बलं प्रधानं स्थानस्थितः कापुरुषोऽपि सिंहः" ॥ इति।

(१४१) युद्धे राज्ञोपस्थितेर्गुणमाह, पुरस्कृत्येति।—राजा नृपः, बलं सैन्यं, पुरस्कृत्य अग्रे कृत्वा, अवलोकयन् बलानां बलाबलं पश्यन् सन्, स्वयम् उपस्थाय तेषां युद्धोत्साहं प्रवर्द्धयन् इत्यर्थः, योधयेत् युद्धं कारयेत्। तथात्वे बलानां सविशेषः उत्साहो जायते इत्याह,—स्वामिना प्रभुणा, अधिष्ठितः कृताधिष्ठानः, अवस्थानेन प्रवर्द्धितोत्साह इति भावः ; श्वा कुक्कुरः अपि, ध्रुवं निश्चितं, किं न सिंहायते ?

अनन्तरं ते सर्वे दुर्गद्वारं गत्वा (भ) महाऽऽहवं कृतवन्तः। (म) परेद्यवि चित्रवर्णो राजा गृध्रमुवाच,—"तात! स्वप्रतिज्ञातमधुना विधीयताम्"। गृध्रो ब्रूते,—"देव! शृणु तावत्,—

अकालसहमत्यल्पं मूर्खव्यसनिनायकम्।
अगुप्तं भीरुयोधञ्च दुर्गव्यसनमुच्यते॥ १४२॥

तत् तावदत्र नास्ति,—

उपजापश्चिरारोधोऽवस्कन्दस्तीव्रपौरुषम्।
दुर्गस्य लङ्घनोपायाश्चत्वारः कथिता इमे॥ १४३॥

---

सिंह इव न आचरति किम्? अपि तु आचरत्येवेत्यर्थः; अत उत्साहदानार्थमपि तत्रभवतां गमनमुचितमिति भावः।

(भ) महाऽऽहवं—घोरसङ्ग्रामम्।

(म) परेद्यवि—परस्मिन् अहनि, युद्धारम्भात् परदिने इत्यर्थः। [पर+एद्यवि, "सद्यःपरुत्—" (५।३।२२ पा०) इति सूत्रस्य "परस्मादेद्यव्यहनि" (वा०) इति निपातनात् साधुः। "परे त्वह्नि परेद्यवि" इत्यमरः]।

(१४२) सुखेन जेतव्यस्य दुर्गस्य लक्षणमाह, अकालसहमिति।—अकालसहं कालं सहते यत् तत् कालसहं, तन्न भवति इति अकालसहं कालविलम्बसहनाक्षमं, खाद्यपानीयाद्यभावात् दीर्घावरोधसहनाक्षममित्यर्थः, अत्यल्पं क्षुद्रम्, अदृढम् अप्रशस्तं वा इत्यर्थः, मूर्खः शास्त्रज्ञानविहीनः, व्यसनी पानादिव्यसनासक्तश्च, नायकः सेनाध्यक्षः यस्मिन् तत्, अगुप्तम् असुरक्षितं, भीरवः भयशीलाः, योधाः सैनिकाः यस्मिन् तच्च, दुर्गव्यसनं दुर्गदूषणं, दुर्गविपत्तिः इति यावत्, उच्यते कथ्यते, नीतिज्ञैरिति शेषः; एतादृशं दुर्गं सुजेयम् इति निष्कर्षः।

(१४३) दुर्गजयोपायमाह, उपजाप इति।—उपजापः भेदः, दुर्गस्थसैन्यमध्ये भेदसङ्घटनमित्यर्थः, चिरं दीर्घकालं व्याप्य, आरोधः अवरोधनं, दुर्गं समन्तात् सैन्यसमावेशं कृत्वा दीर्घकालमवस्थानमित्यर्थः, तेन च निर्गमप्रवेशप्रतिषेधात् स्थानान्तरतः खाद्यपानीयाद्यानयनाक्षमतया दुर्गस्थखाद्यादीनां क्रमशः निःशेषतया च दुर्गजयस्य सुखकरत्वादिति भावः; अथवा चिरम् अरोधः असम्यक्, अप्रशस्तः इत्यर्थः, रोधः नीतिमुल्लङ्घ्य अग्निप्रदानादिना सहसा दुर्गस्य निर्गमनमार्गप्रतिषेध इत्यर्थः; [अप्राशस्त्ये नञर्थः] अवस्कन्दः सहसा आक्रमणं, तीव्रपौरुषम् अत्यर्थ-

अत्र च (य) यथाशक्ति क्रियते यत्नः"। चित्रवर्णः कथयति,—"एवमेव"। ततः अनुदिते एव भास्करे चतुर्ष्वपि दुर्गद्वारेषु प्रवृत्ते युद्धे दुर्गाभ्यन्तरे गृहे गृहे काकैरेकदा अग्निः (र) निक्षिप्तः। ततः (ल) "गृहीतं गृहीतं दुर्गम्" इति कोलाहलं श्रुत्वा अनेकगृहेषु च (व) पावकं प्रदीप्तं प्रत्यक्षेण अवलोक्य राजहंसस्य सैनिका बहवो दुर्गनिवासिनः सत्वरं ह्रदं प्रविष्टाः। यतः,—

सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम्।
प्राप्तकाले यथाशक्ति कुर्य्यान्न तु विचारयेत् ॥१४४॥

राजहंसस्य सुखिस्वभावात् मन्दगतिः सारसद्वितीयः चित्रवर्णस्य सेनापतिना कुक्कुटेन आगत्य वेष्टितः। हिरण्यगर्भः सारसमाह,—"सेनापते सारस! (श) ममानुरोधादात्मानं

---

साहसप्रदर्शनञ्च, इमे चत्वारः उपजापादयः, दुर्गस्य कोट्टस्य, लङ्घनोपायाः लङ्घनस्य अतिक्रमणस्य, अधिकारस्य इत्यर्थः, उपायाः साधनानि, भवन्तीति शेषः।

(य) यथाशक्ति—साध्यानुसारेण। [अनतिक्रमार्थे अव्ययीभावः]।

(र) निक्षिप्तः,—दत्तः इत्यर्थः।

(ल) गृहीतम्—आयत्तीकृतमित्यर्थः, जितमिति भावः।

(व) पावकं—वह्निम्। प्रदीप्तं—प्रज्वलितम्। प्रत्यक्षेण—साक्षात्।

(१४४) भारतशान्तिपर्वीयापद्धर्मप्रकरणोक्तं श्लोकमवलम्ब्य राजहंसपक्षीयाणां पलायनं समर्थयितुमाह, सुमन्त्रितमिति।—प्राप्तकाले उचितावसरे, यथाशक्ति सामर्थ्यानुरूपं, सुमन्त्रितं सुमन्त्रणां, सुविक्रान्तं सुविक्रमं, सुयुद्धं सुयोधनं, भीषणसमरमित्यर्थः, सुपलायितं सम्यक् पलायनञ्च, [सर्वत्र भावे क्तः] कुर्य्यात् विदध्यात्, न तु नैव, विचारयेत् विचिन्त्य कालक्षेपं न कुर्य्यादित्यर्थः; युद्धकाले समागते अमात्यैः सह सुमन्त्रणां कृत्वा यथाशक्ति विक्रमं प्रदर्श्य दारुणं समरं कुर्य्यात्, दैवप्रातिकूल्यात् पराजितश्चेत् भवति तदा सत्वरं पलाय्य आत्मरक्षां कुर्य्यात्, तत्र न कोऽपि विचारः करणीयः, अन्यथा विपत्तिरेव स्यादिति निष्कर्षः। ("आपदास्वदकालेन कुर्वीत न विचारयेत्" इति उत्तरार्द्धस्य भारतीयपाठः)।

(श) ममानुरोधात्—ममानुवर्त्तनात्, ममानुगमनं कृत्वा इत्यर्थः, मम

कथं व्यापादयसि ? अधुनाऽहं गन्तुमसमर्थः, त्वं गन्तुमधुनाऽपि समर्थः, तद्गत्वा जलं प्रविश्यात्मानं परिरक्ष। मत्पुत्रं चूड़ामणिनामानं (ख) सर्वज्ञस्य सम्मत्या राजानं करिष्यसि"। सारसो ब्रूते,—"देव! न वक्तव्यमेवं दुःसहं वचः। यावत् चन्द्रार्कौ दिवि तिष्ठेते तावत् विजयतां देवः। अहं देव! (ग) दुर्गाधिकारी, तन्मम (घ) मांसासृग्विलिप्तेन द्वारवर्त्मना तावत् प्रविशतु शत्रुः। अपरञ्च देव!—

क्षमी दाता गुणग्राही स्वामी भाग्येन लभ्यते"।

राजाऽऽह,—"अस्ति एवं, किन्तु,—

शुचिर्दक्षोऽनुरक्तश्च जाने भृत्योऽपि दुर्लभः" ॥१४५॥

सारसो ब्रूते,—"शृणु देव!—

यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम्।

---

जीवनं रक्षितुमिति यावत्। ("अनुरोधोऽनुवर्त्तनम्" इत्यमरः)। व्यापादयसि?—घातयसि?।

(ख) सर्वज्ञस्य—मन्त्रिणश्चक्रवाकस्य।

(ग) दुर्गाधिकारी—दुर्गाध्यक्षः, सेनापतिरित्यर्थः।

(घ) मांसासृग्विलिप्तेन—मांसञ्च असृक् च मांसासृजी, ताभ्यां विलिप्तेन दिग्धेन, मां हत्वेत्यर्थः।

(१४५) प्रभोर्जीवनरक्षार्थं स्वजीवनत्यागस्यापि कर्त्तव्यतां प्रतिपादयितुं गुणवत्प्रभोः दौर्लभ्यमाह, क्षमीति।—क्षमी क्षमावान्, दाता दानशीलः, गुणग्राही गुणज्ञः, गुणवति कृतादरः इत्यर्थः, स्वामी प्रभुः, भाग्येन दिष्ट्या, पुण्यबलेन इत्यर्थः, लभ्यते प्राप्यते, एतादृशः सर्वगुणसम्पन्नः प्रभुर्भवान् मया बहुपुण्येन लब्धः, अतो भवज्जीवनरक्षार्थं प्रयासः मया करणीय एव इति भावः। राजाह,—शुचिः विशुद्धस्वभावः, दक्षः कार्य्यकुशलः, अनुरक्तः प्रभुपरायणः, भृत्योऽपि सेवकोऽपि, दुर्लभः दुष्प्रापः, इति जाने इत्यहं जानामि, एतादृशगुणसम्पन्नस्य भृत्यस्य तवापि प्राणरक्षार्थं मया प्रयत्नो विधेय इति भावः।

(१४६) वीराणां रणक्षेत्रात् पलायनमतीव अयशस्करम् अतः सर्वथा यदी

अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः क्रियेत ? ॥ १४६ ॥

अन्यच्च,—भवेऽस्मिन् पवनोद्भ्रान्तवीचिविभ्रमभङ्गुरे।
जायते पुण्ययोगेन परार्थे जीवितव्ययः ॥ १४७ ॥

त्वञ्च देव ! स्वामी सर्वथा रक्षणीयः। यतः,—
स्वाम्यमात्यश्च राष्ट्रञ्च दुर्गं कोषो बलं सुहृत्।
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥ १४८ ॥

---

रक्ष्यमित्याह, यदीति।—यदि समरं युद्धम्, अपास्य त्यक्त्वा, समरक्षेत्रात् पलाय्येत्यर्थः, स्थितस्य इति शेषः, मृत्योः मरणात्, भयं भीतिः, नास्ति न विद्यते, इति एवं मन्यते चेदित्यर्थः, तदा इतः अस्मात् समरस्थानात्, अन्यतः अन्यस्मिन् स्थाने, प्रयातुं गन्तुं, पलायितुमित्यर्थः, युक्तम् उचितम्, अथ इति प्रश्नार्थकमव्ययम्, एतत्तु पृच्छामीत्यर्थः, विकल्पार्थकमव्ययं वा, पक्षान्तरे इत्यर्थः, ("अथाथो—। विकल्पानन्तरप्रश्नकात्स्न्यारम्भसमुच्चये" इति मेदिनी), यदि जन्तोः प्राणिनः, मरणं मृत्युः, अवश्यमेव निश्चितमेव, भविष्यतीति शेषः, तदा किमिति कथं, मुधा वृथा, यशः कीर्त्तिः, मलिनं कलुषितं, क्रियेत ? विधीयेत ? क्षणभङ्गुरेऽस्मिन् जगति यशः एव पालनीयं न तु जीवितमिति भावः। श्लोकोऽयं वेणीसंहारनाटकेऽपि दृश्यते। पुष्पिताग्रा वृत्तम्।

(१४७) परोपकारार्थं स्वदेहदानसौभाग्यं न सर्वदा घटते इति वक्तुमाह, भवे इति।—पवनेन वायुना, उद्भ्रान्ताः विताड़िता इत्यर्थः, चालिताः इति यावत्, वीचयः तरङ्गाः, तेषां विभ्रमः विलासः, तद्वत् भङ्गुरे विनश्वरे, क्षणोत्पादविनाशे इत्यर्थः, अस्थिरे इति यावत्, अस्मिन् भवे इह संसारे, जन्मनि वा, परार्थे परोपकाराय, जीवितव्ययः प्राणोत्सर्गः, पुण्ययोगेन सुकृतबलेन, सौभाग्येन इत्यर्थः, जायते सम्पद्यते, अवश्यविध्वंसिनां प्राणानां परार्थे उत्सर्गः पुण्यबलादेव घटते इति भावः।

(१४८) राज्याङ्गत्वात् स्वामी सर्वथा रक्षणीय इति वक्तुं प्रथमतः राज्याङ्गान्याह, स्वामीति।—स्वामी राजा, अमात्यः मन्त्री, राष्ट्रं राज्यं, दुर्गं कोट्टं, सागरपर्वतादिभिरगम्यप्रदेश इत्यर्थः, कोषः धनागारः, बलं सैन्यं, सुहृत् मित्रं, मित्रभावापन्नः राजा इति यावत्, पौराणां नागरिकाणां, श्रेणयोऽपि च समूहाश्च,

अपि च,—प्रकृतिः स्वामिनं त्यक्त्वा समृद्धाऽपि न जीवति।
अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ? ॥ १४९ ॥
अपरञ्च,—नरेशे जीवलोकोऽयं निमीलति निमीलति।
उदेत्युदीयमाने च रवाविव सरोरुहम् ॥ १५० ॥
अत्रापि प्रधानाङ्गं राजा"।

---

राज्याङ्गानि एतानि अष्टौ राज्यस्य राजकर्म्मणः, अङ्गानि उपायाः, राज्यरक्षायाः प्रधानसाधनानि इत्यर्थः, प्रकृतयः प्रकृतिसंज्ञकाः, उच्यन्ते इति शेषः, परस्पर-मिलिता एतं राज्यं प्रकृष्टं कुर्वन्ति इत्यर्थः ; सम्पद्युक्ता एता अष्टौ प्रकृतयः नृपं प्रकृष्टतया प्रतिष्ठितं कुर्वन्ति इति भावः। ("स्वाम्यमात्यश्च राष्ट्रञ्च दुर्गं कोषो बलं सुहृत्। परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते। पौरश्रेण्या सहाष्टाङ्गमपि राज्यं प्रकीर्त्तितम्" ॥ इति कामन्दकीयपाठः। श्लोकोऽयम् अमरकोषशब्दरत्नावल्या-दिविविधग्रन्थेषु विविधपाठान्तरेण पठितो दृश्यते)।

(१४९) प्रकृतिरिति।—प्रकृतिः अमात्यादि राज्याङ्गम् इत्यर्थः, अमात्यादिषु सप्तसु मध्ये एकाऽपि प्रकृतिरिति भावः, स्वाम्यादिषु अष्टसु प्रकृतिषु मध्ये श्लोकेऽस्मिन् स्वामिशब्दस्य पृथक् ग्रहणात् प्रकृतिशब्देनात्र राजव्यतिरिक्तप्रकृतीनां ग्रहणमिति बोद्धव्यम् ; समृद्धाऽपि सर्वगुणसम्पन्नाऽपि, स्वामिनं राजानं, मूलप्रकृतिमिति यावत्, प्रधानतममङ्गमिति भावः ; त्यक्त्वा परित्यज्य, स्वामिविहीना सतीत्यर्थः, न जीवति न चिरं तिष्ठति इत्यर्थः, म्रियते इति यावत्, वैद्यः चिकित्सकः, धन्वन्तरिरपि स्वयं सकलचिकित्सकशिरोमणिरपि, गतं क्षयितम्, आयुः जीवनकालो यस्य तस्मिन्, आसन्नमृत्यौ जने, किं करोति ? किं कर्त्तुं शक्नोति ? धन्वन्तरिरपि तत्र विफलप्रयत्नो भवेदित्यर्थः ; परमायुरिव जीवनस्य प्रकृतेरपि राजा एव मूलम् इति भावः।

(१५०) राज्ञः सुखदुःखभागित्वं प्रजानामवश्यम्भाव्यमित्याह, नरेशे इति।—रवौ सूर्य्ये, सरोरुहं पद्ममिव, सूर्य्ये अस्तमिते सरोरुहं यथा सङ्कुचति, उदीय-माने च यथा प्रस्फुटति तथा इत्यर्थः, नरेशे राजनि, निमीलति मृते सति, विपन्ने सति इति वा, अयं जीवलोकः सर्वः एव जनः, निमीलति म्रियते, विपद्यते वा, उदीयमाने च प्रकाशमाने च, अभ्युदयं गच्छति च इत्यर्थः, उदेति अभ्युदयं गच्छति, सौभाग्यं लभते इत्यर्थः ; राज्ञः अभ्युदये प्रजानामभ्युदयः राज्ञः क्षये च प्रजानां क्षयो जायते इति निष्कर्षः।

अथ कुक्कुटेनागत्य राजहंसस्य शरीरं (क) खरतरनखाघातः कृतः। ततः सत्वरमुपसृत्य सारसेन (ख) स्वदेहान्तरितो राजा। अनन्तरं कुक्कुटेन नखमुखप्रहारैः (ग) जर्ज्जरीकृतेन सारसेन स्वाङ्गेनाच्छाद्य राजा जले प्रक्षिप्तः। कुक्कुटोऽपि सेनापतिना सारसेन स्वचञ्चुप्रहारेण विभिद्य व्यापादितः। पश्चात् सारसोऽपि बहुभिः पक्षिभिः (घ) सम्भूय व्यापादितः। अथ चित्रवर्णो दुर्गं प्रविश्य दुर्गावस्थितं द्रव्यं (ङ) ग्राहयित्वा (च) वन्दिभिः जयशब्देन आनन्दितः स्वस्कन्धावारं जगाम।

अथ राजपुत्रैरुक्तं,—"तस्मिन् राजहंसबले पुण्यवान् सारस एव, येन स्वदेहदानेन स्वामी रक्षितः। यतः,—

जनयन्ति सुतान् गावः सर्वा एव गवाकृतीन्।
विषाणोल्लिखितस्कन्धं कश्चिदेव गवां पतिम्" ॥ १५१ ॥

(क) खरतरनखाघातः,—तीक्ष्णनखप्रहारः।

(ख) स्वदेहान्तरितः,—निजशरीरेण आच्छादितः।

(ग) जर्जरीकृतेन—जीर्णीकृतेन, विशेषतः विक्षतेन इत्यर्थः।

(घ) सम्भूय—मिलित्वा।

(ङ) ग्राहयित्वा, स्वसैनिकैरिति शेषः।

(च) वन्दिभिः,—स्तुतिपाठकैः। जयशब्देन—जयति चित्रवर्णो राजा इति शब्दोच्चारणेन इत्यर्थः।

(१५१) जगति महत्त्वं दुर्लभमित्याह, जनयन्तीति।—गावः सौरभेय्यः, सर्वा एव सकला एव, सुतान् वत्सान्, गवाकृतीन् धेन्वाकारयुक्तान्, जनयन्ति उत्पादयन्ति, किन्तु तेषु मध्ये इति शेषः; विषाणोल्लिखितस्कन्धं विषाणाभ्यां शृङ्गाभ्याम्, उल्लिखितः विदारितः, स्कन्धः वृक्षप्रकाण्डः, मूलमारभ्य शाखावधिभागः इत्यर्थः, ("अस्त्री प्रकाण्डः स्कन्धः स्यात् मूलाच्छाखाऽवधिस्तरोः" इत्यमरः), येन तं तादृशं, वीर्यवन्तमित्यर्थः, गवां पतिं महावृषं, महोक्षमिति यावत्, कश्चिदेव बहुषु एकमेवेत्यर्थः, जनयन्तीति पूर्वेणान्वयः, बहुषु गोवत्सेषु वीर्यवान् वृषो यथा कदाचित् अत्यल्प एव जायते, तथा बहुषु मनुष्येषु स्वामिप्राणरक्षार्थमात्मोत्सृष्टा महापुरुषः कदाचिदेव सम्भवति इति निष्कर्षः।

विष्णुशर्मणा उक्तं,—"स तावत् (छ) सत्त्वक्रीतान् (ज) अक्षयलोकान् विद्याधरीपरिजनोऽनुभवतु महासत्त्वः। तथा चोक्तम्,—

आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः।
भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः॥ १५२॥
यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः।
अक्षयान् लभते लोकान् यदि क्लैव्यं न गच्छति॥१५३॥

विग्रहः श्रुतो भवद्भिः?"।

राजपुत्रैरुक्तं,—"श्रुत्वा सुखिनो (झ) भूता वयम्"।

विष्णुशर्माऽब्रवीत्,—"अपरमपि एवमस्तु,—

---

(छ) सत्त्वक्रीतान्—सत्त्वेन बलेन, बलरूपमूल्यदानेन इत्यर्थः, क्रीतान्—कृतक्रयान्, शौर्य्योपार्जितान्।

(ज) अक्षयलोकान्—नित्यस्थानानि, स्वर्गादिलोकान् इत्यर्थः। विद्याधरीपरिजनः,—विद्याधरीपरिवृतः इत्यर्थः। महासत्त्वः,—महाबलः।

(१५२) स्वामिहितार्थे युद्धे जीवनदानस्य फलमाह, आहवेष्वित्यादिद्वाभ्याम्।—ये शूराः वीराः, आहवेषु युद्धेषु, स्वाम्यर्थे प्रभुहितेच्छया, त्यक्तजीविताः उत्सृष्टप्राणाः, स्वामिराज्यरक्षार्थं हताः इत्यर्थः, भर्तृभक्ताश्च ये च प्रभुपरायणाः, कृतज्ञाश्च ये च कृतवेदिनः, कृतमुपकारं स्वीकुर्वन्तश्च ये इत्यर्थः, ते नराः स्वर्गगामिनः स्वर्गवासिनः इत्यर्थः, भवन्तीति शेषः, ते अवश्यमेव स्वर्गं यान्ति इति निष्कर्षः। ["आवश्यकाधमर्ण्ययोर्णिनिः" (३।३।१७० पा०) इति आवश्यके णिनिः]।

(१५३) यत्रेति।—शत्रुभिः अरिभिः, परिवेष्टितः समन्तात् वेष्टितः, शूरः वीरपुरुषः, यदि क्लैव्यं भीरुत्वं, युद्धे विमुखभावमित्यर्थः, न गच्छति न प्राप्नोति, युद्धात् न पराङ्मुखो भवति इति यावत्, तदा यत्र तत्र यस्मिन् कस्मिन्नपि देशे, हतः आहतः, मृतः इति यावत्, तादृशः सन्, अक्षयान् अव्ययान्, शाश्वतान् इत्यर्थः, लोकान् स्वर्गादिलोकानित्यर्थः, लभते प्राप्नोति।

(झ) भूताः,—सञ्जाताः।

विग्रहः करितुरङ्गपत्तिभिर्नो कदाऽपि भवतां महीभृताम् ।
नीतिमन्त्रपवनैः समाहताः संश्रयन्तु गिरिगह्वरं द्विषः" ॥१५४॥

इति हितोपदेशे विग्रहो नाम तृतीयः

कथासङ्ग्रहः ॥ ३ ॥

---

# सन्धिः ।

---

पुनः कथाऽऽरम्भकाले राजपुत्रैरुक्तं,—(क) "आर्य्य ! विग्रहः श्रुतोऽस्माभिः, (ख) सन्धिरधुनाऽभिधीयताम्" ।

---

(१५४) कथाऽवसाने आशिषा संवर्द्धयति, विग्रह इति।—महीं बिभर्तीति महीभृतः राजानः तेषां, कदाऽपि कस्मिंश्चिदपि काले, करितुरङ्गपत्तिभिः हस्त्यश्वपदातिभिः बलैः, विग्रहः समरः, नो भवतां न भवतु. [ "आत्मनेपदान्यिच्छन्ति परस्मैपदिनां क्वचित्" इति आत्मनेपदम् । "भवताम्महीभृताम" इति पाठस्तु साधीयान् । तत्र "तु" स्थाने तातिः ] । यद्वा,—महीभृतां भवतां युष्माकं, करितुरङ्गपत्तिभिः कदाऽपि विग्रहः नो भवतु इति शेषः । तर्हि कथं शत्रवो निरसनीयाः ? इत्याह,—द्विषः शत्रवः, युष्माकमिति शेषः, नीत्या नयेन सह, मन्त्राः सुमन्त्रणाः नीतिमन्त्राः नयसङ्गतसुमन्त्रणाः इत्यर्थः, त एव पवनाः वाताः तैः, समाहताः ताड़िताः, परिभूता इति यावत्, तादृशाः सन्तः, गिरिगह्वरं पर्वतगुहां, संश्रयन्तु संसेवन्तां, पलाय्य तत्र तिष्ठन्तु इत्यर्थः ; नीतिकौशलेन मन्त्रणाकौशलेन च भवन्तः द्विषतः निराकुर्वन्तु, तदर्थं दारुणे रणकर्म्मणि प्रवृत्तेरावश्यकता युष्माकं मा भूदिति निष्कर्षः । रथोद्धता वृत्तम् ।

इति श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्यकृता विग्रहव्याख्या ॥ ३ ॥

---

(क) आर्य्य !—पूज्य !, अथवा,—"कर्त्तव्यमाचरन् कार्य्यमकर्त्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृतः" इत्युक्तलक्षणः । [ ऋधातोः "ऋहलो-र्ण्यत्" (३।१।१२४ पा० ) इति ण्यत-प्रत्ययः ] ।

(ख) सन्धिः,—वस्त्रालङ्कारादिदानेन परैः सह मैत्रीसम्पादनं, राज्ञः राज्य-

विष्णुशर्मणा उक्तम्,—"श्रूयतां, सन्धिमपि कथयामि; यस्य अयमाद्यः श्लोकः,—

वृत्ते महति सङ्ग्रामे राज्ञोर्निहतसेनयोः।
स्थेयाभ्यां गृध्रचक्राभ्यां वाचा सन्धिः कृतः क्षणात्" ॥१॥

राजपुत्रा ऊचुः,—"कथमेतत्?"। विष्णुशर्मा कथयति,—"ततस्तेन राजहंसेनोक्तं,—"केन अस्मद्दुर्गे निक्षिप्तोऽग्निः? किं (ग) पारक्येण, किं वा अस्मद्दुर्गवासिना केनचित् विपक्षप्रयुक्तेन?"। चक्रवाको वदति,—"देव! भवतो (घ) निष्कारणबन्धुः (ङ) असौ मेघवर्णः सपरिवारो नात्र अवलोक्यते, तत् मन्ये, तस्यैव (च) विचेष्टितमिदम्"। राजा क्षणं विचिन्त्य आह,—"अस्ति तावदेवं. मम दुर्भाग्यमेतत्। तथा चोक्तम्,—

---

रचनानुकूलः षड्गुणान्तर्गतगुणविशेषः इत्यर्थः, परस्परमेलनमिति यावत्, तमवलम्ब्य विरचितः प्रबन्धोऽपि सन्धिरुच्यते उपचारात्। तथा च इतः प्रभृति सन्धिविषयिणी कथा प्रस्तूयताम् इत्यर्थः। [सम्+धा+भावे कि-प्रत्ययः]।

(१) विग्रहकथानुसारिकथां प्रस्तौति, वृत्ते इति।—निहता विनष्टा, सेना बलं ययोस्तयोः, राज्ञोः नृपयोः, हिरण्यगर्भ-चित्रवर्णयोः इत्यर्थः, महति प्रवृद्धे, सङ्ग्रामे युद्धे, वृत्ते अतीते, निष्पन्ने सति इत्यर्थः, स्थेयाभ्यां विवादनिर्णेतृभ्यां, मध्यस्थाभ्यामिति यावत्, ("स्थेयो विवादपक्षस्य निर्णेतरि पुरोहिते" इति मेदिनी), गृध्रचक्राभ्यां दूरदर्शि-सर्वज्ञनामभ्यां मन्त्रिभ्यामित्यर्थः, क्षणात् स्वल्पकालेनैव, वाचा वाक्येन, स्वस्वनृपाय उपदेशं दत्त्वा इत्यर्थः, सन्धिः राज्ञोः परस्परं मैत्रीसंस्थापनं, कृतः सम्पादितः।

(ग) पारक्येण—परकीयेण, विपक्षपक्षीयेण इत्यर्थः। विपक्षप्रयुक्तेन—शत्रुनियुक्तेन चरेण।

(घ) निष्कारणबन्धुः,—अकृत्रिममित्रम् अहेतुकमित्रं वा।

(ङ) असौ—स इत्यर्थः, यद्वा,—दुर्गदाहादिरुपायास्तत्कीर्त्तेः सदातनेऽपि विद्यमानत्वात् तस्यापि प्रत्यक्षायमाणत्वद्योतनार्थम् असौ इति निर्द्देशः। सपरिवारः—सपरिजनः।

(च) विचेष्टितं—विरुद्धचेष्टितं, दुष्कार्य्यम् इत्यर्थः। [भावे क्तः]।

अपराधः स दैवस्य न पुनर्मन्त्रिणामयम् ।
कार्य्यं सुघटितं यत्नात् दैवयोगाद्विनश्यति" ॥ २ ॥

मन्त्री ब्रूते,—"उक्तमेवैतत्,—

विषमां हि दशां प्राप्य दैवं गर्हयते नरः ।
आत्मनः कर्मदोषांस्तु नैव जानात्यपण्डितः ॥ ३ ॥

तथ,—सुहृदां हितकामानां यो वाक्यं नाभिनन्दति ।
स कूर्म इव दुर्बुद्धिः काष्ठात् भ्रष्टो विनश्यति" ॥ ४ ॥

राजाऽऽह,—"कथमेतत् ?" । मन्त्री कथयति,—

कूर्म-हंसद्वयकथा ।—

"अस्ति मगधदेशे (क) फुल्लोत्पलाभिधानं सरः । तत्र

---

(२) स्वबुद्धिदोषादापतितस्यानिष्टस्य दैवमेव मूलं मत्वा आह, अपराध इति ।—यत्नात् बहुायासेन, सुघटितं निश्चितत्वेन साधितम्, अपीति शेषः, कार्य्यं कर्म, दैवयोगात् विधिवशात्, दैवदुर्विपाकवशात् इति यावत्, विनश्यति ध्वंसते, इति यत् सः कार्य्यध्वंसरूपः, अपराधः दोषः, दैवस्य विधेरेव, अयम् अपराधः, मन्त्रिणां कार्य्यसहायानां सचिवानां, पुनः न नैव, ("स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः" इत्यमरः)। न कोऽपि दैवस्य द्वाराणि पिधातुं शक्नोति इति भावः ।

(३) निर्बोधस्य प्रकृतिमाह, विषमामिति ।—अपण्डितः मूढः, नरः मानवः, विषमां विपरीतां, क्लेशबहुलामित्यर्थः, दशाम् अवस्थां, प्राप्य लब्ध्वा, दैवं हि विधिमेव, भाग्यमिति यावत, गर्हयते निन्दति, तु किन्तु, आत्मनः स्वस्य, कर्मदोषान् स्वकार्य्यजनितापराधान्, मन्दबुद्धिजनितकार्य्यापाटवानित्यर्थः, नैव जानाति न हि बुध्यते, न स्वीकरोतीत्यर्थः, त्वन्तु तथाविधो मूर्खं इति भावः ।

(४) मित्रवाक्याग्रहणस्य परिणाममाह, सुहृदामिति ।—यः जनः, हितकामानां हितैषिणां, सुहृदां बन्धूनां, वाक्यं वचनं, न अभिनन्दति न समाद्रियते, समादरपूर्वकं न शृणोतीत्यर्थः, स दुर्बुद्धिः मन्दमतिः, काष्ठात् दारुखण्डात्, हंसाभ्यां नीयमानादित्यर्थः, भ्रष्टः पतितः, स्खलित इति यावत, कूर्मः कच्छपः इव, विनश्यति म्रियते, अवज्ञात-मित्र-हितोपदेशस्य अवश्यम्भाविनी विपत्तिरिति भावः ।

(क) फुल्लोत्पलाभिधानं—फुल्लानि विकसितानि, ["ञि फला विसरणे"

(ज) चिरात् सङ्कटविकटनामानौ हंसौ निवसतः। तयोर्मित्रं कम्बुग्रीवनामा कूर्मश्च प्रतिवसति। अथैकदा (झ) धीवरैरागत्य तत्रोक्तं यत्,—"अत्र अस्माभिरद्य (ञ) उषित्वा प्रातर्मत्स्यकूर्मादयो व्यापादयितव्याः"। तदाकर्ण्य कूर्मो हंसावाह,—"सुहृदौ! श्रुतोऽयं धीवरालापः? अधुना किं मया कर्त्तव्यम्?"। हंसौ आहतुः,—"ज्ञायतां पुनः (ट) तावत्, पश्चात् यदुचितं तत् कर्त्तव्यम्"। कूर्मो ब्रूते,—(ठ) "मैवम्; यतो (ड) दृष्टव्यतिकरोऽहमत्र। तथा चोक्तम्,—

अनागतविधाता च प्रत्युत्पन्नमतिस्तथा।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति" ॥ ५ ॥

तावाहतुः,—"कथमेतत्?"। कूर्मः कथयति,—

---

इति धातोः "जीतः क्तः" (३।२।१८७ पा०) इति क्तः, "आदितश्च" (७।२।१६ पा०) इति इडभावः "ति च" (७।४।८९ पा०) इति अकारस्य उकारः, "अनुपसर्गात् फुल्लक्षीब—" (८।२।५५ पा०) इति निपातनात् निष्ठा-तस्य लत्वम्। यद्वा,—"फुल्ल विकसने" इति धातोः पचाद्यच्], उत्पलानि पद्मानि यस्मिन् तत् अभिधानं नाम यस्य तादृशम्।

(ज) चिरात्—बहुकालावधि।

(झ) धीवरैः,—कैवर्त्तैः, मत्स्योपजीविभिरित्यर्थः।

(ञ) उषित्वा—अवस्थाय। [वस+क्त्वा "वसतिक्षुधोरिट्" (७।२।५२ पा०) इति इट्]।

(ट) तावत्—साकल्येन, विशेषेणेत्यर्थः। ("यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः)।

(ठ) मैवम्—एवं पश्चात् यदुचितं तत् कर्त्तव्यमित्येवंरूपं न कथय इत्यर्थः।

(ड) दृष्टव्यतिकरः,—दृष्टः प्रत्यक्षीकृतः, व्यतिकरः व्यसनं येन स तथोक्तः, ("अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः" इति मेदिनी) अस्मिन् सरसि मत्स्यवर्गस्य या विपत् घटिता सा मया प्रत्यक्षीकृतेत्यर्थः।

(५) व्यतिकरं दर्शयति, अनागतेति।—अनागतस्य अनुपस्थितस्य, भाविनोऽनिष्टस्येत्यर्थः, विधाता प्रतिविधानकर्त्ता, तथा प्रत्युत्पन्नमतिश्च प्रत्युत्पन्ना

* मत्स्यत्रयकथा ।—

"पुरा एतस्मिन् एव सरसि एवंविधेषु एव धीवरेषु उपस्थितेषु मत्स्यत्रयेण (ढ) आलोचितम् । तत्र अनागतविधाता नाम एको (ण) मत्स्यः । तेनोक्तम्,—"अहं तावत् जलाशयान्तरं गच्छामि" इत्युक्त्वा स ह्रदान्तरं गतः । अपरेण प्रत्युत्पन्नमतिनाम्ना मत्स्येनाभिहितं,—(त) "भविष्यदर्थे प्रमाणाभावात् कुत्र मया गन्तव्यम् ? तदुत्पन्ने कार्य्ये यथाकार्य्यमनुष्ठेयम् । तथा चोक्तम्,—

उत्पन्नामापदं यस्तु समाधत्ते स बुद्धिमान् ।
वणिजो भार्य्यया जारः प्रत्यक्षे निह्नुतो यथा" ॥ ६ ॥

---

प्रतिभान्विता, तत्कालोचिता इत्यर्थः, कार्य्यसाधनानुकूला इति यावत्, मतिः बुद्धिर्यस्य सः, एतौ द्वौ, मत्स्यौ इति शेषः, सुखं सुखेन, एधेते वर्द्धेते, कुशलेन वर्त्तेते इत्यर्थः, यद्भविष्यः यत् भविष्यत् अवश्यम्भाव्यं तत् भविष्यत्येव इति ज्ञानं यस्य सः [भू+शतृ "लृटः सद्वा" (३।३।१४ पा०) इति शतृ-स्यट् पृषोदरादित्वात् तकारलोपश्च] यद्भविष्याऽऽख्यः दैवनिर्भरशीलः तृतीयः मत्स्य इत्यर्थः, विनश्यति म्रियते । (भारतशान्तिपर्वीयापद्धर्म्मव्याख्यानप्रकरणे "यद्भविष्यः" इत्यत्र "दीर्घसूत्रः" इति पाठान्तरम् । श्लोकोऽयं वृद्धचाणक्येऽपि दृश्यते ) ।

(ढ) आलोचितं—विवेचितं, परस्परं जल्पितमित्यर्थः ।

(ण) मत्स्यः, आसीदिति शेषः ।

(त) भविष्यदर्थे प्रमाणाभावात्—भविष्यन् भावी, योऽर्थः विषयः तस्मिन्, प्रमाणस्य प्रमातुः, श्वः किं भविष्यति इत्यस्य निःसंशयं प्रमाणकर्त्तुरित्यर्थः, अभावात् । उत्पन्ने—उपस्थिते । यथाकार्य्यं—कार्य्यानुसारेण ।

(६) प्रत्युत्पन्नमतेः प्रशंसामाह, उत्पन्नामिति ।—यस्तु जनः, उत्पन्नाम् उपस्थिताम्, आपदं विपत्तिं, समाधत्ते प्रतिकरोति, स एव बुद्धिमान् प्राज्ञः, यथा येन प्रकारेण, यया बुद्ध्या इत्यर्थः, वणिजः कस्यचित् सार्थवाहस्य, पण्याजीवस्य इति यावत्, भार्य्यया स्त्रिया, प्रत्यक्षे पत्युः चक्षुर्गोचरे एव, जारः उपपतिः, निह्नुतः

---

* कथेयं महाभारतीयशान्तिपर्वणि आपद्धर्म्मप्रकरणे छन्दोनिबद्धा ।

यद्भविष्यः पृच्छति,—"कथमेतत् ?"। प्रत्युत्पन्नमतिः कथयति,—

वणिग्-वणिग्वधू-भृत्यकथा ।—

"अस्ति विक्रमपुरे समुद्रदत्तो नाम वणिक्। तस्य रत्नप्रभानाम्नी बधूः केनापि स्वसेवकेन समं सर्वदा रमते। यतः,—

न स्त्रीणामप्रियः कश्चित् प्रियो वाऽपि न विद्यते।
गावस्तृणमिवारण्ये प्रार्थयन्ते नवं नवम् ॥ ७ ॥

अथैकदा सा रत्नप्रभा तस्य सेवकस्य मुखे चुम्बनं ददती समुद्रदत्तेन आलोकिता। ततः सा (थ) बन्धकी सत्वरं भर्त्तुः समीपमुपगम्य आह,—"नाथ! एतस्य सेवकस्य महती (द) निर्वृतिः, यतोऽयं (ध) युष्मदर्थं नीयमानं कर्पूरम् (न) अश्नाति; कर्पूरगन्धः प्रत्यक्षोऽस्य मुखे मया आघ्रातः"। तथा चोक्तम्,—

---

अपलपितः, गोपित इत्यर्थः, नायं मे जारः इति स्वामी विश्वासितः इति यावत्। ("अपलापस्तु निह्नवः" इत्यमरः)

(७) नेति।—स्त्रीणां रमणीनाम्, अप्रियः अनभिमतः, कश्चित् कोऽपि पुरुषः, न, वा अथवा, प्रियोऽपि अनुरागभाजनमपि, कश्चित् न विद्यते न अस्ति; तथा हि गावः सौरभेय्यः, अरण्ये वने, तृणमिव ग्रस्यं यथा, नवं नवं नित्यमभिनवं, पुरुषमिति शेषः, प्रार्थयन्ते वाञ्छन्ति, गावो यथा नित्यं नूतनं तृणमभिलषन्ति, तथा स्त्रियोऽपि प्रत्यहं पुरुषान्तरं कामयन्ते इत्यर्थः, "स्त्रियाश्चरितं पुरुषस्य भाग्यं देवा न जानन्ति कुतो मनुष्याः" इति भावः।

(थ) बन्धकी—कुलटा।

(द) निर्वृतिः,—सुखं, सुखाभिलाषः इत्यर्थः। ("निर्वृतिः स्वस्थितावस्तंगमने च सुखे स्त्रियाम्" इति मेदिनी)।

(ध) युष्मदर्थं—त्वन्निमित्तम्। नीयमानं—प्राप्यमाणम्, आपणादानीयमानमित्यर्थः, ("युष्मदर्थं नीयमानम्" इत्यत्र "चौरिकां कृत्वा" इति पाठान्तरम्)।

(न) अश्नाति—भक्षयति।

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा।
षड्‌गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः॥ ८॥

तदाकर्ण्य सेवकेनापि (प) उपक्रुश्य उक्तं,—"यस्य गृहे ईदृशी भार्य्या, तत्र सेवकेन कथं स्थातव्यम्? यत्र च (फ) प्रतिक्षणं गृहिणी सेवकस्य मुखं जिघ्रति"। ततोऽसौ उत्थाय चलितः, (ब) साधुना च यत्नात् प्रबोध्य धृतः। अतोऽहं ब्रवीमि,—'उत्पन्नामापदम्' इत्यादि।

[इति वणिग्-वणिग्वधू-भृत्यकथा]।

ततो यज्ञविष्णेणोक्तम्,—

"यदभावि न तद्भावि भावि चेन्न तदन्यथा।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते?"॥ ९॥

---

(८) पुरुषापेक्षया स्त्रीणां वैशिष्ट्यमाह, आहार इति।—स्त्रीणां रमणीनाम्, आहारः भोजनं, द्विगुणः पुरुषापेक्षया द्विगुणाधिक इत्यर्थः, तासां बुद्धिः मतिः, चतुर्गुणा, व्यवसायः उद्यमश्च, षड्गुणः, कामश्च रमणेच्छा भोगवासना वा, अष्टगुणः, सर्वत्र पुरुषापेक्षयेति शेषः, स्मृतः पण्डितैः उक्तः; तथा च सर्वात्मना आसां चातुर्य्यम् अतिरिच्यते पुरुषेभ्य इति भावः।

(प) उपक्रुश्य—निन्दित्वा, गृहिणीमिति शेषः। ("उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे" इत्यमरः)।

(फ) प्रतिक्षणं—नियतकालं, सर्वदा इत्यर्थः। [क्षणे क्षणे इति वीप्सायाम् अव्ययीभावः]।

(ब) साधुना—वार्द्धुषिकेण, कुसीदजीविना वणिजा इत्यर्थः। ("साधुर्वार्द्धुषिके चारौ सज्जने चाभिधेयवत्" इति मेदिनी)।

(९) स्वाभीष्टां भवितव्यतामेव समर्थयितुमाह, यदिति।—यत् अभावि अवश्यं न भविष्यति, तत् न भावि कदापि न भविष्यति एव, ["भविष्यति गम्यादयः" (३।३।३ पा०) इति भविष्यदर्थे "आवश्यकाधमर्ण्ययोर्णिनिः" (३।३।१७० पा०) इति णिनिः] भावि चेत् अवश्यं भविष्यच्चेत, तदन्यथा तद्विपरीतं न, भविष्यतीति शेषः, इति एवं निश्चित्य इत्यर्थः, चिन्ताविषघ्नः चिन्तारूपविषनाशकः, चिन्ताजनितदुःसहक्लेशनाशकः इत्यर्थः, अयं पूर्वोक्तरूपः, अगदः नाशि

ततः प्रातर्जालेन बद्धः प्रत्युत्पन्नमतिः (भ) मृतवदात्मानं सन्दर्श्य स्थितः। ततो जालात् (म) अपसारितः स्थलादुत्प्लुत्य गभीरं नीरं प्रविष्टः। यद्भविष्यश्च धीवरैः प्राप्तो व्यापादितः। अतोऽहं ब्रवीमि,—'अनागतविधाता' इत्यादि।

[ इति मत्स्यत्रयकथा ]।

तत् यथाऽहमन्यं ह्रदं प्राप्नोमि, तदद्य विधीयताम्"। हंसावाहतुः,—"जलाशयान्तरे प्राप्ते तव कुशलं, स्थले गच्छतस्ते (य) को विधिः?"। कूर्मो ब्रूते,—"यथाऽहं भवद्भ्यां सह (र) आकाशवर्त्मना यामि स उपायो विधीयताम्"। हंसौ ब्रूतः,—"कथमुपायः सम्भवति?"। कच्छपो वदति,—"युवाभ्यां चञ्चुधृतं काष्ठखण्डमेकं मया मुखेन (ल) अवलम्बितव्यम्, अतो भवतोः (व) पक्षबलेन मयाऽपि सुखेन गन्तव्यम्"। हंसौ ब्रूतः,—"सम्भवति एष उपायः। किन्तु,—

उपायं चिन्तयन् प्राज्ञस्त्वपायमपि चिन्तयेत्।
पश्यतो वकमूर्खस्य नकुलैर्भक्षिताः सुताः" ॥१०॥

कूर्मः पृच्छति,—"कथमेतत्?"। हंसौ कथयतः,—

---

यदी रोगः यस्मात् सः औषधं, किं कथं, न पीयते? न सेव्यते?, जनैरिति शेषः, भाग्ये यदस्ति तत् भविष्यत्येव, तदर्थमुद्वेगो निष्प्रयोजनः एव निखिल चिन्ता परिहरणीयेति भावः।

(भ) मृतवत्—गतप्राणमिव।

(म) अपसारितः,—उन्मोचितः। उत्प्लुत्य—उल्लम्फ्य।

(य) को विधिः?—किं विधानम्? का व्यवस्था इत्यर्थः, जलचरस्य ते स्थले रक्षायाः क उपायो भविष्यतीति निष्कर्षः।

(र) आकाशवर्त्मना—नभोमार्गेण।

(ल) अवलम्बितव्यं—गृहीतव्यमित्यर्थः।

(व) पक्षबलेन—पतत्त्रसाहाय्येन।

(१०) उपायमिति।—प्राज्ञः बुद्धिमान् जनः, उपायं साधनं, चिन्तयन्

वक-सर्प-नकुलकथा ।—

"अस्ति (श) उत्तरापथे गृध्रकूटो नाम पर्वतः। तत्रैव (ष) रेवातीरे न्यग्रोधपादपे वका निवसन्ति। तस्य वटस्य (स) अधस्तात् विवरे सर्पस्तिष्ठति, स च वकानां बालापत्यानि खादति। ततः शोकार्त्तानां वकानां विलापं श्रुत्वा केनचित् वृद्धवकेन उक्तं,—"भोः ! (ह) एवं कुरुत यूयं,—मत्स्यान् आनीय नकुलविवरादारभ्य सर्पविवरं यावत् (क) पङ्क्तिक्रमेण एकैकशो विकिरत ; ततः (ख) तदाहारवर्त्मना नकुलैरागत्य सर्पः द्रष्टव्यः, (ग) स्वभावद्वेषात् व्यापादयितव्यश्च"। तथा अनुष्ठिते सति तद्वृत्तम्। अथ नकुलैर्वृक्षोपरि पक्षिशावकानां

---

उद्भावयन्, अपायं विपदमपि, अनन्तरभाव्यमित्यर्थः, चिन्तयेत् आध्यायेत्, आशङ्केत इत्यर्थः, एतत्कार्य्यसम्पादने अयमुपायो भवितुमर्हति, परन्तु अत्र ईदृशी विपत्तिः सङ्घटेत चेत् कस्तत्र प्रतीकारः? एवं चिन्ताऽपि कार्य्या इति समुदितार्थः, तु-शब्दोऽत्र पूरणार्थकः ; तथा हि, नकुलैः बभ्रुभिः, सर्पवैरिजन्तुविशेषैरित्यर्थः, पश्यतः प्रत्यक्षमवलोकयतः, वकमूर्खस्य मूर्खस्य वकस्य, पश्यन्तं वकम् अनादृत्येत्यर्थः, ["षष्ठी चानादरे" (२।३।३८ पा०) इति षष्ठी] अपायचिन्तामकुर्वत इति यावत्, सुताः तनयाः, भक्षिताः खादिताः।

(श) उत्तरापथे—कुरुक्षेत्राद्युत्तरप्रदेशे। गृध्रकूटः,—गृध्रः पक्षिविशेषः, कूटे शिखरे यस्य सः।

(ष) रेवातीरे—नर्मदातटे। न्यग्रोधपादपे—वटवृक्षे।

(स) अधस्तात्—तलदेशे। विवरे—गर्त्ते। बालापत्यानि—शिशुसन्तानान्।

(ह) एवं—वक्ष्यमाणं ममोपदेशानुयायि कर्म्म।

(क) पङ्क्तिक्रमेण—श्रेणीबद्धरूपेण, अविच्छिन्नभावेन इत्यर्थः। विकिरत—विक्षिपत, स्थापयत इत्यर्थः।

(ख) तदाहारवर्त्मना—तेषां मत्स्यानाम्, आहाराय भोजनाय, तान् भोक्तुमित्यर्थः, यत् वर्त्म मार्गः तेन, यस्मिन् मार्गे मत्स्या विक्षिप्ताः, तं मार्गमनसृत्येत्यर्थः।

(ग) स्वभावद्वेषात्—सहजवैरात्, अहिनकुलयोः नैसर्गिकशत्रुभावादित्यर्थः।

(घ) राव: श्रुत:। पश्चात् तै: वृक्षमारुह्य वकशावका: खादिता:। अत आवां ब्रूव:,—'उपायं चिन्तयन्' इत्यादि।

[ इति वक-सर्प-नकुलकथा ]।

आवाभ्यां नीयमानं त्वां दृष्ट्वा लोकै: किञ्चित् वक्तव्यमेव। तदाकर्ण्य यदि त्वमुत्तरं ददासि, तदा तव मरणं भविष्यति। तत् सर्वथा अत्रैव स्थीयताम्"। कूर्मो वदति,—"तत् किमहमज्ञ: ? नाहमुत्तरं दास्यामि ; न किमपि मया वक्तव्यम्"। तत एवमनुष्ठिते सति आकाशे नीयमानं तं कूर्ममालोक्य सर्वे गोरक्षका: पश्चात् धावन्ति, वदन्ति च,—"अहो महदाश्चर्य्यम् !! पक्षिभ्यां कूर्म: (ङ) समुह्यते"। तत्र कश्चिदाह,—"यदि अयं कूर्म: पतति, तदा अत्रैव पक्त्वा खादितव्य:"। कोऽपि (च) निगदति,—"गृहं नेतव्य:"। कश्चित् वदति,—"सरस: समीपे पक्त्वा भक्षितव्य:"। तत् (छ) परुषवचनमाकर्ण्य क्रोधात् (ज) विस्मृतसंस्कार: कूर्मोऽवदत्,—"युष्माभिर्भस्म भक्षितव्यम्" इति वदन्नेव काष्ठात् पतित: (झ) गोरक्षकै-र्व्यापादितश्च। अतोऽहं ब्रवीमि,—'सुहृदां हितकामानाम्' इत्यादि"।

[ इति कूर्म-हंसद्वयकथा ]।

---

(घ) राव:,—कूजनं, शब्द इत्यर्थ:।

(ङ) समुह्यते—सन्नीयते, आकाशवर्त्मना अभीष्टस्थानं प्राप्यते इत्यर्थ:। [ सम्+वह+कर्म्मणि लट्-ते ]।

(च) निगदति—वदति।

(छ) परुषवचनं—कर्कशवाक्यम्।

(ज) विस्मृतसंस्कार:,—विस्मृत: स्मरणबहिर्भूत:, संस्कार: न मया किञ्चित् वक्तव्यमिति दृढज्ञानविशेष: येन स तथोक्त:।

(झ) गोरक्षकै:,—गोपालै:।

अथ प्रणिधिर्बकस्तत्राऽऽगत्योवाच,—"देव! प्रागेव मया निवेदितं, दुर्गशोधनं प्रतिक्षणं कर्त्तव्यमिति। तच्च युष्माभिर्न कृतम्, अतः (ञ) तदनवधानस्य फलमिदमनुभूतम्। दुर्गदाहश्च अयं मेघवर्णनाम्ना वायसेन गृध्रप्रयुक्तेन कृतः"। राजा निश्वस्याऽऽह,—

"प्रणयादुपकाराद्वा यो विश्वसिति शत्रुषु।
स सुप्त इव वृक्षाग्रात् पतितः प्रतिबुध्यते" ॥ ११ ॥

अथ प्रणिधिरुवाच,—"इतो दुर्गदाहं विधाय यदा गतो मेघवर्णः, तदा चित्रवर्णेन (ट) प्रसादितेन उक्तम्—"अयं मेघवर्णोऽत्र कर्पूरद्वीपराज्ये अभिषिच्यताम्। तथा चोक्तम्,—

कृतकृत्यस्य भृत्यस्य कृतं नैव प्रणाशयेत्।
फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत् ॥१२॥ इति"।

(ञ) तदनवधानस्य—तस्य प्रमादस्य।

(११) प्रणयादिति।—यः जनः, प्रणयात् सौहार्द्दात्, कपटतायुक्तादित्यर्थः, उपकारात् हिताचरणाद्वा, यद्वा,—शत्रुणा सह प्रणयं संस्थाप्य शत्रोरुपकारं कृत्वा वा इत्यर्थः, शत्रुषु वैरिषु, विश्वसिति प्रत्येति, ममायं बन्धुरिति दृढं जानातीत्यर्थः, स जनः, वृक्षाग्रात् वृक्षोपरिभागात्, वृक्षायमारुह्य इत्यर्थः, सुप्तः निद्रितः सन्, पतित इव घट इव, प्रतिबुध्यते जागर्त्ति, चैतन्यं लभते इत्यर्थः, विपन्नः सन् तं जानातीति यावत्, यः वृक्षशाखामधिष्ठाय स्वस्थः निद्राति, स यथा निपत्य आहतः स्वस्य निर्बुद्धितां विजानाति, तथा यः शत्रोरुपकारं कृत्वा तेन सौहार्द्दं कृत्वा वा तं विश्वस्य निश्चिन्तो वर्त्तते, स तेन प्रवञ्चितः सन् आत्मनो बुद्धिविभ्रमं विज्ञातुं शक्नोतीति समुदितार्थः। ("योऽरिणा सह सन्धाय सुखं स्वपिति विश्वसन्। स वृक्षाग्रे प्रसुप्तो वा पतितः प्रतिबुध्यते" ॥ इति महाभारतशान्तिपर्वीयापद्धर्म्मव्याख्यान-प्रकरणोक्तपाठः)।

(ट) प्रसादितेन—प्रसादः अनुग्रहः सञ्जातः अस्य तेन, जातानुग्रहेण, सञ्जातसन्तोषेणेत्यर्थः। [तारकादित्वादितच्]। यद्वा,—प्रसादितेन—अनुग्राहितेन, मेघवर्णकर्त्तृकसन्तोषितेनेत्यर्थः।

(१२) कृतकृत्यः सेवकः सर्वथा पुरस्कार्य्य इत्याह, कृतेति।—कृतं सम्पादितं,

चक्रवाको ब्रूते,—"देव ! श्रुतं यत् प्रणिधिः कथयति ?"। राजा आह,—"ततस्ततः"। प्रणिधिरुवाच,—"ततः प्रधानमन्त्रिणा गृध्रेण उक्तं,—"देव ! न इदमुचितं, (ठ) प्रसादान्तरं किमपि क्रियताम्। यतः,—

अधिकारेण यो युक्तः कथं तस्यास्ति खण्डनम्।
नीचेषूपकृतं राजन् ! वालुकास्विव मुद्रितम् ॥ १२ ॥

कृत्यं स्वकर्त्तव्यं येन तस्य, संसाधितस्वनियोगस्य इत्यर्थः, भृत्यस्य अनुजीविनः, कृतं साधितं कर्म, नैव प्रणाशयेत् नैव अपलपेत्, नेदं कार्य्यमनेन सम्पादितमित्यायुक्त्वा तस्य कार्य्यं नैव अस्वीकुर्य्यादित्यर्थः, दानमानादिकमकृत्वा नैव विफलीकुर्य्यात् इत्यर्थो वा ; प्रत्युत फलेन पुरस्कारादिप्रदानेन, मनसा हृद्गतसन्तोषभावप्रकटनेन, वाचा मधुरवाक्येन, दृष्ट्या प्रसन्नावलोकनेन च, एनं भृत्यं, प्रहर्षयेत् सन्तोषयेत्, सर्वथा तस्य चित्ततोषं विदध्यादित्यर्थः ; अन्यथा न पुनरस्मिन् प्रवर्त्तेत इति भावः।

(ठ) प्रसादान्तरम्—अन्यविधमनुग्रहम्, अन्यं पुरस्कारम् इत्यर्थः।

(१२) अधिकारानुरूपः पुरस्कारः दातव्यः, न त्वननुरूपः इति दर्शयति, अधिकारेणेति।—यः जनः, अधिकारेण शासनादि कर्मणा, युक्तः नियुक्तः, यस्मिन् यस्य कार्य्यस्य भारोऽस्तीत्यर्थः, तस्य जनस्य, कथं केन प्रकारेण, खण्डनं स्वकार्य्यस्य विध्वंसनम्, अकरणमित्यर्थः, तस्य कार्य्यस्य असम्पादनमिति यावत्, अस्ति ? भवति ? न कदापि युज्यते इत्यर्थः, यो यस्मिन् कार्य्ये नियुक्तः, तेन तत् कार्य्यमवश्यमेव सम्पादनीयं, न तदर्थं स पुरस्कारमर्हति, तथाऽप्यनुजीविनामुत्साहवर्द्धनार्थं ददाति चेत् पदानुरूपमेव देयं, न तु तदधिकं, यतः सामान्यभृत्येषु अधिकदानं दोषायैव भवति इति भावः ; तथा हि, हे राजन् ! नीचेषु नीचवंश्येषु, क्षुद्रभृत्येषु इति यावत्, विषये, उपकृतमुपकारः, येन दानेन तस्य महानुपकारो भवति एवम्भूतं राजपदादिदानरूपमिति भावः ; वालुकासु सिकतासु, मुद्रितमङ्कितमिव, भवतीति शेषः, वालुकासु रेखापातो यथा अचिरेणैव विलुप्तो भवति, तथा नीचेषु उपकारोऽपि क्षुद्राशयत्वेन उपकारविस्मरणात् निष्फलो भवतीत्यर्थः, नीचभृत्योऽयं वायसः कदापि राजपददानेन नोपकर्त्तव्यः, स्वभावतः एव नीचाशयत्वादिति भावः ; यद्वा,—यः अधिकारेण स्वामित्वभृत्यत्वादिरूपेण, युक्तः, तस्य खण्डनं निरर्थं,

महताम् (ङ) आस्पदे नीचः कदाऽपि न कर्त्तव्यः। तथा चोक्तम्,—

नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तुमिच्छति।
मूषिको व्याघ्रतां प्राप्य मुनिं हन्तुं गतो यथा" ॥ १४ ॥

चित्रवर्णः पृच्छति,—"कथमेतत्?"। गृध्रः कथयति,—

* मुनि-मूषिकशावककथा।—

"अस्ति (ढ) गौतमारण्ये महातपा नाम मुनिः। तेन आश्रमसन्निधाने मूषिकशावकः काकमुखाद्भ्रष्टो दृष्टः। ततो दयायुक्तेन तेन मुनिना (ण) नीवारकणैः संवर्द्धितः। तच्च मूषिकं खादितुमनुधावन् विड़ालो मुनिना दृष्टः। पश्चात्

---

स्वाधिकारविभ्रंश इति यावत्, कथम् भवति? स्वामी स्वाम्यधिकारे भृत्यश्च भृत्याधिकारे एव स्थास्यति, स्वाधिकारखण्डनं कदापि न युज्यते, अतः भृत्योऽयं भृत्याधिकारे एव स्थापयितव्यः, न राज्याधिकारे इति भावः।

(ङ) आस्पदे—पदे, अधिकारे इति यावत्, ("आस्पदं पदकृत्ययोः" इति मेदिनी)।

(१४) अपात्रे महादानस्य अनिष्टकरत्वं बोधयितुं भारतशान्तिपर्व्वीयराजधर्म्मव्याख्यानप्रकरणोक्तं श्लोकं प्रमाणयति, नीच इति।—नीचः क्षुद्रो जनः, श्लाघ्यपदम् उच्चाधिकारं, श्लाघ्यस्य प्रशस्तस्य, महतः इत्यर्थः, पदम् अधिकारमित्यर्थो वा, प्राप्य लब्ध्वा, स्वामिनं प्रभुं, यत्प्रसादेन श्लाघ्यपदं प्राप्तवान् तमेव इत्यर्थः, हन्तुं नाशयितुम्, इच्छति काङ्क्षति। तत्र दृष्टान्तमाह,—यथा यद्वत, मूषिकः कश्चित् क्षुद्रः उन्दुरुः, व्याघ्रतां शार्दूलत्वं, प्राप्य आसाद्य, मुनिं स्वभाग्यविधातारं तापसं, हन्तुं विनाशयितुं, गतः उद्यतः इत्यर्थः, आसीदिति शेषः, नीचाः प्रायश एव कृतघ्ना भवन्ति, अतो नायं नीचो व्याघ्रः राजपदमर्हतीति भावः।

(ढ) गौतमारण्ये—गौतमस्य मुनेः तपोवने।

(ण) नीवारकणैः,—नीवाराः तृणधान्यविशेषाः, तेषां क्षुद्रांशैः। ("कणो धान्यांशलेशयोः" इति मेदिनी)।

---

* कथेयं महाभारतीयशान्तिपर्व्वोक्तराजधर्म्मव्याख्यानप्रकरणात् विष्णुशर्म्मणा किञ्चित् परिवर्त्त्य सङ्गृहीता।

तपःप्रभावात् तेन मुनिना स मूषिको बलिष्ठो विड़ालः कृतः। स विड़ालः कुक्कुरात् बिभेति। ततोऽसौ कुक्कुरः कृतः। कुक्कुरस्य व्याघ्रात् महद्भयम्। तदनन्तरं स व्याघ्रः कृतः। अथ तं व्याघ्रमपि मुनिः (त) मूषिकनिर्विशेषं पश्यति। अतः सर्वे तत्रस्था जनास्तं व्याघ्रं दृष्ट्वा वदन्ति,—"अनेन मुनिना मूषिकोऽयं व्याघ्रतां नीतः"। एतत् श्रुत्वा स व्याघ्रः (थ) सव्यथोऽचिन्तयत्,—"यावदनेन मुनिना जीवितव्यं, तावदिदं मम (द) स्वरूपाख्यानम् (ध) अकीर्त्तिकरं (न) न पलायिष्यते" इति समालोच्य मुनिं हन्तुं समुद्यतः। मुनिस्तस्य (प) चिकीर्षितं ज्ञात्वा "पुनर्मूषिको भव" इत्युक्त्वा मूषिक एव कृतः। अतोऽहं ब्रवीमि,—'नीचः श्लाघ्यपदं प्राप्य' इत्यादि।

[ इति मुनि मूषिककथावक्रकथा ]।

अपरञ्च देव! (फ) सुकरमिदमिति न मन्तव्यम्। शृणु,—

भक्षयित्वा बहून् मत्स्यानुत्तमाधममध्यमान्।
अतिलौल्यात् बको मूर्खो मृतः कर्कटसङ्ग्रहात्" ॥१५॥

(त) मूषिकनिर्विशेषं—मूषिकात् नास्ति विशेषः आतिशय्यं यस्मिन् तद्-यथा तथा, मूषिकतुल्यमित्यर्थः।

(थ) सव्यथः,—दुःखितान्तःकरणः।

(द) स्वरूपाख्यानं—मूषिकोऽयमिति यथार्थवृत्तान्तकीर्त्तनम्।

(ध) अकीर्त्तिकरम्—अयशस्करम्।

(न) न पलायिष्यते—न अपयास्यति। समालोच्य—विनिश्चित्य।

(प) चिकीर्षितं—कर्त्तुमिष्टम्, अभिप्रायम् इत्यर्थः। [ कृ+सन्+क्तः ]।

(फ) सुकरं—सुखसाध्यम्, अनायासेनैव सम्पाद्यमित्यर्थः। इदं—हिरण्यगर्भस्य राज्यापहरणं कृत्वा वायसाय तत्समर्पणरूपं कार्य्यमित्यर्थः।

(१५) असुकरत्वं बोधयितुं बककुलीरकयोरुपाख्यानमवतारयति, भक्षयित्वेति।—मूर्खो निर्बोधः, बकः पक्षिविशेषः, उत्तमाधममध्यमान् बृहन्मध्यमक्षुद्राकृतीन्, बहून् अनेकविधान्, मत्स्यान् मीनान्, भक्षयित्वा खादित्वा, अतिलौल्यात्

चित्रवर्णः पृच्छति,—"कथमेतत् ?"। मन्त्री कथयति,—

वृद्धबक-मत्स्य-कुलीरककथा।—

"अस्ति (व) मालवविषये पद्मगर्भाभिधानं सरः। तत्रैको वृद्धवकः सामर्थ्यहीनः (भ) उद्विग्नमिवात्मानं दर्शयित्वा स्थितः। स च केनचित् (म) कुलीरकेण दूरादेव दृष्टः पृष्टश्च,—"किमिति भवान् अत्र आहारपरित्यागेन तिष्ठति?"। वकेन उक्तं,—"मत्स्या मम (य) जीवनहेतवः; मत्स्याश्च अत्र अवश्यमेव कैवर्त्तैर्व्यापादयितव्या इति (र) नगरोपान्ते कैवर्त्तालापः आकर्णितः। तत् (ल) इतो वर्त्तनाभावादेव अस्मन्मरणमुपस्थितमिति ज्ञात्वा आहारेऽपि अनादरः कृतः"। ततः सर्वैर्मत्स्यैरालोचितम्,—"इह समये तावदुपकारक एवायमुपलक्ष्यते अस्माकम्। तदयमेव यथाकर्त्तव्यं पृच्छ्यताम्। तथा चोक्तम्,—

---

अतिलोभात्, कर्कटसङ्ग्रहात् कुलीरकं सङ्गृह्य, लोभातिशयेन परिणाममविविच्येव कर्कटकं तीक्ष्णदंष्ट्रं गृहीत्वेत्यर्थः, [ल्यप्-लोपे पञ्चमी] मृतः पञ्चत्वं गतः, राजहंसस्य राज्ये त्वया लोभो न कर्त्तव्य एव, कृते तु तवापि कर्कटकस्य दशा भविष्यति इति भावः। ("अतिलोभात् बकः पश्चात् मृतः कर्कटकग्रहात्" इत्युत्तरार्द्धस्य पाठान्तरम्)।

(व) मालवविषये—मालवदेशे।

(भ) उद्विग्नमिव—व्याकुलचित्तमिव, कपटेन दुःखितमिवेत्यर्थः।

(म) कुलीरकेण—कर्कटकेन। ("स्यात् कुलीरः कर्कटकः" इत्यमरः)। पृष्टः,—जिज्ञासितः। [प्रच्छ+क्तः]।

(य) जीवनहेतवः,—प्राणरक्षणनिमित्तानि, मत्स्यान् भक्षयित्वैव अहं जीवामीत्यर्थः।

(र) नगरोपान्ते—नगरप्रान्ते। कैवर्त्तालापः,—धीवराणां परस्परकथनम्।

(ल) इतः,—अस्मिन् स्थाने। [सप्तम्यास्तसिल्] इतः,—अस्मादारभ्य इत्यर्थो वा। [पञ्चम्यास्तसिल्]। वर्त्तनाभावात्—जीविकाविरहात्, भक्ष्याभावादित्यर्थः। ("आजीवो जीविका वार्त्ता वृत्तिवर्त्तनजीवने" इत्यमरः)।

उपकर्त्राऽरिणा सन्धिर्न मित्रेणापकारिणा।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः" ॥ १६ ॥

मत्स्या ऊचुः,—"भो वक ! कोऽत्र अस्माकं रक्षणोपायः ?"। वको ब्रूते,—"अस्ति रक्षणोपायो जलाशयान्तराश्रयणम्। तत्राहमेकैकशो युष्मान् नयामि"। मत्स्यैरपि भयादुक्तम्,—"एवमस्तु" इति। ततोऽसौ दुष्टवकस्तान् मत्स्यान् एकैकशो नीत्वा कस्मिंश्चिद्देशे खादित्वा पुनरागत्य वदति,—"ते मया जलाशयान्तरे स्थापिताः"। अनन्तरं कुलीरस्तमुवाच,—"भो वक ! मामपि तत्र नय"। ततो वकोऽपि (व) अपूर्वकुलीर-मांसार्थी सादरं तं नीत्वा स्थले धृतवान्। कुलीरोऽपि (श) मत्स्यकण्टकाकीर्णां भूमिं दृष्ट्वा अचिन्तयत्,—"हा

---

(१६) ननु मित्रमेव सन्धेयं नामित्रमिति हि नीतिः, तत् कथं सहजामित्रमस्माकमयं वकः सन्धाय प्रष्टव्यः ? इत्याशङ्क्याऽऽह, उपकर्त्रेति।—उपकर्त्रा उपकारकेण, अरिणा शत्रुणा, अपीति शेषः, सन्धिः मेलनं, कर्त्तव्य इति शेषः, यावज्जीवमनपायिन्याः बलीयस्याः कृत्रिममित्रताया उत्पन्नत्वादिति भावः ; अपकारिणा अहितकारिणा, मित्रेण सुहृदाऽपि, न, कर्त्तव्य इति शेषः, यावज्जीवमनपायिन्याः गरीयस्याः कृत्रिमशत्रुताया उत्पन्नत्वात् इति भावः ; ननु अरिणा सन्धिः मित्रेण विरोधः इति कथम् ? इत्याशङ्क्य क्रियया तद्वैपरीत्याददोष इत्याह, हि यतः, एतयोः मित्रामित्रयोः, उपकारापकारौ हिताहिताचरणे एव, लक्षणं चिह्नं, स्वरूपमिति यावत्, लक्ष्यं द्रष्टव्यम्। उपकारेण अपकारेण च मित्रामित्रौ परिज्ञायेते इत्यर्थः, उपकर्त्तैव मित्रम् अपकर्त्तैव शत्रुरिति निष्कर्षः। अस्मदुपकारकत्वात् सहजशत्रुत्वेऽपि कृत्रिममित्रमयं सन्धेय एव इति भावः। श्लोकोऽयं शिशुपालवधस्य २य सर्गेऽपि दृश्यते।

(व) अपूर्वकुलीरमांसार्थी—अपूर्वम् अनास्वादितपूर्वं, यत् कुलीरमांसं कर्कटामिषं, तदर्थयते अभिलषति यः स तथोक्तः। सादरं—साग्रहम्। स्थले—भूमौ, यत्र मत्स्यान् निक्षिप्य खादितवान् तत्र प्रदेशे इत्यर्थः, जलचरस्य स्थले विक्रमाभावात् इति भावः। धृतवान्—स्थापितवान्।

(श) मत्स्यकण्टकाकीर्णां—मीनास्थिसङ्कुलाम्।

हतोऽस्मि मन्दभाग्यः! भवतु, इदानीं (ष) समयोचितं व्यवहरामि। यतः,—

तावद्भयात्तु भेतव्यं यावद्भयमनागतम्।
आगतन्तु भयं दृष्ट्वा प्रहर्त्तव्यमभीतवत्॥ १७॥

अपरञ्च,—अभियुक्तो यदा पश्येन्न किञ्चिद्धितमात्मनः।
युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह"॥ १८॥

इत्यालोच्य स कुलीरस्तस्य वकस्य ग्रीवां चिच्छेद। अथ स वकः पञ्चत्वं गतः। अतोऽहं ब्रवीमि,—'भक्षयित्वा बहून् मत्स्यान्' इत्यादि"।

[इति वृद्धवक-मत्स्य-कुलीरककथा]।

ततः पुनरपि स राजा चित्रवर्णोऽब्रवीत्,—"शृणु तावन्महामन्त्रिन्! मयैतदालोचितं, यदत्र अवस्थितेन अनेन मेघवर्णेन राज्ञा यावन्ति वस्तूनि कर्पूरद्वीपस्य उत्तमानि,

(ष) समयोचितं—कालोपयुक्तम्, अवस्थानुरूपम् इत्यर्थः। व्यवहरामि—अनुतिष्ठामि।

(१७) "समयोचितं व्यवहरामि" इत्युक्तं, कीदृशः स व्यवहार इत्याह, तावदिति।—यावत् यत्कालपर्य्यन्तं, भयं भयकारणम्, अनागतम् अनुपस्थितं, तावत् तत्कालपर्य्यन्तं, भयात् भीतिहेतोः, भेतव्यं त्रसितव्यं, तु किन्तु, भयम् आगतम् उपस्थितं, दृष्ट्वा अवलोक्य, अभीतवत् निर्भीकेण इव, प्रहर्त्तव्यम् आहन्तव्यं, समयोचिताचरणमेव प्राज्ञलक्षणम् इति भावः। (अत्र "वीक्ष्य प्रतिकुर्य्यात् यथायथम्" इति पाठे—वीक्ष्य दृष्ट्वा, ज्ञात्वा इत्यर्थः, यथायथं यथोचितं, प्रतिकुर्य्यात् प्रतिविदध्यात् इत्यर्थः। "प्रवर्त्तव्यम्" इति पाठस्तु व्याकरणविरुद्धत्वादसाधुरिति मन्तव्यम्)।

(१८) आत्मरक्षाया उपायान्तराभावे यथा कर्त्तव्यं तदाह, अभियुक्त इति।—प्राज्ञः पण्डितो जनः, अभियुक्तः आक्रान्तः सन्, यदा यस्मिन् काले, आत्मनः स्वस्य, किञ्चित् स्वल्पमपि, हितं कल्याणं, न पश्येत् नेक्षेत, परन्तु अनिष्टमेव इति भावः, तदा रिपुणा शत्रुणा सह, युध्यमानः विग्रह्णन् सन्, म्रियते प्राणांस्त्यजति; कापुरुषवत् मरणमपेक्ष्य शौर्य्यं प्रकटय्य मरणमेव श्रेयः इति भावः।

तावन्ति अस्माकम् (स) उपनेतव्यानि। तेन महता (ह) विलासेन अस्माभिर्विन्ध्याचले स्थातव्यम्”। दूरदर्शी विहस्याऽऽह,—“देव !—

अनागतवतीं चिन्तां कृत्वा यस्तु प्रहृष्यति।
स तिरस्कारमाप्नोति भग्नभाण्डो द्विजो यथा” ॥१९॥

राजा आह,—“कथमेतत् ?”। दूरदर्शी कथयति,—

ब्राह्मण-शक्तुशरावकथा।—

“अस्ति देवकोट्टनाम्नि नगरे देवशर्मा नाम ब्राह्मणः। तेन (क) महाविषुवसङ्क्रान्तौ शक्तुपूर्णशरावः प्राप्तः। ततस्तमादाय असौ (ख) भाण्डपूर्णकुम्भकारमण्डपिकायां (ग) रौद्रेण आकुलितः सुप्तः। ततः शक्तुरक्षार्थं हस्ते दण्डमादाय अचिन्त-

(स) उपनेतव्यानि—उपहर्त्तव्यानि, उपायनत्वेन प्रेषयितव्यानि इत्यर्थः।

(ह) विलासेन—भोगसुखेनेत्यर्थः।

(१९) दृष्टान्तेन भाविसुखकल्पनया प्रमत्तस्य विडम्बनां प्रदर्शयति, अनागतवतीमिति।—यस्तु जनः, अनागतवतीम् आगामिनीं, भविष्यद्विषयिणीमित्यर्थः, चिन्तां ध्यानं, कल्पनया भाविसुखस्मरणमित्यर्थः, कृत्वा प्रहृष्यति प्रसीदते, आशामात्रमवलम्ब्य आत्मानं निश्चितं सुखभाजनं मन्यते इत्यर्थः, सः अनागतचिन्तकः, भग्नभाण्डः खण्डितमृद्भाजनः, द्विजो यथा विप्र इव, तिरस्कारं परिभवम्, आप्नोति लभते।

(क) महाविषुवसङ्क्रान्तौ—मेषसङ्क्रान्त्यां, चैत्रमासस्य अन्तिमदिने इत्यर्थः। तस्यां पितृनुद्दिश्य विप्रेभ्यः जलपूर्णघटसहितशक्तुदानमावश्यकम्। यदाह कुलार्णवे,—“यो ददाति हि मेषादौ शक्तूनम्बुघटान्वितान्। पितॄनुद्दिश्य विप्रेभ्यः सर्वपापैर्विमुच्यते”॥ इति। “मेषादौ शक्तवो देया वारिपूर्णा च गर्गरी” इति च।

(ख) भाण्डपूर्णकुम्भकारमण्डपिकायां—कुम्भकारस्य मृत्पात्रपूर्णक्षुद्रगृहे।

(ग) रौद्रेण—घर्म्मेण, सूर्य्योत्तापेनेत्यर्थः। (“रौद्री घर्म्मे रसे चण्ड्यां स्त्री तीव्रे भीषणे त्रिषु” इति मेदिनी)। सुप्तः,—शयितः। (“स्वापः शयननिद्रयोः” इति मेदिनी)।

ह्त्.—"यदि अहमिमं सक्तुशरावं विक्रीय दश कपर्दकान् प्राप्नोमि, तदा अत्रैव तैः कपर्दकैर्घटशरावादिकम् (घ) उपक्रीय (ङ) अनेकधा वृद्धैस्तैर्धनैः पुनःपुनः (च) पूगवस्त्रादिक-मुपक्रीय विक्रीय वाणिज्यं कृत्वा लक्षसङ्ख्यकधनानि उत्पाद्य विवाहचतुष्टयं करोमि। ततस्तासु पत्नीषु या रूपयौवनवती तस्यामधिकानुरागं करोमि। तदनन्तरं (छ) सञ्जातेर्ष्यास्ताः (ज) सपत्न्यः यदा अन्योऽन्यं (झ) द्वन्द्वं करिष्यन्ति, तदाऽहं (ञ) कोपाऽऽकुलः ताः सर्वाः लगुडेन ताड़यिष्यामि"। इत्य-भिधाय तेन लगुड़ः प्रक्षिप्तः। तेन सक्तुशरावश्चूर्णितो भाण्डानि च बहूनि भग्नानि। ततो भग्नभाण्डशब्दश्रवणादागत्य कुम्भ-कारेण गर्त्ते हस्तं दत्त्वा ब्राह्मणस्तिरस्कृतो मण्डपिकाया बहिष्कृतश्च। अतोऽहं ब्रवीमि,—'अनागतवतीं चिन्ताम्' इत्यादि"।

[ इति ब्राह्मण-सक्तुशरावकथा ]।

ततो राजा (ट) रहसि गृध्रं मन्त्रिणं पप्रच्छ,—"तात! यथाकर्त्तव्यं तथा उपदिश"। गृध्रो वदति,—

---

(घ) उपक्रीय—क्रीत्वा, [ उप+क्री+ल्यप् ]।

(ङ) अनेकधा वृद्धैः,—पुनः पुनः अधिकतया क्रयविक्रयेण बहुशः वृद्धिं प्राप्तैः।

(च) पूगवस्त्रादिकं—गुवाकफलवसनालङ्कारादिकम्।

(छ) सञ्जातेर्ष्याः,—सञ्जाता उत्पन्ना, ईर्ष्या विद्वेषभावः यासां ताः, एकस्याः पतिवात्सल्यस्यासहिष्णुतया इति भावः।

(ज) सपत्न्यः,—समानः पतिर्यासां ताः, [ "नित्यं सपत्न्यादिषु" (४।१।३५ पा०) इति पति-शब्दस्य नः, समानस्य स-भावो निपात्यते ]।

(झ) द्वन्द्वं—कलहम्।

(ञ) कोपाऽऽकुलः,—क्रोधाभिभूतः।

(ट) रहसि—निर्जने।

"मदोद्धतस्य नृपतेः प्रकीर्णस्येव दन्तिनः।
गच्छन्त्युन्मार्गयातस्य नेतारः खलु वाच्यताम्॥ २०॥

शृणु तावत् देव! किमस्माभिः (ठ) बलदर्पात् दुर्गं भग्नम्? (ड) किं वा भवतः (ढ) प्रतापाधिष्ठितेन उपायेन?"। राजा आह,—"भवताम् (ण) उपायेन"। गृध्रो ब्रूते,—"यद्यस्मद्वचनं क्रियते तदा स्वदेशे गम्यताम्; अन्यथा (त) आसन्ने

---

(२०) कामन्दकीयचतुर्थसर्गोक्तं श्लोकमवलम्ब्य उन्मार्गगे नृपतौ उपदेशदानमपि दोषायेत्याह, मदोद्धतस्येति।—मदोद्धतस्य चरद्दानजलतया उत्कटस्य, मदमत्तस्येत्यर्थः, अत एव प्रकीर्णस्य विक्षिप्तस्य, मदमत्तत्वादस्थिरचेतस इत्यर्थः, [अत्र "सङ्कीर्णस्य" इति पाठे—स एवार्थः] उन्मार्गयातस्य मार्गं परित्यज्य कण्टकाकीर्णपथे गतस्य, दन्तिनः हस्तिन इव, मदोद्धतस्य मदगर्वितस्य, अत एव प्रकीर्णस्य गर्वोद्धतत्वात् विक्षिप्तचेतस इत्यर्थः, उन्मार्गयातस्य असत्पथप्रवृत्तस्य, नृपतेः राज्ञः, नेतारः नायकाः, एकत्र,—हस्तिपकाः, अन्यत्र,—मन्त्रिणः, खलु निश्चितं, वाच्यतां निन्दनीयतां, गच्छन्ति प्राप्नुवन्ति, निन्दनीया भवन्तीत्यर्थः; यद्वा,—मदोद्धतस्य दन्तिन इव, तथा उन्मार्गयातस्य प्रकीर्णस्य अश्वस्य इव, ("प्रकीर्णकं चामरे स्यात् विस्तारे च तुरङ्गमे" इति विश्वः) मदोद्धतस्य उन्मार्गयातस्य नृपतेः नेतारः खलु वाच्यतामिति; अतः त्वयि उपदेशोऽपि अकर्त्तव्य एव इति भावः। ("प्रकीर्णस्य" इत्यत्र "सङ्कीर्णस्य" "उन्मार्गयातस्य" इत्यत्र "अन्यायवृत्तस्य" इति कामन्दकीयपाठः)।

(ठ) बलदर्पात्—पराक्रमात्, सामर्थ्यमात्रमवलम्ब्य इत्यर्थः।

(ड) "किं वा" इत्यत्र "नो वा" इति पाठे—अस्माभिः बलदर्पात् दुर्गं भग्नं किम्? वा भवतः प्रतापाधिष्ठितेन उपायेन दुर्गं भग्नं किम्? नो पक्षद्वयोरेकोऽपि नेत्यर्थः।

(ढ) प्रतापाधिष्ठितेन उपायेन—प्रभावातिशयरूपेणोपायेन, कोषदण्डजतेजःसहचरितेन सामादीनामन्यतमेन उपायेन इत्यर्थो वा।

(ण) उपायेन—कौशलविशेषेणेत्यर्थः, सप्तोपायान्तर्गतेन मायाऽऽख्येन पञ्चमोपायेन इति यावत्।

(त) आसन्ने—समीपवर्त्तिनि, अचिरभाविनि इत्यर्थः।

वर्षाकाले (थ) तुल्यबलेन सह पुनर्विग्रहे सति अस्माकं (द) परभूमिष्ठानां स्वदेशगमनमपि दुर्लभं भविष्यति। तत् (ध) सुखशोभार्थं सन्धाय गम्यताम्। दुर्गं भग्नं, कीर्त्तिश्च लब्धैव। मम सम्मतं तावदेतत्। यतः,—

यो हि धर्मं पुरस्कृत्य हित्वा भर्त्तुः प्रियाप्रियम्।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान्॥ २१॥

अपरञ्च,—सन्धिमिच्छेत् समेनापि सन्दिग्धो विजयो युधि।
न हि संशयितं कुर्य्यादित्युवाच बृहस्पतिः॥ २२॥

---

(थ) तुल्यबलेन—सदृशपराक्रमेण, समानप्रतिद्वन्द्विनेति यावत्। विग्रहे—युद्धे।

(द) परभूमिष्ठानां—शत्रुराज्यस्थितानाम्। दुर्लभं—दुःसाध्यम्।

(ध) सुखशोभार्थं—सुखं मन.शान्तिः, शोभा राज्यस्य निरुपद्रवजनितं गौरवं, ते अर्थः प्रयोजनं यस्मिन् तत्; यद्वा,—सुखाय आनन्दाय, शोभा इच्छा, ("शोभा कान्तीच्छयोर्मता" इति मेदिनी) तदर्थं तन्निमित्तं, प्रीतिलाभायेत्यर्थः। सन्धाय—सन्धिं कृत्वा।

(२१) कीदृशः सहायो राज्ञां प्रशस्त इति वक्तुं भारतोद्योगपर्व्वीयश्लोकं प्रमाणयति, य इति।—यो मन्त्री, भर्त्तुः स्वामिनः, प्रियाप्रियं हृद्याहृद्यम्, [अत्र समाहारद्वन्द्वत्वादेकवचनं] ("प्रियाप्रिये" इति महाभारतीयपाठः) हित्वा त्यक्त्वा, वचनमिदं भर्त्तुः प्रीतिजननमप्रीतिजननं वा भविष्यति इत्यविगणय्य इत्यर्थः, धर्मं न्यायं, ("धर्म्माः पुण्ययमन्यायस्वभावाचारसोमपाः" इत्यमरः) पुरस्कृत्य अग्रे कृत्वा, न्यायानुसारेणेत्यर्थः, अप्रियाणि अहृद्यान्यपि, असन्तोषकराण्यपीत्यर्थः, पथ्यानि हितानि, हितवचनानीत्यर्थः, आह उपदिशति, तेन तादृशेन मन्त्रिणा, राजा नृपतिः, सहायवान् प्रशस्तसहायसम्पन्नः, स एव राज्ञः प्रकृतमन्त्री इत्यर्थः, हि निश्चये।

(२२) सन्धिमिति।—युधि युद्धे, विजयः जयलाभः, सन्दिग्धः संशयाऽऽरूढः, अनिश्चित इति यावत्, अतः समेनापि तुल्यबलेनापि, किमुताधिकबलेनेति भावः; सन्धिं मेलनम्, इच्छेत् अभिलषेत्, कुर्य्यात् इत्यर्थः, हि तथाहि, संशयितं सन्दिग्धं, सिद्धिः भवेन्न वा इत्येवं संशयविषयीभूतमित्यर्थः, कार्य्यमिति शेषः, न कुर्य्यात् न

अन्यच,—सुहृद्बलं तथा राज्यमात्मानं कीर्त्तिमेव च।
युधि सन्देहदोलास्थं को हि कुर्य्यादबालिशः ॥ २३ ॥

अपि च,- युद्धे विनाशो भवति कदाचिदुभयोरपि।
सुन्दोपसुन्दावन्योऽन्यं समवीर्य्यौ हतौ न किम् ?" ॥२४॥

राजा उवाच,—"कथमेतत् ?"। मन्त्री कथयति,—

* सुन्दोपसुन्दनामकदैत्यद्वयकथा।—

"पुरा दैत्यौ सहोदरौ सुन्दोपसुन्दनामानौ महता काय-क्लेशेन (न) त्रैलोक्यराज्यकामनया चिरात् (प) चन्द्रशेखरम्

---

विदधीत, इति एतत्, बृहस्पतिः नीतिशास्त्रप्रणेता देवगुरुः, उवाच बभाषे, अत एव सन्धिरेव कर्त्तव्य इति निष्कर्षः।

(२३) "सन्धाय गम्यताम्" इति श्लोकं समर्थयितुं कामन्दकीयनवमसर्गीयश्लोकान् समुद्धृत्य श्लोकद्वयेन युद्धस्य सन्दिग्धविजयत्वमाह, सुहृदिति।—को हि अबालिशः अमूर्खः, पण्डित इति यावत्, जनः इति शेषः, युधि युद्धे, सुहृत् मित्रं, तत्सहितं बलं सैन्यम्, [ इति मध्यपदलोपी समासः ] सुहृदं बलञ्च इत्यर्थः, यद्वा,—सुहृदेव बलं मित्ररूपं सैन्यं, ("सुहृद्धनम्" इति कामन्दकीयपाठ ) तथा राज्यं राष्ट्रम्, आत्मानं स्वजीवनं, च किञ्च, कीर्त्तिमेव आत्मनोऽपि अधिकं यशोऽपि, सन्देहदोलास्थं संशयदोलाऽऽरूढं, कुर्य्यात् ? न कोऽपीत्यर्थः।

(२४) युद्धे सङ्ग्रामे कदाचित् कदाऽपि, उभयोरपि युध्यमानयोस्तुल्यबलयोः अरिविजिगीष्वोर्द्वयोरपि, विनाशः निधनं, भवति जायते, ("युद्धे विनाशो भवति" इत्यत्र "नाशो भवति युद्धेन" इति कामन्दकीयपाठः ) अन्योऽन्यं परस्परं, समं तुल्यं, वीर्य्यं पराक्रमः ययोस्तौ समवीर्य्यौ समकक्षौ, सुन्दोपसुन्दौ तदाख्यौ द्वावसुरौ, युध्यमानौ इति शेषः, किं न हतौ ? न विनष्टौ किम् ? अपि तु विनष्टौ एव, युद्धे द्वयोरपि विनाशसम्भावनया युद्धात् सन्धिरेव श्रेयान् इति निष्कर्षः।

(न) त्रैलोक्यराज्यकामनया—त्रिभुवनाधिपत्यलाभेच्छया। चिरात्—दीर्घकालं व्याप्य।

(प) चन्द्रशेखरं—चन्द्रमौलिं शिवम्।

---

* कथेयं भारतादिपर्वान्तर्गतराज्यलाभपर्वणि विस्तततया निर्वर्णिता।

आराधितवन्तौ। ततस्तयोर्भगवान् परितुष्टः सन्,—(फ) "वरं वरयतम्" इति उवाच। अनन्तरं तयोः (ब) कण्ठाधिष्ठितायाः सरस्वत्याः प्रभावात् तौ अन्यद्वक्तुकामौ अन्यदभिहितवन्तौ,—"यदि आवयोर्भगवान् परितुष्टस्तदा स्वप्रियां पार्वतीं परमेश्वरो ददातु"। अथ भगवता क्रुद्धेन वरदानस्य (भ) आवश्यकतया मूढ़तया च पार्वती प्रदत्ता। ततस्तस्याः (म) रूपलावण्यलुब्धाभ्यां (य) जगद्घातिभ्यां मनसा (र) उत्सुकाभ्यां (ल) पापतिमिराभ्यां "मम" इति (व) अन्योऽन्य-

(फ) वरम्—अभीप्सितं, काम्यविषयमित्यर्थः। ("वरो वृतौ। विटे जामातरि श्रेष्ठे देवतादेरभीप्सिते" इति हैमः)। वरयतम्—ईप्सत, प्रार्थयेथामित्यर्थः, ["वर ईप्से" इति चौरादिकस्य वरयतेः लोटि रूपम्]।

(ब) कण्ठाधिष्ठितायाः,—कण्ठाविष्टायाः। सरस्वत्याः,—दुष्टसरस्वत्या इत्यर्थः। अन्यत्—अन्यप्रकारं, वक्तुकामौ—वक्तुं कथयितुं, कामः अभिलाषः ययोः तौ, विवक्षू इत्यर्थः, यं वरमुद्दिश्य तौ भगवन्तमाराधितवन्तौ तमनुक्त्वा इति यावत्।

(भ) आवश्यकतया—तपश्चरणेन सिद्धिलाभात् अवश्यकर्त्तव्यतया। मूढ़तया—कोपेन कर्त्तव्यनिर्णयाक्षमतया। ["मूढ़तया" इत्यत्र "विचारमूढ़योः" इति पाठे—वर्योरित्यस्य विशेषणम्। विचारमूढ़योः,—अविवेकिनोः, जगज्जनन्याः पार्वत्याः कामुकत्वादिति भावः]।

(म) रूपलावण्यलुब्धाभ्यां—सौन्दर्यकान्तिविशेषलम्पटाभ्याम्।

(य) जगद्घातिभ्यां—भुवनविनाशकाभ्यां, त्रिभुवनपीड़काभ्यामित्यर्थः।

(र) उत्सुकाभ्याम्—इष्टार्थसम्पादनाय उद्युक्ताभ्यां, पार्वतीलाभार्थमुत्कण्ठिताभ्यामित्यर्थः। ("इष्टार्थोद्युक्त उत्सुकः" इत्यमरः)।

(ल) पापतिमिराभ्यां—पापमेव दुष्कृतमेव, भुवनवधहिंसादिरूपदुष्टाचरणमेवेत्यर्थः, तिमिरम् अन्धकारम्, अन्धकारसदृशमित्यर्थः, ज्ञानदृष्ट्यवरोधकत्वादिति भावः; ययोस्ताभ्यां, पापोपहतप्रज्ञाभ्यामित्यर्थः।

(व) अन्योऽन्यकलहाभ्याम्—अन्योऽन्यं परस्परं, कलहः विवादः, इयं मम न तव इत्येवं वाग्युद्धमित्यर्थः, ययोस्ताभ्यां, परस्परं विवदमानाभ्यां, दैत्याभ्यामिति शेषः।

कलहाभ्यां (ग्र) "प्रमाणपुरुषः कश्चित् पृच्छ्यताम्" इति (घ) मतौ कृतायां स एव (ङ) भट्टारको वृद्धद्विजरूपः समागत्य तत्र उपस्थितः। अनन्तरम् "आवाभ्याम् इयं (च) स्वबललब्धा, कस्य इयमावयोर्भवति ?" इति ब्राह्मणमपृच्छताम्। ब्राह्मणो ब्रूते,—

"ज्ञानश्रेष्ठो द्विजः पूज्यः क्षत्रियो बलवानपि।
धनधान्याधिको वैश्यः शूद्रस्तु द्विजसेवया ॥ २५ ॥

तत् युवां क्षत्रियधर्माणौ, युद्धमेव युवयोः (छ) नियमः"। इति अभिहिते सति "साधूक्तमनेन" इति कृत्वा अन्योऽन्यतुल्य-

---

(ग्र) प्रमाणपुरुषः,—प्रमाणजनः, विवादनिर्णायक इत्यर्थः, मध्यस्थः इति यावत्। पृच्छ्यताम्—जिज्ञास्यताम्, आवाभ्यामिति शेषः। [प्रच्छ+कर्मणि लोट्-ताम्]।

(घ) मतौ—बुद्धौ, प्रमाणपुरुषं पृच्छामि इत्येवंरूपायाम् इत्यर्थः। कृतायां—निश्चितायाम्।

(ङ) भट्टारकः,—देवः, महेश्वरः इत्यर्थः ("भट्टारको नृपे नाट्यवाचा देवे तपोधने" इति मेदिनी)।

(च) स्वबललब्धा—स्वयोः आत्मनोः, बलेन तपःशक्त्या इत्यर्थः, लब्धा प्राप्ता, निजतपःप्रभावेण प्राप्ता इत्यर्थः।

(२५) युद्धार्थ प्ररोचयितुं ब्राह्मणादिषु कीदृशः जनः श्रेष्ठ इत्याह, ज्ञानश्रेष्ठ इति।—ज्ञानेन विद्यया इत्यर्थः, श्रेष्ठः प्रधानः, द्विजः ब्राह्मणः, पूज्यः पूजनीयः भवति इति शेषः, बलवान् विक्रान्तः, क्षत्रियोऽपि राजन्योऽपि, धनधान्याधिकः धनेन अर्थेन, धान्येन व्रीह्यादिना, पण्यद्रव्येण इति यावत्, अधिकः श्रेष्ठः, समृद्धः इत्यर्थः, वैश्यः तृतीयवर्णः, द्विजसेवया तु ब्राह्मणादिवर्णत्रयशुश्रूषया एव, शूद्रः अवरवर्णः, सर्वत्र पूज्य इत्यनेनान्वयः, विप्रेषु ज्ञानी क्षत्रियेषु बलवान् वैश्येषु समृद्धिमान् शूद्रेषु द्विजसेवक एव श्रेष्ठ इत्यर्थः। ("विप्राणां ज्ञानतो ज्यैष्ठं क्षत्रियाणान्तु वीर्यतः। वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः" ॥ इति मनूक्तः पाठः)।

(छ) नियमः,—व्रतः, अत एव युद्धं क्रियतां युद्धविजयी एव इमां प्राप्स्यति इति भावः।

वीर्य्यौ (ख) समकालमन्योऽन्यघातेन विनाशमुपगतौ । अतोऽहं ब्रवीमि,—'सन्धिमिच्छेत् समेनापि' इत्यादि"।

[ इति सुन्दोपसुन्दनामकदैत्यद्वयकथा ]।

राजा आह,—"तत् किं प्रागेव नेदम् उपदिष्टम् ?"। मन्त्री वदति,—"तदा किं मम वचनम् (ग) अवसानपर्य्यन्तं श्रुतं भवद्भिः ? तदाऽपि मम सम्मत्या नायं विग्रहारम्भः; यतः (घ) सन्धेयगुणयुक्तोऽयं हिरण्यगर्भो न विग्राह्यः। तथा चोक्तम्,—

सत्यार्य्यौ धार्मिकोऽनार्य्यो भ्रातृसङ्घातवान् बली।
अनेकयुद्धविजयी सन्धेयाः सप्त कीर्त्तिताः ॥ २६ ॥
सत्योऽनुपालयन् सत्यं सन्धितो नैति विक्रियाम्।
प्राणबाधेऽपि सुव्यक्तमार्य्यो नाऽऽयात्यनार्य्यताम् ॥२७॥

---

(ख) समकालं—युगपत्, एकदैव इत्यर्थः। अन्योऽन्यघातेन—परस्पर-प्रहारेण।

(ग) अवसानपर्य्यन्तं—परिसमाप्तिपर्य्यन्तम्।

(घ) सन्धेयगुणयुक्तः,—सर्वथा सन्धिस्थापनार्हगुणसम्पन्नः, सत्यार्य्यादिगुण-विभूषितः इत्यर्थः। विग्राह्यः,—युद्धयोग्यः।

(२६) के कथं सन्धेया इति वक्तुं कामन्दकमतम् अष्टाभिः श्लोकैः प्रदर्शयति, सत्येति।—सत्यः सत्यपरायणः, आर्य्यः महाकुलसम्भूतः, सदाचारः इति यावत्, धार्मिकः धर्मपरायणः, अनार्य्यः हीनकुलसम्भूतः, भिल्लकिरातादसभ्यजाति-रित्यर्थः, भ्रातृसङ्घातवान् सौभ्रात्रेण परस्परं मिलितः, बहुभ्रातृक इत्यर्थः, बली प्रभूतबलवीर्य्यसम्पन्नः, अनेकेषु बहुषु, युद्धेषु रणेषु, विजयते यः स तथोक्तः बहुयुद्धजेता, सप्त एते सत्यादयः सप्तसङ्ख्यकाः पुरुषाः, सन्धेयाः सन्धातुं योग्याः, कीर्त्तिताः कथिताः, नीतिज्ञैरिति शेषः, एते खलु न जातु विग्राह्या इति भावः।

(२७) सत्य इति।—सत्यः सत्यपरायणः जनः, सन्धितः कृतसन्धिः सन्, [ सन्धाशब्दात् जातार्थे तारकादित्वादितच्-प्रत्ययः ] अथवा सन्धितः सन्धिं स्वीकृत्य, [ ल्यब्लोपे पञ्चम्यास्तसिल् ] सत्यं शपथं, ("सत्यं कृते च शपथे तथ्ये त्रिषु तद्वति" इति मेदिनी ) अनुपालयन् अनुसरन्, विक्रियां विकारं, न एति न याति, न

धार्मिकस्याभियुक्तस्य सर्व एव हि युध्यते ।
प्रजानुरागाद्धर्माच्च दुःखोच्छेद्यो हि धार्मिकः ॥ २८ ॥
सन्धिः कार्योऽप्यनार्य्येण विनाशे समुपस्थिते ।
विना तस्याश्रयेणार्य्यः कुर्य्यान्न कालयापनम् ॥ २९ ॥
संहतत्वाद्यथा वेणुर्निविड़ः कण्टकैर्वृतः ।
न शक्यते समुच्छेत्तुं भ्रातृसङ्घातवांस्तथा ॥ ३० ॥

---

वैपरीत्यमाचरति इत्यर्थः, तथा आर्य्यः सज्जनः, श्रेष्ठाचारः इत्यर्थः, प्राणबाधेऽपि प्राणनाशेऽपि, अनार्य्यतां नीचाशयतां, न आयाति न गच्छति, सुव्यक्तं स्फुटम्, एतत् सर्वजनविदितमित्यर्थः, प्राणसङ्कटे उपस्थितेऽपि आर्य्यः कदाचिदपि सन्धिभङ्गं कृत्वा विश्वासघातकतां नाचरतीति समुदायार्थः; "अङ्गीकृतं सुकृतिनः परिपालयन्ति" इति भावः ।

(२८) दुःखोच्छेद्यत्वेन धार्म्मिकस्य सन्धेयत्वमाह, धार्मिकस्येति ।—अभियुक्तस्य शत्रुभिराक्रान्तस्य, धार्म्मिकस्य धर्म्मपरायणस्य, राज्ञः इति शेषः, सर्व एव सकल एव जनः, स्वपक्षीयः निजपक्षीयश्च योधवर्ग इत्यर्थः, हि निश्चयेन, युध्यते विग्रह्णाति, तत्पक्षावलम्बनं कृत्वा युद्धं करोतीत्यर्थः, हि तथाहि, धार्म्मिकः धर्म्मपरायणः, राजा इति शेषः, प्रजानाम् अनुरागात् स्वामिनि भक्त्या, धर्म्माच्च न्यायाच्च, न्यायपरायणत्वाच्च इत्यर्थः, प्रजापालनरूपात् स्वधर्म्माचरणाच्चेत्यर्थो वा, दुःखेन उच्छिद्यते यः स तथोक्तः, दुर्विनाश्यः, दुर्जयः इति यावत्, भवतीति शेषः, धार्म्मिकेण सह युद्धस्य सन्दिग्धविजयत्वात् स सन्धेय एव इति भावः ।

(२९) सन्धिरिति ।—अनार्य्येण किरातादसभ्येनापि सह, सन्धिः मेलनं, कार्य्यः कर्त्तव्यः; कथं कर्त्तव्य इत्याह, विनाशे विनाशकारणे इत्यर्थः, सैन्यादिक्षयरूपे, राज्यादिनाशरूपे वा सर्वनाशे इति यावत्, समुपस्थिते समुत्पन्ने सति, आर्य्यः सभ्यः राजा, तस्य अनार्य्यस्य, आश्रयः आश्रयणं, तद्रक्षणाधीनत्वेन अवस्थानमित्यर्थः, तेन विना, कालयापनं समयातिपातम्, आत्मरक्षार्थं पुनर्बलसञ्चयार्थञ्च कालप्रतीक्षणमित्यर्थः, न कुर्य्यात् न कर्त्तुं शक्नुयात् । श्रीरामचन्द्रस्य कपिसैन्याश्रयग्रहणं तथा चितोराधिपतेः महाराणेत्युपाधिकस्य प्रतापसिंहादेः भिल्लाश्रये कालयापनञ्च अत्र दृष्टान्त इति ज्ञेयम् ।

(३०) संहतेति ।—निविड़ः घनसन्निविष्टः, कण्टकैः द्रुमाङ्गैः, कण्टकवत्

बलिना सह योद्धव्यमिति नास्ति निदर्शनम्।
प्रतिवातं न हि घनः कदाचिदुपसर्पति ॥ ३१ ॥
जमदग्नेः सुतस्येव सर्वः सर्वत्र सर्वदा।
अनेकयुद्धजयिनः प्रतापादेव भुज्यते ॥ ३२ ॥
अनेकयुद्धविजयी सन्धानं यस्य गच्छति।
तत्प्रतापेन तस्याशु वशमायान्ति शत्रवः ॥ ३३ ॥

सूक्ष्माग्रावयवविशेषैरित्यर्थः, कण्टकाभिरिति यावत्, वृतः व्याप्तः, वेणुर्वंशः, संहतत्वात् परस्परं नीरन्ध्रतया सम्मिलितत्वात्, समुच्छेत्तुं कर्त्तितुं, निर्मूलयितुमिति यावत्, यथा न शक्यते न पार्यते, तथा भ्रातृसङ्घातवान् भ्रातृभिः सह सौभ्रात्रेण दृढतया मिलितः, बहुभ्रातृसहायः जनः इत्यर्थः, न समुच्छेत्तुं शक्यते इति योजना, अतः तेनापि सन्धिः विधेय इति भावः।

(३१) बलिनेति।—बलिना आत्मनोऽधिकबलेन शत्रुणा सह, योद्धव्यं विग्रहीतव्यम्, इति एवं, निदर्शनम् आगमः, दृष्टान्तः इत्यर्थः, नास्ति न विद्यते, कुत्रापीति शेषः। हि तथाहि, घनः मेघः, कदाचित् जात्वपि, प्रतिवातं वायोः प्रतिकूलं, यस्या दिशो वायुः प्रवहति तां दिशमित्यर्थः, वायोरभिमुखमिति यावत्, [ प्रातिकूल्ये अव्ययीभावः ] न उपसर्पति न चलति, वायुना सह मिलित्वैव यातीत्यर्थः ; वाय्वाभिमुखीनः मेघो यथा अचिरमेव छिन्नो भवति, तथा प्रबल-विपक्षाभिमुखीनः नृपोऽपि, अतः सोऽपि सन्धेयः इति निष्कर्षः।

(३२) जमदग्नेरिति।—जमदग्नेः तदाख्यस्य भृगुवंश्यस्य ऋषेः, सुतस्येव पुत्रस्येव, परशुरामस्येव इत्यर्थः, अनेकयुद्धजयिनः बहुषु युद्धेषु लब्धजयस्य, राज्ञः इति शेषः, प्रतापात् प्रभावादेव, तन्नाम्नः सामर्थ्यादेवेत्यर्थः, सर्वः जनः, सर्वत्र सर्वस्मिन् स्थाने, सर्वदा सर्वकाले च, भुज्यते स्वयमेव राज्यसुखं भुङ्क्ते, प्रबल-पराक्रान्तस्य राज्ञः मित्रत्वात् निरुद्वेगेन सुखं भुञ्जानस्तिष्ठतीत्यर्थः, [ भुज+कर्मकर्त्तरि लट्-ते ]। ("भिद्यते" इति कामन्दकीयपाठः) "दृढत्वसहायः कार्य्यान्तं चोदीयानपि गच्छति" इति भावः।

(३३) अनेकेति।—अनेकयुद्धविजयी बहुषु युद्धेषु लब्धजयः राजा, यस्य मित्रताः, [ सम्बन्धविवक्षया ६ष्ठी० ] सन्धानं सङ्घट्टनं, सन्धिना मेलनमित्यर्थः, मित्रता-मिति यावत्, ("सन्धानं स्यादभिषवे तथा सङ्घट्टनेऽपि च" इति मेदिनी) गच्छति

तदत्र बहुभिर्गुणैः (ङ) उपेतः सन्धेयोऽयं राजहंसः"। चक्रवाकोऽवदत्,—"प्रणिधे! सर्वम् (च) अवगतम्। व्रज, पुनरागमिष्यसि"।

अथ हिरण्यगर्भश्चक्रवाकं पृष्टवान्,—"मन्त्रिन्! असन्धेयाः कति? तान् विज्ञातुमिच्छामि"। मन्त्री ब्रूते,—"देव! कथयामि। शृणु,—

"बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः।
भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥ २४ ॥
विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान्।
अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥ २५ ॥

प्राप्नोति, येन सह सन्धिं करोति इत्यर्थः, तत्प्रतापेन तस्य अनेकयुद्धविजयिनः प्रतापेन प्रभावेणैव, तस्य कृतसन्धेः राज्ञः, अचिरः वैरिणः, आशु शीघ्रं, वशम् अधीनताम्, आयान्ति प्राप्नुवन्ति; अबलोऽपि बलवत्सहायः प्रबल इति भावः।

(ङ) उपेतः,—अन्वितः।

(च) अवगतं—ज्ञातम्, अस्माभिरिति शेषः।

(२४) सम्प्रति पञ्चभिः श्लोकैः कामन्दकीक्तान् विंशतिप्रकारान् असन्धेयानाह, बाल इति।—बालः शिशुः, वृद्धः प्रवयाः, दीर्घरोगी चिररुग्णः, तथा ज्ञातिभिः स्वजनैः, बहिष्कृतः त्यक्तः, भीरुकः स्वयं भीरुस्वभावः, भीरुकजनः भीरुकः भीतस्वभावः, जनः अमात्यादिर्यस्य सः, तथा लुब्धः स्वयम् अर्थलोलुपः, लुब्धजनः लुब्धः अर्थलोलुपः, जनः सैन्याद्यनुजीविजनः यस्य तादृशः; अमी अष्टौ; एतैः सन्धिं न कुर्वीत इति परेणान्वयः।

(२५) विरक्तेति।—विरक्ताः अननुरक्ताः, स्वामिनि विकृतिमापन्नाः इत्यर्थः, प्रकृतयः प्रजाः यस्य सः, विषयेषु स्रक्चन्दनादिभोगेषु, अतिसक्तिमान् अत्यासक्तः, अनेकेषां बहूनां, चित्ते मनसि, मन्त्रः मन्त्रणा यस्य सः अगोपितमन्त्रः इत्यर्थः, न एकम् एकाधिकम्, अस्थिरमित्यर्थः, चित्तं मनः, मन्त्रे यस्य तादृश इति वा, चापल्याददृढमन्त्र इत्यर्थः, देवब्राह्मणनिन्दकः देवानाममराणां, ब्राह्मणानां विप्राणाञ्च, निन्दकः कुत्सयिता, देवे ब्राह्मणे च अभक्तः य इत्यर्थः। अमी चत्वारः।

दैवोपहतकश्चैव दैवचिन्तक एव च ।
दुर्भिक्षव्यसनोपेतो बलव्यसनसङ्कुलः ॥ ३६ ॥
अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च न ।
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ ३७ ॥
एतैः सन्धिं न कुर्वीत विगृह्णीयात् तु केवलम् ।
एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशम् ॥३८॥

[ इति कुलकम् ] ।

बालस्याल्पप्रभावत्वान्न लोको योद्धुमिच्छति ।
युद्धायुद्धफलं यस्मात् ज्ञातुं शक्तो न बालिशः ॥ ३९ ॥

---

(३६) दैवोपहतक इति ।—दैवेन विधिना, उपहतकः विफलीकृतसर्वचेष्टः, प्रतिकूलदैव इत्यर्थः, दैवचिन्तकः दैवं भाग्यं, चिन्तयति यः स तादृशः, भाग्ये यदस्ति तदेव भविष्यति इति चिन्तया निश्चेष्टः, दैवनिर्भरः इत्यर्थः, पौरुषवर्जित इति यावत्, दुर्भिक्षव्यसनोपेतः दुर्भिक्षरूपविपदा अभिभूतः, दुर्भिक्षपीड़ितप्रजालोक इत्यर्थः; अथवा दुर्भिक्ष-व्यसनाभ्याम् अन्नाद्यभाव-तदितरविपद्भ्याम्, उपेतः युक्तः, बलस्य सैन्यस्य, व्यसनेन अष्टचत्वारिंशत्सङ्ख्यकश्लोकस्य टीकायां वक्ष्यमाणोपरुद्धपरिक्षिप्तादि-रूपया त्रयस्त्रिंशद्विधया विपत्त्या, सङ्कुलः व्याप्तः, आक्रान्त इत्यर्थः । इमे चत्वारः ।

(३७) अदेशेति ।—अदेशस्थः अदेशे अस्थाने, अनुचितस्थाने इत्यर्थः, तिष्ठति यः स तादृशः स्वसैन्यचालनायोग्यस्थाने अवस्थित इत्यर्थः, बहुरिपुः बहुशत्रुः, यश्च कालेन युद्धोचितसमयेन, न युक्तः न उपेतः, अकालयोधी असम्पूर्णोद्योगो वा, युद्धायोग्यकाले नियुक्तसैन्यः इत्यर्थः, सत्यात् धर्मात् च व्यपेतः च्युतः, सत्यभ्रष्टः अधार्मिकश्चेत्यर्थः, एते चत्वारश्च, अमी बालो वृद्धः इत्यादिना उक्ताः एते, विंशतिः विंशतिविधाः, पुरुषाः, असन्धेयाः इति शेषः ।

(३८) एतैरिति ।—एतैः ईदृशैः विंशत्या शत्रुभिः सह, सन्धिं मेलनं, न कुर्वीत न विदधीत, तु परन्तु, केवलं विगृह्णीयात् युध्येत, हि यतः, एते बालादयः, विगृह्यमाणाः युध्यमानाः सन्तः, क्षिप्रं शीघ्रं, ("ध्रुवम्" इति कामन्दकीयपाठः) रिपोः शत्रोः, वशं वश्यतां, यान्ति गच्छन्ति; सुजयाः खलु एते बालादय इति भावः । इति कुलकम् ।

(३९) कामन्दकीक्तमवलम्ब्य एषां विग्राह्यत्वे कारणं दर्शयति चतुर्दशभिः

उत्साहशक्तिहीनत्वात् वृद्धो दीर्घामयस्तथा ।
स्वैरेव परिभूयेते द्वावप्येतावसंशयम् ॥ ४० ॥
सुखोच्छेद्यश्च भवति सर्वज्ञातिबहिष्कृतः ।
त एवैनं विनिघ्नन्ति ज्ञातयश्चात्मसात्कृताः ॥ ४१ ॥
भीरुर्युद्धपरित्यागात् स्वयमेव प्रणश्यति ।
तथैव भीरुकजनः सङ्ग्रामे तैर्विमुच्यते ॥ ४२ ॥

---

श्लोकैः. बालस्येति ।—बालस्य बालकस्य, अल्पप्रभावत्वात् स्वल्पप्रतापत्वात्, शासनविचारादिशक्तेरभावात् प्रतिपत्त्यभावाद्वा इत्यर्थः, लोकः स्वपक्षीययोद्धृवर्गः इत्यर्थः, योद्धुं विग्रहीतुं, तदर्थमिति भावः, न इच्छति न अभिलषति, यस्मात् यतः, बालिशः अनभिज्ञः, बालराजा इति शेषः, युद्धायुद्धफलं विग्रहाविग्रहयोः परिणामं, कः कीदृशं पराक्रमं प्रादर्शयत्, स कीदृशीं पूजामर्हति, को वा समरचेवात् पृष्ठप्रदर्शनमकरोत्, स वा कीदृशं दण्डमर्हति इत्यादिरूपमिति भावः, ज्ञातुं वेदितुं, न शक्तः न समर्थः ; अनुरागाभावेण स्वपक्षीयसेनानां युद्धे आग्रहाभावात् बालः सुजय इति भावः ।

(४०) उत्साहेति ।—वृद्धः स्थविरः, तथा दीर्घामयः चिररोगी, राजयक्ष्मादिपीड़ितः जनः इति यावत्, एतौ द्वौ अपि उत्साहशक्तिहीनत्वात् वार्द्धकजनितदौर्बल्येन चिररोगजनितदौर्बल्येन च विक्रमबलाभावात्, ( उक्तं हि कौटिल्येन,—"विक्रमबलमुत्साहशक्तिः" इति ) असंशयं निश्चितं, स्वैरेव स्वपक्षीयैरेव, निजसैन्यादिभिरेवेत्यर्थः, परिभूयेते अवमन्येते, पराजीयेते इत्यर्थः ; अतः एतावपि सुजयौ इति भावः ।

(४१) सुखोच्छेद्य इति ।—सर्वज्ञातिबहिष्कृतः सर्वैः सकलैः, ज्ञातिभिः स्वजनैः, बहिष्कृतश्च परित्यक्तश्च, ( "च" इत्यत्र "हि" इति कामन्दकीयपाठः ) रिपुरिति शेषः, सुखोच्छेद्यः अनायासेन उन्मूलयितुं शक्यः, भवति सम्पद्यते, यतः आत्मसात्कृताः स्वायत्तीकृताः, विजिगीषुणा इति शेषः, तदुच्छेदार्थं स्वयमेव विजिगीषुमनुगच्छन्त इति यावत्, ते ज्ञातयः बान्धवा एव, शत्रुभावमापन्ना इति यावत्, एनं स्वजनबहिष्कृतं, विनिघ्नन्ति नाशयन्ति ।

(४२) भीरुरिति ।—भीरुः भयशीलः, कापुरुष इति यावत्, राजा इति शेषः, युद्धपरित्यागात् युद्धपराङ्मुखत्वात्, स्वयमेव आत्मनैव, निजदोषादेवेत्यर्थः,

लुब्धस्यासंविभागित्वान्न युध्यन्तेऽनुजीविनः।
लुब्धानुजीवकैरेष दानहीनैर्निहन्यते ॥ ४३ ॥
सन्त्यज्यते प्रकृतिभिर्विरक्तप्रकृतिर्युधि।
सुखाभियोज्यो भवति विषयेष्वतिसक्तिमान् ॥४४॥
अनेकचित्तमन्त्रस्तु द्वेष्यो भवति मन्त्रिणाम्।
अनवस्थितचित्तत्वात् कार्य्ये तैः स उपेक्ष्यते ॥ ४५ ॥

नश्यति विनष्टो भवति, अनुधावनपर-रिपुसैन्यहस्तेन इति भावः ; तथा किञ्च, भीरुकजनः भयशीलामात्यादिसहायः, राजा इति शेषः, तैः स्वपक्षीयैः जनैरेव, सङ्ग्रामे युद्धे, विमुच्यते त्यज्यते, अतः इमावपि सुजयौ इति भावः। ("स्वयमेव" इत्यत्र "क्षिप्रमेव" "तथैव भीरुकजनः" इत्यत्र "वीरोऽप्यवीरपुरुषः" इति कामन्दकीयः पाठः)।

(४३) लुब्धस्येति।—असंविभागित्वात् अयथायथविभागशीलत्वात्, युद्धे लुण्ठितद्रव्याणां सैन्येभ्यः यथायथम् अंशाप्रदानादित्यर्थः, लुब्धस्य लोभपरवशस्य स्वामिनः, अनुजीविनः अनुचराः, स्वसैनिका इत्यर्थः, न युध्यन्ते युद्धं न कुर्वन्ति। लुब्धाः धनलोलुपाः, अनुजीवकाः सेवकाः, सैनिकादयः इत्यर्थः, तैः धनलोभिसैनिकैरित्यर्थः, ("लुब्धानुजीविकैः" इति पाठस्तु अव्युत्पन्नत्वात् न विशुद्धः। "लुब्धानुजीवी तैरेव दानभिन्नैर्निहन्यते" इति कामन्दकीयः पाठः सुगमार्थः साधुश्च। लुब्धा अनुजीविनः सैनिका यस्य तादृशः राजा, दानभिन्नैः विजिगीषुणा दानेन भेदं प्रापितैः, तैरेव लुब्धैरनुजीविभिरेव, निहन्यते) दानहीनैः अपुरस्कृतैः सद्भिः, एषः स्वामी, निहन्यते विनाश्यते। अत एतावपि विग्रहमात्रेणैव सुजयौ इति भावः।

(४४) सन्त्यज्यते इति।—विरक्ताः विकृतिमापन्नाः, स्वामिनि अपरक्ता इत्यर्थः, अदण्ड्यदण्डनाद्याचरणादिति भावः, प्रकृतयः अमात्यादयः यस्य सः तथाभूतः राजा, युधि युद्धे, प्रकृतिभिः अमात्यादिभिः, सन्त्यज्यते हीयते। विषयेषु स्रक्चन्दनवनिताद्युपभोगेषु, अतिसक्तिमान् अत्यासक्तः, सुखाभियोज्यः सुखेन अनायासेन, अभियोज्यः पराभवनीयः, ("सुखाभियोगः" इति कामन्दकीयः पाठः) भवति। अत एतयोरपि सुजयत्वात् नास्ति सन्धेः प्रयोजनम् इति हृदयम्।

(४५) अनेकेति।—अनेकचित्तमन्त्रः बहुजनज्ञातमन्त्रः सन्मन्त्रणायामस्थिरचित्त इति वा, नृपतिरिति शेषः, मन्त्रिणां सचिवानां, द्वेष्यः विद्वेषभाजनम्, अप्रिय इत्यर्थः,

सदा धर्मबलीयस्त्वाद्देवब्राह्मणनिन्दकः ।
विशीर्य्यति स्वयं ह्येव दैवोपहतकस्तथा ॥ ४६ ॥
सम्पत्तेश्च विपत्तेश्च दैवमेव हि कारणम् ।
इति दैवपरो ध्यायन् नात्मानमपि चेष्टयेत् ॥ ४७ ॥
दुर्भिक्षव्यसनी चैव स्वयमेवावसीदति ।
बलव्यसनयुक्तस्य योद्धुं शक्तिर्न जायते ॥ ४८ ॥

---

यथोक्तायवर्षादिति भावः, भवति, अतः अनवस्थितचित्तत्वात् अस्थिरमतित्वात्, कार्य्ये मन्त्रणाविषये, तैः मन्त्रिभिः, स राजा, उपेक्ष्यते अनाद्रियते, त्यज्यते इत्यर्थः, न गण्यते इति यावत् ; अत एषोऽपि सुजय इति भावः। ("समुपेक्ष्यते" इति कामन्दकीयः पाठः)।

(४६) सदेति।—सदा नित्यकालं, धर्मबलीयस्त्वात् धर्मस्य बलवत्त्वात्, "यतो धर्मः ततो जयः" इति स्थितेः इत्यर्थः, ("सदाऽधर्मबलीयस्त्वात्" इति कामन्दकीयपाठे,—अधर्मपरत्वात्, प्रबलाधर्माचरणादित्यर्थः) देवब्राह्मणनिन्दकः देवताविप्राणां कुत्साकारी, अधार्मिक इत्यर्थः, तथा दैवोपहतकः प्रतिकूलविधि-विड़म्बितः, हतभाग्य इत्यर्थः, स्वयमप्रमत्तः सन् कृतारम्भोऽपि नियतिवशात् व्यर्थसंव-चेष्ट इति यावत्, राजा स्वयमेव आत्मनैव, हि निश्चयेन, विशीर्य्यते अवसीदति, विनाऽप्यभियोगं निजकर्मवशात् स्वयमेव क्षयमाप्नोतीत्यर्थः।

(४७) सम्पत्तेरिति।—दैवपरः दैवमात्रावलम्बी, अदृष्टमात्रनिर्भरशील इति यावत्, राजा इति शेषः, सम्पत्तेश्च सम्पदश्च, विपत्तेश्च विपदश्च, दैवं भाग्यम् एव, कारणं हेतुः, इति ध्यायन् चिन्तयन्, आत्मानमपि स्वमपि, न हि चेष्टयेत् नैव कार्य्येषु नियोजयेत्, प्रत्युत निश्चेष्टः तिष्ठति इत्यर्थः ; स तु नितरां कापुरुष इति गूढ़ाशयः। ("सम्पत्तेश्च विपत्तेश्च" इत्यत्र "सम्पत्तौ च विपत्तौ च" तथा "नात्मानमपि चेष्टयेत्" इत्यत्र "आत्मना न विचेष्टते" इति कामन्दकीयनीतिः। न विचेष्टते न पौरुषमारभते इत्यर्थः)।

(४८) दुर्भिक्षेति।—दुर्भिक्षव्यसनी दुर्भिक्षश्च अन्नाभावश्च, व्यसनञ्च विविधा विपच्च, विद्येते यस्य सः, दुर्भिक्षरूपविपत्पीड़ित इति वा, नृपः, स्वयमेव आत्मनैव, अवसीदति दुर्बलो भवति। बलव्यसनयुक्तस्य बलव्यसनम् "उपरुद्धं परिक्षिप्तं विमानितममानितम्। अभृतं व्याधितं श्रान्तं दूरायातं नवागतम्॥ परिक्षीणं

अदेशस्थो हि रिपुणा स्वल्पकेनापि हन्यते।
ग्राहोऽल्पीयानपि जले गजेन्द्रमपि कर्षति॥ ४९॥

प्रतिहतं प्रहताग्रजवं तथा। आशानिर्वेद्यभूमिष्ठमनृतप्राप्तमेव च॥ कलत्रगर्भं-तिक्षिप्तमन्तःशल्यं तथैव च। भिन्नगर्भं त्वपसृतमवमुक्तं तथैव च॥ क्रुद्ध-मौलारिमित्रञ्च निविष्टञ्चापि विद्विषा। दूष्ययुक्तं स्वविक्षिप्तं मित्रविक्षिप्तमेव च॥ विच्छिन्नवीवधाऽऽसारं शून्यमूलं तथैव च। अस्वामिसङ्गतञ्चैव भिन्नकूटं तथैव च॥ दुष्पार्ष्णिग्राहमन्धञ्च बलव्यसनमुच्यते"॥ इति कामन्दकोक्तलक्षणा त्रयस्त्रिंशद्विधा सैन्यव्यापत्तिः, यया व्यापत्त्या तानि योद्धुमसमर्थानि भवन्ति; तत्र—परिक्षिप्त सर्वतः परिवेष्टितम्। अमानितं दानादिना असत्कृतम्। अभृतम् अप्राप्तवेतनम्। परिक्षीणम् आहवान्तरे हतमुख्यवीरम्। प्रतिहतं प्रथमाक्रमणे एव भग्नम्। प्रहताग्र-जवं निहताग्रवीरम्। आशानिर्वेदं आशाभङ्गयुक्तम्। अभूमिष्ठम् अयुद्धयोग्य-भूमिप्राप्तम्। अनृतप्राप्तम् उपयुक्तायुधवाहनादिविहीनम्। कलत्रगर्भं युद्धा-गतस्त्रीकर्म्मकरवर्गयुक्तम्। अतिक्षिप्त शत्रुमित्राद्यनेकराज्यान्तरितम्। अन्तःशल्य गुप्तभावेन अन्तःप्रविष्टं शत्रुरूपं शल्यम्। भिन्नगर्भं परस्पर भेदं प्राप्तम्। अपसृतं शत्रु-राज्येन एकान्तरितम्। अवमुक्तम् अपहृतमुख्यवीरम्। क्रुद्धमौलं कुपितपितृपैतामहं सैन्यम्। अरिमित्रं युद्धयात्रायां शत्रुभिः सहैकत्र स्थितं मित्रबलम्। विद्विषा निविष्ट शत्रोः समीपे निविष्टम्। दूष्ययुक्तं दुष्टप्रकृतिलोकाधिष्ठितम्। स्वविक्षिप्तं स्वदेशे इतस्ततो विक्षिप्तम्। मित्रविक्षिप्तम् असाध्यसाधनार्थं मित्रेषु दत्तम्। विच्छिन्न-वीवधासारं स्वदेशात् पृष्ठतः धान्यादीनां प्राप्तिर्वीवधः, सुहृद्बलम् आसारः, तदुभय-विच्छिन्नम्। शून्यमूलं मौलसैन्यविरहितम्। अस्वामिसङ्गतम् आपदि स्वामिना अनधिष्ठितम्। भिन्नकूटम् अनायकम्। दुष्पार्ष्णिग्राहं दुष्टपृष्ठरक्षकबलम्। अन्धम् उपदेष्टृविरहितम्। एषां विस्तरस्तु अस्मदीयकामन्दकीयनीतिसारे अभिनवसंस्कृते सटीके द्रष्टव्यः इति; तेन युक्तस्य समन्वितस्य, सैन्यव्यसनेन विपन्नस्य, नृपस्येति शेषः, योद्धुं विग्रहीतुं, शक्तिः सामर्थ्यं, न जायते न भवति। ("विद्यते" इति कामन्दकीयः पाठः)।

(४९) अदेशस्थ इति।—अदेशस्थः स्वसैन्यचालनायोग्ये देशे स्थितः, राजा इति शेषः, स्वल्पकेनापि क्षुद्रेणापि, रिपुणा शत्रुणा, हन्यते वध्यते। अत्र दृष्टान्तमाह,—अल्पीयान् अतिक्षुद्रः, दुर्बल इत्यर्थः, ग्राहोऽपि जलजन्तुविशेषोऽपि, जले जलाशये इत्यर्थः, ग्राहस्य निजदेशे इति भावः, पतितम् इति शेषः, गजेन्द्रमपि

बहुशत्रुस्तु सन्त्रस्तः श्येनमध्ये कपोतवत् ।
येनैव गच्छति पथा तेनैवासौ विपद्यते ॥ ५० ॥
अकालसैन्ययुक्तस्तु हन्यते कालयोधिना ।
कौशिकेन हतज्योतिर्निशीथ इव वायसः ॥ ५१ ॥
सत्यधर्मव्यपेतेन न सन्दध्यात् कदाचन ।
स संहितोऽप्यसाधुत्वादचिरात् याति विक्रियाम् ॥५२॥

---

मत्तगजमपि, स्वदेशस्थं महाकायमपीति भावः, कर्षति आकर्षति, आक्रम्य स्वायत्तं करोतीत्यर्थः, हन्तीति भावः, स्वल्पप्राणिनन्तु कर्षत्येवेति अपिकारस्य सार्थकम्। ("कर्षति" इत्यनन्तरं "स्वाह्वानीरदेशस्थः शुनाऽपि परिभूयते" इत्यधिकः पाठः कामन्दके ) स्थानं प्रधानं न बलं प्रधानम् इति भावः ।

( ५० ) बह्विति ।—बहुशत्रुस्तु बहुवैरी नृपतिः पुनः, ( बह्वमित्रस्तु" इति कामन्दकीयपाठः ) श्येनमध्ये शशादपक्षिमध्ये, "बाज" इति ख्यातपक्षिणामभ्यन्तरे इत्यर्थः, कपोतवत् पारावत इव, सन्त्रस्तः अतीव भीतः सन्, प्रकोपितबहुमण्डलतया इति भावः, येनैव पथा मार्गेण, गच्छति निर्गन्तुमिच्छतीत्यर्थः, असौ बहुशत्रुर्नृपः, तेनैव पथा, विपद्यते विपन्नो भवति, म्रियते इत्यर्थः, ("असौ विपद्यते" इत्यत्र "आशु विनश्यति" इति कामन्दकीयपाठे—शीघ्रं विनाशमाप्नोतीत्यर्थः ) बहुशत्रुरपि सुखेन जेतुं शक्यः इति सोऽपि विग्राह्य इति भावः ।

( ५१ ) अकालेति ।—अकाले युद्धस्यानुचितसमये, आत्मनः न्यूनतादिदोषे सत्यपि इत्यर्थः, सैन्यानि सेनाः, युक्तानि युद्धाय नियुक्तानि येन सः, सम्पूर्णोद्योगमकृत्वैव कृतयुद्धारम्भ इत्यर्थः, नृप इति शेषः, ( "अकालयुक्तसैन्यस्तु" इति कामन्दकीयः पाठः साधुः ) कालयोधिना यथोचितकाले युध्यते यः तेन बलवद्यं कृत्वा कृतयुद्धारम्भेण, वैरिणा इति शेषः, निशीथे रात्रौ, ( "निशीथस्तु पुमानर्द्धरात्रे स्यात् रात्रिमात्रके" इति मेदिनी ) हतज्योतिः हतं विनष्टं, ज्योतिः दृष्टिः, दर्शनशक्तिरित्यर्थः, यस्य तादृशः, ("ज्योतिरग्नौ दिवाकरे। पुमान्नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः" इति मेदिनी ) विनष्टदर्शनशक्तिः, वायसः काकः, कौशिकेन उलूकेन, पेचकेन इव इत्यर्थः, ( "महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः" इत्यमरः ) हन्यते विनश्यते, अनायासेनैव पराभूयते इत्यर्थः।

( ५२ ) सत्येति।—कदाचन कस्मिंश्चिदपि काले, आपदि अपि इत्यर्थः,

अपरमपि कथयामि, (छ) सन्धिविग्रहयानासनसंश्रयद्वैधीभावाः

सत्यधर्मव्यपेतेन सत्यात् धर्माच्च भ्रष्टेन, राज्ञा सह इति शेषः, न सन्दध्यात सन्धिं न कुर्य्यात् ; कथं न सन्दध्यात् ? इत्याह, स सत्यधर्मव्यपेतः, संहितः सन्धिना मिलितोऽपि, ("स संहितोऽपि" इत्यत्र "सुसंहितोऽपि" इति कामन्दकीयः पाठः) असाधुत्वात् दुष्टस्वभावत्वात्, अस्थिरप्रकृतित्वादिति भावः ; अचिरात् शीघ्रमेव, विक्रियां विकारं, सन्धिमर्य्यादामुल्लङ्घ्य पुनः विद्वेषभावम् इति यावत्, याति प्राप्नोति ; केनचित् छद्मना सन्धिं विघटयति इत्यर्थः ।

(छ) सन्धीति ।—सन्धिः,—पणबन्धः, धनादिदानेन शत्रुणा सह मैत्रीस्थापनमित्यर्थः, स च कपालादिभेदेन षोडशविधो ज्ञेयः ; विग्रहः,—युद्धं, परस्थले दाहलुण्ठनच्छेदादिरूपं परस्परापकरणमिति यावत्, स च प्रकाशादिभेदेन विविधः ; यानं—युद्धयात्रा, "उत्कृष्टबलवीर्य्यस्य विजिगीषोर्जयैषिणः । गुणानुरक्तप्रकृतेः यात्रा यानमिति स्मृतम्" ॥ इति कामन्दकोक्तेः क्षतमूलराष्ट्रचक्रस्य उपचितशक्तेः शत्रोरवस्कन्दनाय यात्रा इति यावत्, तच्च विगृह्ययानादिभेदेन पञ्चविधं ज्ञेयम् ; आसनं—"परस्परस्य सामर्थ्यविघातादासनं स्मृतम् । अरेश्च विजिगीषोश्च—"इति कामन्दकोक्त्या "नाहमिदानीं योद्धुं समर्थः" इति युद्धं स्थगयित्वा कालाद्यपेक्षया दुर्गादीन् वर्द्धयतः अवस्थानं, यदा शत्रुर्विजिगीषोः विजिगीषुश्च शत्रोः विग्रहे सामर्थ्यमुपहन्तुं समर्थः, तदा यदुपेक्षणं तदासनमिति यावत्, तदपि विगृह्यासनादिभेदेन पञ्चविधं ज्ञेयम् ; संश्रयः,—"उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः । कुलोद्भूतं सत्यमार्य्यमाश्रयेत बलोत्कटम् ॥ ददत् बलं वा कोषं वा भूमिं वा भूतिसम्भवाम् । आश्रयेदभियोक्तारं विसन्धिरनपाश्रयः" ॥ इति कामन्दकोक्त्या प्रबलरिपुणा उच्छिद्यमानस्य हीनशक्तेर्यत् बलवद्धर्मविजयिसमाश्रयणं तदाश्रयः, तस्यैव वा प्रबलशत्रोः सेवया बलकोषादिदानेन वा आश्रयग्रहणम्, एवञ्च द्विविधः संश्रयः ; द्वैधीभावः,—"बलिनोर्द्विषतोर्मध्ये वाचाऽऽत्मानं समर्पयन् । द्वैधीभावेन वर्त्तेत काकाक्षिवदलक्षितः ॥ यापयेद्यवमाश्रित्य सन्निकृष्टतरस्तयोः । उभयोरपि सम्पाते सेवेत बलवत्तरम् ॥ यदा तावपि नेच्छतां संश्लेषं जातसंविदौ । तदोपसर्पेत्तच्छत्रुमधिकं वा स्वमाश्रयेत्" ॥ इति कामन्दकोक्त्या बलिनोर्वैरिणोर्मध्ये काकाक्षिवदलक्षिततया स्थितः "इदं राज्यमहञ्च तवैव" इति उभयत्र वाचा आत्मानं समर्पयन् द्वैधीभावेन दुर्गमाश्रित्य वर्त्तनं, शत्रुणैव वा सन्धिविग्रहसमुदायहेतोर्दुर्गाश्रयव्यापारः, इति द्विविधो द्वैधीभावः ; तदुक्तं कौटिल्ये,—"सहायसाध्ये कार्य्ये द्वैधीभावं गच्छेत्" इति ।

षाड्गुण्यम्। (ज) कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्, देश-कालविभागः, विनिपातप्रतीकारः, कार्य्यसिद्धिश्चेति पञ्चाङ्गो मन्त्रः। (झ) साम-दान-भेद-दण्डाश्चत्वार उपायाः।

---

अयमपि स्वतन्त्रपरतन्त्रभेदेन द्विविधो ज्ञातव्यः,—"पार्श्वस्थो वा बलवतोरासन्नभयात् प्रतिकुर्वीत, दुर्गापाश्रयो वा द्वैधीभूतस्तिष्ठेत् सन्धिविग्रहहेतुभिर्वा चेष्टेत" इति च। केचित्तु,—"बलिना सह सन्धिः अबलेन सह विग्रहः, अथवा मूलप्रकृतिभिः सह सन्धाय शत्रुणा सह विग्रहः" इत्यपरं द्विविधं द्वैधीभावमाहुः। षड्गुणा एव षाड्गुण्यं [ चातुर्वर्ण्यादित्वात् ष्यञ् ]।

(ज) कर्मणामिति।—कर्मणां—विग्रहादीनाम्, आरम्भोपायः,—तदुपयोगि-सहायसङ्ग्रहः। पुरुषद्रव्यसम्पत—पुरुषद्रव्ययोः बलकोषयोः, सम्पत् उत्कर्षः, प्रवीर-पुरुषप्रभूतधनयोः सङ्ग्रहः इत्यर्थः। देशकालविभागः,—प्रारब्धकर्मणः साधनार्थं तदुपयोगिनोः उत्कृष्टस्थानकालयोर्निर्णयः। विनिपातप्रतीकारः,—आरब्धकर्मणि दैवस्य मानुषस्य च विघ्नस्य आपर्वणैः सामादिभिश्च उपायैः प्रतिविधानम्। कार्य्यसिद्धिः,—कार्य्यस्य आरब्धकर्मणः, सिद्धिः निष्पत्तिः, फलदर्शनम् इत्यर्थः, एतेषां पञ्चानां सौष्ठवसम्पादनमेव मन्त्रणाफलमिति निष्कर्षः। कामन्दकीये तु,—"सहायाः साधनोपाया. विभागो देशकालयोः। विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्ग इष्यते" ॥ इति पञ्चाङ्गो मन्त्रः पठितः। व्याख्यातस्तु टीकाकृता शङ्कराय्येण,—"अत्र दुर्गकर्मणि सहायाः मुख्याः शूद्राश्च पुरुषाः। साधनोपायाः दुर्गस्यारम्भे प्रत्युपायाः कुद्दाल-कुठार-करपत्रादयः। विभागो देशकालयोरिति तत्र जनपदान्ते जनपदमध्ये चेति देशविभागः; वर्षासु काष्ठादिकर्म ग्रीष्मे हेमन्ते च इष्टकादिकर्म इति कालविभागः। विपत्तेश्चेति आरब्धे दुर्गकर्मणि दैव्या मानुष्याश्चोत्पन्नाया विपदः अथर्वाभिरुपायैः सामादिभिश्च प्रतीकारः। सिद्धिरिति कार्य्यस्येति शेषः" इति।

(झ) सामेति।—साम—प्रियवाक्येन वैरिणः क्रोधोपशमनं, तच्च पञ्च-विधम्; दानं—स्वधनस्य परस्मै प्रतिपादनं, धनादिना वैरप्रतीकारः इत्यर्थः, तच्च पञ्चविधम्; भेदः,—उपजापः, शत्रोरमात्यादीनां परतो विश्लिष्य उपायेनात्मसात्करण-मित्यर्थः, स च त्रिविधः; दण्डः,—विग्रहः, शास्तिरित्यर्थः, सोऽपि त्रिविधः; एषां भेदास्तु नीतिशास्त्रे विशदीकृताः। केचित्तु,—"मायोपेक्षेन्द्रजालञ्च सप्तोपायाः प्रकीर्त्तिताः" इति मायादिभिः त्रिभिः सह सामादयश्चत्वारः सप्त उपायाः कथ्यन्ते।

(ञ) उत्साहशक्तिः, मन्त्रशक्तिः प्रभुशक्तिश्चेति शक्तित्रयम्। एतत् सर्वम् आलोच्य नित्यं विजिगीषवो भवन्ति महान्तः।

यतः,—

या हि प्राणपरित्यागमूल्येनापि न लभ्यते।
सा श्रीर्नीतिविदां वेश्म चञ्चलाऽपि प्रधावति॥ ५३॥

तथा चोक्तम्,—वित्तं यदा यस्य समं विभक्तं
गूढ़श्च चारो निभृतश्च मन्त्रः।
न चाप्रियं प्राणिषु यो ब्रवीति
स सागरान्तां पृथिवीं प्रशास्ति॥ ५४॥

---

(ञ) उत्साहेति।—उत्साहशक्तिः,—विक्रमबलम्। मन्त्रशक्तिः,—सन्ध्यादीनां सामादीनाञ्च यथावस्थापनम्; पञ्चाङ्गमन्त्रो मन्त्रशक्तिरित्यन्ये। प्रभुशक्तिः,—कोषदण्डबलम्।

(५३) नयमूला हि सम्पत् इत्याह, येति।—प्राणपरित्यागः जीवनोत्सर्गः एव, मूल्यं पणः तेनापि, प्राणविसर्जनरूपमूल्यदानेनापि, या श्रीः, न हि लभ्यते नैव प्राप्यते, प्राणपणेनापि या न सुलभा इत्यर्थः, सा श्रीः राजलक्ष्मीः, चञ्चलाऽपि स्वभावचपलाऽपि, नीतिविदां नयज्ञानां, नीतिशास्त्रानुसारेण कार्य्यं कुर्वतामित्यर्थः, जनानामिति शेषः, वेश्म गृहं, प्रधावति सत्वरमेव गच्छति, अस्थिराऽपि सा तत्र सुचिरं सुस्थिरा तिष्ठतीत्यर्थः, प्रभावोत्साहशक्तितोऽपि मन्त्रशक्तिः गरीयसीति भावः। यदुक्तं कामन्दकीये,—"प्रभावोत्साहशक्तिभ्यां मन्त्रशक्तिः प्रशस्यते" इति।

(५४) नीतिसङ्गतकार्य्यस्य फलमाह, वित्तमिति।—यदा यस्मिन् समये, ("यदा" इत्यत्र "सदा" इति पाठकल्पना साध्वी) यस्य राज्ञः, वित्तं धनं, समं तुल्यं, तुल्यभावेन इत्यर्थः, विभक्तम् अनुजीविभ्यः विभज्य दत्त, भवतीति शेषः, चारश्च प्रणिधिश्च, गूढ़ः गुप्तः, गुप्तभावेन परेषां मन्त्रभेदतत्परः, परन्तु रिपवः यस्य प्रचारं घुणाक्षरन्यायेनापि न विजानन्ति तादृश इत्यर्थः, मन्त्रश्च मन्त्रणाकार्य्यञ्च, निभृतः निगूढ़ः, नान्यसन्निधौ प्रकाशितः इत्यर्थः, यश्च प्राणिषु जनेषु, अप्रियं परुषं, न ब्रवीति न कथयति, तदा स राजा, सागरान्तां ससागरां, पृथिवीं धरणीं, राज्यमित्यर्थः, प्रशास्ति पालयति; सः सम्राट् भवतीत्यर्थः। उपजातिर्वृत्तम्।

किन्तु देव ! यद्यपि महामन्त्रिणा गृध्रेण (ट) सन्धानम् (ठ) उपन्यस्तं, तथाऽपि तेन राजा सम्प्रति (ड) भूतजयदर्पात् न मन्तव्यम्। तत् (ढ) एवं क्रियताम्—अस्मन्मित्रं सिंहलद्वीपस्य महाबलो नाम सारसो राजा (ण) जम्बुद्वीपे कोपं जनयतु। यतः,—

सुगुप्तिमाधाय सुसंहतेन बलेन वीरो विचरन्नरातिम्।
सन्तापयेत् येन समं सुतप्तस्तप्तेन सन्धानमुपैति तप्तः" ॥५५॥

(ट) सन्धानं—मेलनं, सन्धिरित्यर्थः।

(ठ) उपन्यस्तम—उपक्रान्तम, उपदिष्टमित्यर्थः।

(ड) भूतजयदर्पात—भूतः सञ्जातः, अस्माकं विमर्द्दनेन इत्यर्थः, यद्वा,—भूतः अतीतः, यो जयः विजयलाभः, तस्मात् यो दर्पः गर्वः तस्मात्। मन्तव्यं—स्वीकर्त्तव्यमित्यर्थः।

(ढ) एवं—वक्ष्यमाणम्।

(ण) जम्बुद्वीपे—चित्रवर्णस्य राज्ये इति यावत्। कोपं—प्रकृतीनामसन्तोषमित्यर्थः, राज्यमाक्रम्य तत्रत्यप्रजाविमर्द्दनादिति भावः।

(५५) कामन्दकीतिमनुसृत्य समबलयोः सुसन्धेयत्वं प्रदर्शयति, सुगुप्तिमिति।—वीरः विक्रान्तो राजा, पूर्वं पराभूततया स्वयमुत्तप्त इति भावः, ("वीरः" इत्यत्र "धीरः" इति कामन्दकीयपाठः साधुः) सुगुप्तिं गूढभावम, आधाय अवलम्ब्य, अतीव रहसि इत्यर्थः, सुसंहतेन सुदृढ़ेन, विक्रान्तेनेत्यर्थः, बलेन सैन्येन, अरातिं शत्रुं, विचरन् गच्छन्, आक्रमन् इत्यर्थः, तदन्तः प्रवेशं लभमानो वा, ("सुगुप्तिम्" इत्यत्र "स्वगुप्तिम्" इति कामन्दकीयपाठे—धीरः सुसंहतेन सुदृढ़ेन, परस्य अभेद्येन इत्यर्थः, बलेन स्वगुप्तिम् आत्मरक्षां, विधाय सम्पाद्य) सन्तापयेत् पीड़येत्, येन पीड़नेन, समं तुल्य, स्वसदृशमित्यर्थः, सुतप्तः उपद्रुतः इत्यर्थः, भवतीति शेषः। ("समं सुतप्तः" इत्यत्र "सुसम्प्रतप्तः" इति कामन्दकीयपाठः) ततः किम ? इत्याह,—तथा हि तप्तः उत्तापपीड़ितः, विद्रुत इत्यर्थः, तप्तेन उत्तप्तेन सह, सन्धानं मेलनं, सन्धिम् इत्यर्थः, उपैति लभते, तप्तेन धातुना तप्तधातुखण्डमिव इति भावः; अयमभिप्रायः,—हीनबलो नरपतिः प्रबलेन विद्विषा निपीड़ितः सन्धानमिच्छेच्चेत् स यद्यदभिकाङ्क्षति, हीनबलेन तत्तदेव दातव्यं भवेत्, अतस्तदा सन्धिर्न विधेयः,

राजाऽऽह,—"एवमस्तु"। इति (त) निगद्य तेन विचित्रो नाम बकः सुगुप्तलेखं दत्त्वा सिंहलद्वीपं प्रस्थापितः। अथ प्रणिधिः पुनरागत्य उक्तवान्,—"देव! श्रूयतां तावत् (थ) तत्रत्यप्रस्तावः। एवं तत्र गृध्रेणोक्तं,—"देव! मेघवर्णस्तत्र चिरम् (द) उषितः; स वेत्ति किं सन्धेयगुणयुक्तो हिरण्यगर्भो राजा न वा" इति। ततोऽसौ मेघवर्णश्चित्रवर्णेन राज्ञा समाहूय पृष्टः,—"वायस! कीदृशोऽसौ हिरण्यगर्भो राजा? चक्रवाको मन्त्री वा कीदृशः?"। मेघवर्णो ब्रूते,—"देव! स हिरण्यगर्भो राजा युधिष्ठिरसमो (ध) महाऽऽशयः सत्यवाक्। चक्रवाकसदृशो मन्त्री न क्वापि अवलोक्यते"। राजाऽऽह,—"यद्येवं तदा कथमसौ त्वया वञ्चितः?"। मेघवर्णो विहस्य ब्रूते,—"देव!—

विश्वासप्रतिपन्नानां वञ्चने का विदग्धता?।
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम्? ॥ ५६ ॥

---

परन्तु स्वाभ्युदयप्रतीक्षया विविधापदंशेन कालोऽतिवाहयितव्यः। अवसरे चास्मिन् तथोपायो विधातव्यः यथा सोऽपि स्वानुरूपः विपन्नो भवेत्, एवञ्च उभयोरेव तुल्यस्यापत्तया विद्रुतधातुखण्डेन विद्रुतधातुखण्डस्येव सन्धिः सुकरः स्यादिति। उपजातिः वृत्तम्।

(त) निगद्य—कथयित्वा। सुगुप्तलेखं—निगूढपत्रिकाम्।

(थ) तत्रत्यप्रस्तावः,—तत्रत्यः तत्स्थानीयः, प्रस्तावः प्रसङ्गः, तत्रत्या वार्त्ता इत्यर्थः।

(द) उषितः,—अवस्थितः, वासं कृतवानित्यर्थः। [वस+"गत्यर्थाकर्मक—" (३।४।७२ पा०) इति कर्त्तरि क्तः। "वसतिक्षुधोरिट्" (७।२।५२ पा०) इति इट्। "वचिस्वपि—" (६।१।१५ पा०) इति सम्प्रसारणम्। "शासिवसि—" (८।३।६० पा०) इति षत्वम्]।

(ध) महाशयः,—महान् उदारः, आशयः अन्तःकरणं यस्य सः मनस्वी इत्यर्थः। सत्यवाक्—सत्यवादी।

(५६) विश्वासेति।—विश्वासप्रतिपन्नानां प्राप्तविश्वासानां, सर्वभूतेषु विश्वासं

शृणु देव ! तेन मन्त्रिणा अहं प्रथमदर्शन एव विज्ञातः, किन्तु महाऽऽशयोऽसौ राजा, तेन मया ( न ) विप्रलब्धः। तथा चोक्तम्,—

आत्मौपम्येन यो वेत्ति दुर्जनं सत्यवादिनम्।
स एव वञ्च्यते तेन ब्राह्मणश्छागतो यथा" ॥ ५७ ॥

राजाऽऽह,—"कथमेतत् ?"। मेघवर्णः कथयति,—

ब्राह्मण-च्छाग-धूर्त्तत्रयकथा।—

"अस्ति गौतमारण्ये ( प ) प्रस्तुतयज्ञः कश्चित् ब्राह्मणः। स च यज्ञार्थं ग्रामान्तरं गत्वा छागमुपक्रीय स्कन्धे नीत्वा गच्छन् धूर्त्तत्रयेण अवलोकितः। ततस्ते धूर्त्ताः,—"यदि एष छागः केनापि उपायेन लभ्यते, तदा ( फ ) मतिप्रकर्षो भवति"

---

कृतवतामित्यर्थः, जनानामिति शेषः, वञ्चने प्रतारणे, का विदग्धता ? किं पाण्डित्यम् ? किं नैपुण्यम् ? इत्यर्थः, सर्वप्राणिषु नितरां विश्वासकारकी हि स्वल्पेनैवोपायेन प्रतारयितुं शक्यते इत्यर्थः, हि तथाहि, अङ्कं क्रोड़म्, आरुह्य आश्रित्य, सुप्तं निद्रितम्, अतीव कृतविश्वासमित्यर्थः, जनमिति शेषः, हत्वा विनाश्य, किं पौरुषम् ? कः पुरुषकारः ?, नाम सम्भावनायां, न किमपि पौरुषं सम्भावयामीत्यर्थः, अतोऽत्र धार्म्मिके मया वञ्चना कर्त्तुमशक्यत इति भावः।

( न ) विप्रलब्धः,—प्रतारितः।

( ५७ ) न सर्वत्र विश्वासस्थापनं विज्ञसम्मतम् इति दृष्टान्तेनाह, आत्मौपम्येनेति।—यो जनः, आत्मनः स्वस्य, उपमा इव औपम्यं [ स्वार्थे ष्यञ्-प्रत्ययः ] आत्मौपम्यं तेन आत्मतुलनया, दुर्ज्जनम् असज्जनं, मिथ्यावादिनमिति यावत्, सत्यवादिनं यथार्थभाषिणं, वेत्ति जानाति, दुर्जनवाक्येषु विश्वसिति इत्यर्थः, स जनः, छागतः छागलात्, [ अपादाने पञ्चमी ] यद्वा,—छागमुपलक्षीकृत्य इत्यर्थः, [ ल्यब्लोपे पञ्चमी ] ब्राह्मणः यथा ब्राह्मण इव, तेन एव दुर्जनेनैव, वञ्च्यते प्रतार्य्यते, नातः दुर्जनवाक्यं विश्वसनीयम् इति भावः। ( अत्र तृतीयचरणे "स एव वञ्चितस्तेन" "स तथा वञ्च्यते धूर्त्तैः" इति च पाठान्तरद्वयम् )।

( प ) प्रस्तुतयज्ञः,—आरब्धयागः।

( फ ) मतिप्रकर्षः,—बुद्धिचातुर्य्यम्। भवति—प्रकाशितो भवतीत्यर्थः।

इति आलोच्य (व) प्रान्तरवृक्षत्रयतले क्रोशान्तरेण तस्य ब्राह्मणस्य आगमनं प्रतीक्ष्य वर्त्मनि उपविश्य स्थिताः। तत्र एकेन धूर्त्तेन गच्छन् स ब्राह्मणः अभिहितः,—"भो ब्राह्मण! किमिति त्वया कुक्कुरः स्कन्धेन उह्यते?"। विप्रेण उक्तं,—"नायं श्वा, किन्तु यज्ञच्छागः"। अनन्तरं पुनः द्वितीयेन धूर्त्तेन क्रोशमात्रस्थितेन तदेव उक्तम्। तदाकर्ण्य ब्राह्मणश्छागं भूमौ निधाय मुहुर्मुहुः निरीक्ष्य पुनः स्कन्धे कृत्वा (भ) दोलायमानमतिश्चलितः। यतः,—

मतिर्दोलायते नूनं सतामपि खलोक्तिभिः।
ताभिर्विश्वासितो योऽसौ म्रियते चित्रकर्णवत्" ॥ ५८ ॥

राजा पृच्छति—"कथमेतत्?"। स कथयति,—

सिंह-काक-व्याघ्र-शृगालोष्ट्रकथा।—

"अस्ति कस्मिंश्चित् वनोद्देशे मदोत्कटो नाम सिंहः। तस्य अनुचरास्त्रयः, काको व्याघ्रः शृगालश्च। अथ तैर्भ्रमद्भिः

(व) प्रान्तरवृक्षत्रयतले—प्रान्तरे दूरशून्येऽध्वनि, छायाजलादिविवर्जिते बहुदूरगम्ये मार्गे इत्यर्थः, ("प्रान्तरं कोटरेऽरण्ये दूरशून्यपथेऽपि च" इति हैमः) यत् वृक्षत्रयं त्रयः पादपाः, तस्य तले अधोदेशे। क्रोशान्तरेण—परस्परं क्रोश-परिमितमार्गव्यवधानेनेत्यर्थः। वर्त्मनि—ब्राह्मणस्य गमनमार्गे।

(भ) दोलायमानमतिः,—चलच्चित्तः, संशयितबुद्धिरिति यावत्। [दोला+क्यङ्-शानच्, दोला+अय+शानच् इति वा]।

(५८) पिशुने विश्वासो महाऽनर्थकर इत्याह, मतिरिति।—सतां धीराणा-मपि, सुधियामपीत्यर्थः, ("सन् साधौ धीरप्रशस्तयोः। मान्ये सत्ये विद्यमाने त्रिषु साध्व्युग्रमथोः स्त्रियाम्" इति मेदिनी) मतिः बुद्धिः, खलोक्तिभिः दुर्जनानामापात-मधुरैः वचनैः, नूनं निश्चितं, दोलायते विचलति, अस्थिरीभवतीत्यर्थः, यः जनः, ताभिः खलोक्तिभिः, विश्वासितः सञ्जातविश्वासः, खलवचःसु कृतविश्वासः इत्यर्थः, भवति इति शेषः, असौ जनः, चित्रकर्णवत् चित्रकर्णनामा उष्ट्र इव, म्रियते पञ्चत्वं याति, अतो दुर्जनवाक्यं न श्रद्धेयमिति भावः।

(म) सार्थभ्रष्टः कश्चित् उष्ट्रो दृष्टः पृष्टश्च,—"कुतो भवान् आगतः ?"। स च आत्मवृत्तान्तम् अकथयत्। ततस्तैर्नीत्वा असौ सिंहाय समर्पितः। तेन च (य) अभयवाचं दत्त्वा चित्रकर्ण इति नाम कृत्वा स्थापितः। एवं काले गच्छति कदाचित् सिंहस्य (र) शरीरवैकल्यात् भूरिवृष्टिकारणाच्च आहारमलभमानास्ते व्यस्ता बभूवुः। ततः (ल) काक-व्याघ्रगोमायुभिः आलोचितं,—"चित्रकर्णमेव यथा स्वामी व्यापादयति तथा अनुष्ठीयताम्। किमनेन (व) कण्टकभुजा अस्माकम् ?"। व्याघ्रो ब्रूते,—"स्वामिना अभयवाचं दत्त्वा गृहीतोऽयं, तत् कथमेवं सम्भवति ?"। वायसो वदति,—"इह समये (श) परिक्षीणः स्वामी पापमपि करिष्यति। यतः,—

त्यजेत् क्षुधार्त्ता महिलाऽपि पुत्रं
खादेत् क्षुधार्त्ता भुजगी स्वमण्डम्।

---

(म) सार्थभ्रष्टः,—सार्थात् सङ्घात्, सजातीयसमूहादित्यर्थः, ("सङ्घसार्थौ तु जन्तुभिः" इत्यमरः) यद्वा,—सार्थात् वणिक्समूहात्, ("सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके" इति मेदिनी) उष्ट्रपृष्ठे भारं समारोप्य वणिजः वाणिज्यार्थम् इतस्ततो विचरन्ति अत उष्ट्राणां वणिक्सहायत्वम्; यद्वा,—सार्थात् यूथात्, ("सङ्घसङ्घातपुञ्जौघसार्थयूथकदम्बकाः" इति भागुरिः) भ्रष्टः विच्युतः।

(य) अभयवाचम्—अरण्येऽस्मिन् निर्भयं तिष्ठ, न कुतोऽपि ते भयसम्भावना इत्येवमाश्वासवाक्यम्।

(र) शरीरवैकल्यात्—शरीरस्य देहस्य, वैकल्यात् विकलतायाः, अस्वास्थ्य-हेतोः इत्यर्थः। भूरिवृष्टिकारणात्—प्रचुरवर्षाहेतोः। व्यस्ताः,—व्याकुलाः।

(ल) काकव्याघ्रगोमायुभिः,—काकव्याघ्रशृगालैः।

(व) कण्टकभुजा—कण्टकमयवृक्षभोजिना।

(श) परिक्षीणः,—अत्यर्थं कृशः, व्याधिना क्षुधया च कातर इत्यर्थः।

(५८) त्यजेदिति।—महिला स्त्री, पुत्रगतजीवना इति भावः, क्षुधार्त्ता

बुभुक्षितः किं न करोति पापं ?
क्षीणा नरा निष्करुणा भवन्ति ॥ ५९ ॥

अन्यच्च,—मत्तः प्रमत्तश्चोन्मत्त आर्त्तः क्रोधी बुभुक्षितः ।
लुब्धो भीरुस्त्वरायुक्तः कामुकश्च न धर्मवित्" ॥ ६० ॥

इति निश्चित्य सर्वे सिंहान्तिकं जग्मुः । सिंहेनोक्तम्,—"आहारार्थं प्राप्तं किञ्चित् ?" । काको ब्रूते,—"देव ! यत्नादपि न प्राप्तं किञ्चित्" । सिंहः अवदत्,—"कोऽधुना जीवनोपायः ?" । काको वदति,—"देव ! (य) स्वाधीनाहारपरित्यागात् सर्वनाशः अयम् उपस्थितः" । सिंहेन उक्तम्,—"अत्राहारः कः स्वाधीनः ?" । काकः कर्णे कथयति,—"चित्रकर्णः" इति । सिंहो (र) भूमिं स्पृष्ट्वा कर्णौ स्पृशति, ब्रूते च,—"मया अस्मै अभयवाग् दत्ता, तत् कथमेवं सम्भवति ? तथा हि,—

क्षुधाकातरा सती, पुत्रमपि स्वतनयमपि, स्वगर्भजमतीवस्निग्धमत्यज्यमपीति भावः, यत्नेन परिहरेत् ; भुजगी सर्पी, क्षुधार्त्ता स्वं स्वकीयम्, अण्डं डिम्बम्, अपीति शेषः, खादेत भक्षयेत् ; बुभुक्षितः क्षुधातुरो जनः, किं पापं दुष्कर्म्म, न करोति ? न आचरति ? अपि तु सर्वमेव ; तथा हि क्षीणाः कृशाः, क्षुद्राद्यादिभिः निपीडितत्वादिति भावः, नराः पुरुषाः, ("नराः" इत्यत्र "जनाः" इति पाठान्तरम्) निष्करुणाः कृपाविवर्जिताः, भवन्ति, बुभुक्षितानां नास्ति किमपि अकार्य्यमिति भावः । उपजातिः वृत्तम् ।

(६०) अधार्म्मिकान् निर्द्दिशति, मत्त इति ।—मत्तः मद्यादिना गर्वेण वा विकृतचित्तः, प्रमत्तः कर्त्तव्यकार्य्येषु अनवहितः, उन्मत्तः वातुलः, आर्त्तः विपन्नः, क्रोधी कोपनस्वभावः, बुभुक्षितः क्षुधातुरः, लुब्धः लोलुपः, भीरुः भयशीलः, त्वरायुक्तः अविमृश्यकारी, कामुकः इन्द्रियपरायणश्च, लोकः इति शेषः, धर्म्मवित् धार्म्मिकः, न, भवतीति शेषः, परन्तु एते पापरता एव भवन्तीति भावः ।

(य) स्वाधीनाहारपरित्यागात्—स्वाधीनः निजायत्तः, अयत्नसुलभः इत्यर्थः, य आहारः भक्ष्यं, तस्य परित्यागात् परिहारात्, स्वहस्तस्थभोज्यद्रव्यस्यावहेलनात् । सर्वनाशः,—विपत्तिः ।

(र) भूमिमिति ।—अधर्म्म्यवाक्यश्रवणेन आत्मानमधर्म्मस्पृष्टं मत्वा पापविना-

न भूप्रदानं न सुवर्णदानं न गोप्रदानं न तथाऽन्नदानम्।
यथा वदन्तीह महाप्रदानं सर्वप्रदानेष्वभयप्रदानम्॥ ६१॥

अन्यच्च.—सर्वकामसमृद्धस्य अश्वमेधस्य यत् फलम्।
तत् फलं लभते सम्यक् रक्षिते शरणागते"॥ ६२॥

काको ब्रूते.—"नासौ स्वामिना व्यापादयितव्यः, किन्तु अस्माभिरेव तथा कर्त्तव्यं यथा असौ स्वदेहदानमङ्गीकरोति"। तच्छ्रुत्वा सिंहस्तूष्णीं स्थितः। ततः (ह) असौ लब्धावकाशः

सम्पादनार्थं भूमिकर्णयोः स्पर्शः कृतः, तयोः पवित्रत्वात्; दृश्यते च लोके सन्ध्या-वन्दनादिकाले कारणविशेषेण अपवित्रीभूतमात्मानं शोधयितुं दक्षिणकर्णं स्पृशतीति। यद्वा,—तादृशवाक्यश्रवणेनैव आत्मशोधनार्थं भूमिस्पर्शः पुनः श्रवणभयात् कर्णा-च्छादनञ्चेति।

(६१) सर्वदानेष्वभयदानस्य उत्कर्षं ख्यापयति, नेति।—इह जगति, सर्व-प्रदानेषु सर्वविधेषु दानेषु मध्ये, [निर्द्धारे सप्तमी] अभयप्रदानम् अभयदानं, न कुतोऽपि ते भयमस्तीत्युक्त्वा आश्रयदानमिति यावत्, यथा यद्वत्, महाप्रदानं महा-पुण्यजनकं दानं, वदन्ति कथयन्ति, आमनन्ति इत्यर्थः, विद्वांस इति शेषः, भूप्रदानं भूमिदानं न, सुवर्णदानं कनकदानं न, गोप्रदानं धेनुदानं न, अन्नदानं भोजनदानं न, तथा तादृशं पुण्यजनकमित्यर्थः, वदन्तीत्यनेनान्वयः, सर्वोत्कृष्टत्वात् अभयदानस्य तत् कृत्वा नाधुना एष हन्तुं शक्यते इति भावः, (महाभारते स्त्रीपर्वणि अस्यानुरूपश्लोको यथा,—"न तत् क्रतुसहस्रेण नोपवासैश्च नित्यशः। अभयस्य हि दानेन यत् फलं प्राप्नुयान्नरः"॥ इति)। उपजातिः वृत्तम्।

(६२) शरणागतरक्षणस्य फलमाह, सर्वेति।—सर्वैः सर्वप्रकारैः, कामैः अभिलषितैः, समृद्धस्य सम्पन्नस्य, सर्वाभीष्टप्रदस्य इत्यर्थः, अश्वमेधस्य तदाख्ययागस्य, यत् फलं परिणामः, स्वर्गादिरूपमिति भावः, जायते इति शेषः, शरणागते शरण-मापन्ने, आश्रिते इत्यर्थः, आर्त्ते इति शेषः, रक्षिते त्राते, पालिते सतीत्यर्थः, आपदः मोचिते सति इति यावत्, तत् फलं तादृशं पुण्यं, सम्यक् विशेषेण, सम्पूर्णरूपेणेत्यर्थः, लभते प्राप्नोति, रक्षकः इति शेषः, अतः नैतत् कर्त्तव्यमित्यभिप्रायः।

(ह) असौ—काकः। लब्धावकाशः,—लब्धः प्राप्तः, अवकाशः अवसरः, तूष्णीमवस्थानात् सिंहस्य सम्मतिलक्षणमनुमाय स्वाभीष्टपूरणयोग्यकाल इत्यर्थः,

कूटं कृत्वा सर्वान् आदाय सिंहसमीपम् आगतः। अथ काकेन उक्तं,—"देव! यत्नात् अपि आहारो न प्राप्तः, अनेकोपवास-क्लिष्टश्च स्वामी, तत् इदानीं मदीयमांसम् उपभुज्यताम्। यतः,—

स्वामिमूला भवन्त्येताः सर्वाः प्रकृतयः खलु।
समूलेषु हि वृक्षेषु प्रयत्नः सफलो नृणाम्" ॥ ६३ ॥

सिंहेन उक्तं,—(क) "भद्र! वरं प्राणपरित्यागो न पुनः ईदृशि कर्मणि प्रवृत्तिः"। जम्बूकेन अपि तथोक्तम्। ततः सिंहेन उक्तं,—"मैवम्"। अथ व्याघ्र उवाच,—"मद्देहेन जीवतु स्वामी"। सिंहेन उक्तं,—"न कदाचित् एवम्

---

ेन सः। कूटं—कैतवं, छलमिति यावत्। ("मायानिश्चलयन्त्रेषु कैतवानृतराशिषु। अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्" ॥ इत्यमरः)।

(६३) स्वदेहदानाय उष्ट्रं प्रोत्साहयितुमाह, स्वामिमूला इति।—एताः परिदृश्य-मानाः, सर्वाः सकलाः, प्रकृतयः अमात्यादि राज्याङ्गानि, ("स्वाम्यमात्यसुहृत्कोष-राष्ट्रदुर्गबलानि च। राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च" ॥ इत्यमरः) खलु निश्चितं, स्वामिमूलाः स्वामी प्रभुरेव, मूलम् आद्यं, प्रधानकारणमित्यर्थः, स्थिति-कारणमिति यावत्, यासां ताः तादृशाः, भवन्ति वर्त्तन्ते इत्यर्थः, राजनि जीवति सर्वाणि एव राज्याङ्गानि वर्त्तन्ते इति भावः। हि तथाहि, वृक्षेषु तरुषु, शाखा-पत्राद्यङ्गयुक्तेष्वपीति भावः, समूलेषु मूलसहितेषु सत्सु चेत्, न तु छिन्नमूलेष्विति भावः, नृणां नराणां, तद्रक्षणार्थमिति भावः, प्रयत्नः तद्रक्षणप्रयासः इत्यर्थः, सफलः फलप्रदः, भवतीति शेषः, पत्रपुष्पादिसमन्वितस्यापि वृक्षस्य मूलानि चेत् छिन्नानि भवन्ति, तदा तद्रक्षणप्रयासो यथा विफलो भवति, तथा सतीष्वपि अमात्यादिषु समस्तु प्रकृतिषु अविकृतासु मूलप्रकृतिः स्वामी व्यापन्नो भवति चेत् न एकाऽपि प्रकृतिः अवस्थातुं शक्नोति, अतः मूलीभूतः स्वामी सर्वथैव रक्षणीय इति वक्तुरभिप्रायः।

(क) भद्र!—साधो!। ("भद्रः शिवे खञ्जरीटे—। विषु श्रेष्ठे च साधौ च नपुंसि करणान्तरे" ॥ इति मेदिनी)।

उचितम्"। अथ चित्रकर्णोऽपि (ख) जातप्रत्ययः तथा एव आत्मदेहदानमाह। तद्वदन् एव असौ (ग) द्वीपिना कुक्षिं विदार्य्य व्यापादितः सर्वैः भक्षितश्च। अतोऽहं ब्रवीमि,—'मतिर्दोलायते नूनम्' इत्यादि।

[ इति सिंह-काक-व्याघ्र-शृगालोष्ट्रकथा ]।

तदनन्तरं पुनः तृतीयधूर्त्तवचनं श्रुत्वा स विप्रो भ्रमं निश्चित्य छागं त्यक्त्वा स्नात्वा गृहं ययौ। छागश्च नीत्वा धूर्त्तैः खादितः। अतोऽहं ब्रवीमि,—'आत्मौपम्येन यो वेत्ति' इत्यादि"।

[ इति ब्राह्मण-छाग-धूर्त्तत्रयकथा ]।

राजा आह,—"मेघवर्ण! कथं त्वया शत्रुमध्ये (घ) सुचिरम् उषितं, कथं वा तेषाम् अनुनयः कृतः?"। मेघवर्ण आह,—"देव! (ङ) स्वामिकार्य्यार्थितया स्वप्रयोजनवशात् वा किं किं न क्रियते? पश्य,—

लोको वहति किं राजन्! न मूर्द्ध्ना दग्धुमिन्धनम्?।
क्षालयन्नपि वृक्षाङ्घ्रिं नदीवेला निकृन्तति ॥ ६४ ॥

---

(ख) जातप्रत्ययः,—काकादीनां वचसः प्रत्युत्तरेण सिंहस्य अभिप्रायं ज्ञात्वा आत्मनो जीवनविपर्य्ययेऽपि सञ्जातविश्वासः।

(ग) द्वीपिना—व्याघ्रेण। कुक्षिम्—उदरम्।

(घ) सुचिरं—दीर्घकालम्। उषितं—वासः कृतः। अनुनयः,—सान्त्वनं, चित्तसन्तोषविधानमित्यर्थः, छन्दानुवर्त्तनम् इति यावत्।

(ङ) स्वामिकार्य्यार्थितया—स्वामिनः प्रभोः, कार्य्यं कार्य्यसिद्धिमित्यर्थः, अर्थयते कामयते यः स तस्य भावः तत्ता तया, प्रभुकार्य्यसाधकतयेत्यर्थः। ("स्वामिकार्य्यार्थिना" इति पाठान्तरम्)।

(६४) स्वोक्तस्य समर्थनाय दृष्टान्तमाह, लोक इति।—राजन्! हे नरपते! लोकः जनः, दग्धुं दाहार्थम्, इन्धनं काष्ठं, रन्धनकाष्ठमित्यर्थः, किं मूर्द्ध्ना शिरसा, न वहति? न धारयति?, यत्तु तुच्छमस्तकेऽपि परिगण्यते, स्वप्रयोजनवशात् तदुत्तमाङ्गेनापि धृत्वा गृहं नयति इति भावः। अन्यदपि उदाहरणं प्रदर्शयति,—

तथा चोक्तम्,—

स्कन्धेनापि वहेच्छत्रून् कार्य्यमासाद्य बुद्धिमान्।
यथा वृद्धेन सर्पेण मण्डूका विनिपातिताः" ॥ ६५ ॥

राजा आह,—"कथमेतत्?"। मेघवर्णः कथयति,—

वृद्धसर्प-मण्डूककथा।—

"अस्ति जीर्णोद्याने मन्दविषो नाम सर्पः। सः (च) अतिजीर्णतया स्वाहारमपि अन्वेष्टुमक्षमः सरस्तीरे पतित्वा स्थितः। ततो दूरादेव केनचित् मण्डूकेन दृष्टः पृष्टश्च,—"किमिति भवान् आहारं न अन्विष्यति?"। सर्पो ब्रूते,—"भद्र! गच्छ, किं ते मम मन्दभाग्यस्य (छ) वृत्तान्तप्रश्नेन?"। ततः (ज) सञ्जातकौतुकः स भेकः,—"सर्वथा कथ्यताम्" इति तं सर्पमाह। सर्पो ब्रूते,—"भद्र! अत्र ब्रह्मपुरे कौण्डिन्यनाम्नः

नदीवेला नदीस्रोतः, वृक्षाङ्घ्रिं वृक्षमूलं चरणञ्च, ("अङ्घ्रिर्ना पादमूलयोः" इति मेदिनी) क्षालयन्ती प्रक्षालयन्त्यपि, धौतं कुर्वन्त्यपीत्यर्थः, पादसेवां कुर्वन्त्यपीति भावः, निकृन्तति उत्पाटयति, आदौ यस्य चरणं क्षालयति पश्चात् तमेव समूलं विनाशयति, अतः स्वार्थसाधनार्थं सर्वम् एव क्रियते लोकैरिति भावः।

(६५) दृष्टान्तान्तरमाह, स्कन्धेनेति।—बुद्धिमान् प्राज्ञो जनः, कार्य्यं कर्त्तव्यं वस्तु, आसाद्य प्राप्य, स्वकार्य्यसाधनार्थमित्यर्थः, शत्रून् अरीन्, स्कन्धेन अपि अंसेनापि, वहेत् नयेत्। तत्र दृष्टान्तमाह, यथेति।—वृद्धेन जीर्णेन, सर्पेण फणिना, यथा यद्वत्, मण्डूकाः भेकाः, सकला इति शेषः, विनिपातिताः निहताः। "अपमानं पुरस्कृत्य मानं कृत्वा च पृष्ठतः। स्वकार्य्यमुद्धरेत् प्राज्ञः कार्य्यध्वंसेन मूर्खता" ॥ इति भावः। (कामन्दकदशमे अस्यानुरूपो यथा,—"स्कन्धेनापि वहेच्छत्रून् प्रियाणि समुदाहरन्। सम्प्राप्ते चैव काले तु भिन्द्याद्घटमिवाश्मनि" ॥ इति। शुक्रनीतौ चतुर्थेऽध्याये भारतशान्तिपर्वणि आपद्धर्म्मव्याख्याने च एतदनुरूपश्लोकौ दृश्यते)।

(च) अतिजीर्णतया—अतिवृद्धतया। अन्वेष्टुम्—अनुसन्धातुम्, [अनु+इष+तुमुन्]। सरस्तीरे—जलाशयकूले।

(छ) वृत्तान्तप्रश्नेन—वार्त्ताजिज्ञासया।

(ज) सञ्जातकौतुकः,—कौतूहलाक्रान्तः।

(झ) श्रोत्रियस्य पुत्रो विंशतिवर्षदेशीयः सर्वगुणसम्पन्नो दुर्दैवात् मया (ञ) नृशंसेन दष्टः। ततस्तं सुशीलनामानं पुत्रं मृतमवलोक्य कौण्डिन्यः शोकेन मूर्च्छितः पृथिवीतले लुलोठ। अनन्तरं ब्रह्मपुरवासिनः सर्वे बान्धवास्तस्य तत्र आगत्य उपविष्टाः। तथा चोक्तम्,—

उत्सवे व्यसने युद्धे दुर्भिक्षे राष्ट्रविप्लवे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥ ६६॥

ततः कपिलो नाम (ट) स्नातकोऽवदत्,—"अरे

---

(झ) श्रोत्रियस्य—छान्दसस्य, वेदविदः इत्यर्थः। ("श्रोत्रियच्छान्दसौ समौ" इत्यमरः)। [छन्दस्+घः छन्दोऽधीते इति "श्रोत्रियंश्छन्दोऽधीते" (५।२।८४ पा०) इति वा श्रोत्रियन्निपात्यते। पक्षे,—"तदधीते—" (४।२।५९ पा०) इत्यण्]। विंशतिवर्षदेशीयः,—विंशतिवर्षप्रायः, विंशतिवर्षात् किञ्चिदून इत्यर्थः। ["ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" (५।३।६७ पा०) इति देशीयः]।

(ञ) नृशंसेन—क्रूरेण। ("नृशंसो घातुकः क्रूरः पापः" इत्यमरः)।

(६६) बन्धुलक्षणमाह, उत्सवे इति।—उत्सवे विवाहाद्यानन्दजनककार्ये, व्यसने विपदि, युद्धे सङ्ग्रामे, शत्रुणा सह इति शेषः, दुर्भिक्षे अन्नाभावसमये, राष्ट्रविप्लवे राष्ट्रस्य राज्यस्य, विप्लवे उपद्रवे, राजद्वारे विचारालये, श्मशाने शवदाहस्थाने, अन्त्येष्टिकर्मणि इति यावत्, यः तिष्ठति वर्त्तते, अनुकूलयति इत्यर्थः, स बान्धवः प्रकृतो बन्धुः। श्लोकश्चायं मित्रलाभे ५४ पृः १२४ श्लोके व्याख्यातः।

(ट) स्नातकः,—आप्लवव्रती, वेदाध्ययनानन्तरं गार्हस्थ्याय कृतसमावर्त्तनाङ्गस्नानः इति यावत्। ("स्नातकस्त्वाप्लवव्रती" इत्यमरः) तत्र स्नातकस्त्रिविधः,—विद्यास्नातकः, व्रतस्नातकः, विद्याव्रतस्नातकश्चेति। तथा च हारीतः,—"त्रयः स्नातका भवन्ति—विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातकश्चेति। यः समाप्य वेदम् असमाप्य व्रतानि समावर्त्तते स विद्यास्नातकः। यः समाप्य व्रतम् असमाप्य वेदं समावर्त्तते सः व्रतस्नातकः। उभयं समाप्य समावर्त्तते यः स विद्याव्रतस्नातकः"। याज्ञवल्क्योऽप्याह,—"वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा" इति)। अयन्तु विशेषानुक्त्या विद्याव्रतस्नातक इति भावः।

कौण्डिन्य ! (ठ) मूढ़ोऽसि, येन एवं विलपसि। शृणु,—

क्रोड़ीकरोति प्रथमं यदा जातमनित्यता।
धात्रीव जननी पश्चात् तदा शोकस्य कः क्रमः ? ॥६७॥

तथा च,—क्व गताः पृथिवीपालाः ससैन्यबलवाहनाः।
वियोगसाक्षिणी येषां भूमिरद्यापि तिष्ठति ॥ ६८ ॥

तथा च,—जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ६९ ॥

---

(ठ) मूढ़ः,—मूर्खः।

(६७) शोकापनोदनार्थं विंशत्या श्लोकैः देहस्य अनित्यतां प्रदर्शयति, क्रोड़ीति।—यदा यर्हि, अनित्यता विनश्वरता, प्रथमं पूर्वं, जननी गर्भधारिणी, पश्चात् अनन्तरं, धात्री उपमाता इव, जातं सद्यःप्रसूतं बालं, क्रोड़ीकरोति एकत्र,—आयत्तीकरोति, अन्यत्र,—अङ्कमारोपयति, यदा जातस्य मरणम् अवश्यम्भावीत्यर्थः, यद्वा,—यदा अनित्यता धात्रीव जातं प्रथमं, जननी पश्चात् क्रोड़ीकरोति इत्यन्वयः, भूमिष्ठमात्रं शिशुं धात्री यथा क्रोड़े गृह्णाति, तथा अनित्यता अपि जन्ममात्रमेव जीवं स्वायत्तीकरोति, पश्चाच्च जननीति समुदायार्थः; तदा शोकस्य इष्टवियोगदुःखस्य, कः क्रमः ? किम् आक्रमणम् ?, कथं जनः शोकाक्रमणेन व्याकुलो भवतीत्यर्थः, "जातस्य हि ध्रुवो मृत्युः" इति शास्त्रात् अवश्यम्भाविनि विषये शोकं मा कार्षीरिति भावः।

(६८) क्वेति।—सैन्यानि सेनाः, बलं शक्तिः रूपं वा, सैन्यबलं प्रभूतसेनाजनितपराक्रम इति वा, सैन्यानां बलमिति वा, ("बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः" इति मेदिनी) वाहनानि गजाश्वरथादियानानि, तैः सह वर्त्तमानाः सैन्यबलवाहनसहिताः, पृथिवीपालाः राजानः, क्व कुत्र, गताः प्रस्थिताः ? मृता इत्यर्थः, येषां पृथिवीपालानां, वियोगसाक्षिणी मृत्योः साक्षाद्दर्शिनी, भूमिः पृथिवी, तत्तत् राज्यमिति यावत्, अद्यापि अधुनाऽपि, विलुप्तसकलचिह्नेऽपि काले इति भावः, तिष्ठति वर्त्तते; इतोऽपि दृष्टान्तात् विनश्वरत्वमाकलय्य जगतां शोको न कार्य्य इति भावः।

(६९) जातस्येति।—जातस्य उत्पन्नस्य, प्राणिनः इति शेषः, मृत्युर्मरणं, ध्रुवः निश्चितः, अवश्यम्भावीति यावत्, तथा मृतस्य च पञ्चत्वं गतस्य च, जन्म

अपरञ्च,—कायः सन्निहितापायः सम्पदः पदमापदाम्।
समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ ७० ॥
प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते।
आमकुम्भ इवाम्भःस्थो विशीर्णः सन् विभाव्यते ॥७१॥
आसन्नतरतामेति मृत्युर्जन्तोर्दिने दिने।
आघातं नीयमानस्य वध्यस्येव पदे पदे ॥ ७२ ॥

उत्पत्तिः, ध्रुवं निश्चितमेव, आमुक्तेः जीवस्य पुनः पुनः संसरणशीलत्वादिति भावः; तथा हि, अद्य वा अस्मिन् दिवसे वा, अब्दशतान्ते वा शतवर्षान्तरे वा, बहुवर्षान्ते इत्यर्थः, प्राणिनां जीवानां, मृत्युः नाशः, ध्रुवः निश्चितः एव, वै इति पूरणार्थक-मव्ययम्, अतो मरणे खेदः जनने च हर्षो न ज्ञानिभिर्विधेय इति भावः।

(७०) काय इति।—कायः देहः, सन्निहितापायः सन्निहितः आसन्नः, अपायः विनाशः यस्य तादृशः, आसन्नध्वंसः इत्यर्थः, भवतीति शेषः, सम्पदः ऐश्वर्याणि, आपदां विविधविपत्तीनां, पदं स्थानं, सम्पत्तौ सत्यां विपत्तिः अवश्यम्भाविनीति भावः; [ पदमित्यत्र विधेयप्राधान्यात् क्लीवत्वम् एकवचनञ्च ] समागमाः पुत्रादिभिः इष्टजनैः सह मेलनानि, सापगमाः अपगमेन वियोगेन सह वर्त्तमानाः, वियोगो-दर्काः इत्यर्थः, तथा उत्पादि जायमानं, सर्वं निखिलमेव वस्तु, भङ्गुरं विनश्वरम्, इत्यवेहि इति शेषः, अतः पुत्रविरहे कथं शुच्यते भवता ? इति भावः।

(७१) प्रतिक्षणमिति।—अम्भःस्थः जलमध्यस्थितः, आमकुम्भः वह्निदाहाभावेन अपरिपक्वः घटः इव, प्रतिक्षणं प्रतिमुहूर्त्तं, क्षीयमाणः क्षयं प्राप्नुवन्नपि, अयं कायः शरीरं, न लक्ष्यते न विभाव्यते, तथात्वेन न दृश्यते इत्यर्थः, लोकैरिति शेषः, परन्तु विशीर्णः विगलितः सन्, विभाव्यते ज्ञायते, नातः पूर्वम्; जलाल-निमग्नः आमघटो यथा प्रतिक्षणमेव किञ्चित् किञ्चित् क्षयमाप्नोति, परन्तु तावत् तत्क्षयं न ज्ञातुं शक्नुवन्ति मूढ़ाः यावत् निःशेषतया न क्षिणोति, एवं देहोऽपि प्रतिक्षणमेव, अतः प्रतिक्षणं क्षीयमाणस्य देहस्य कृते शोकः न कार्य्य इति भावः।

(७२) आसन्नेति।—आघातम् आहन्यते अत्र इति व्युत्पत्त्या वधस्थान-मित्यर्थः, नीयमानस्य प्राप्यमाणस्य, वध्यस्य वधार्हस्य, वधदण्डप्राप्तस्य इत्यर्थः, पदे पदे इव प्रतिपदमिव, प्रतिपदविक्षेपे इवेत्यर्थः, मृत्युः अन्तकः, दिने दिने प्रतिदिनं, यथा यथा दिनं याति तथेत्यर्थः, जन्तोः प्राणिनः, आसन्नतरतां क्रमशः सान्निध्यम्,

यतः,—अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः।
ऐश्वर्य्यं प्रियसंवासो मुह्येत्तत्र न पण्डितः॥ ७३॥
यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः॥ ७४॥
यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति।
विश्रम्य च पुनर्गच्छेत् तद्वद्भूतसमागमः॥ ७५॥

एति प्राप्नोति, प्रतिदिनमेवायुः क्षीयते इत्यर्थः; राजदण्डाज्ञाप्राप्तो वध्यो वधस्थानं प्रति यथा यथा अग्रेसरीभवति तथा तथा यथा मृत्योरासन्नतरो भवति एवं यथा यथा एकैकं दिनमतिक्रामति जीवोऽपि तथा तथा मृत्योरासन्नतरो भवति इति निष्कर्षः।

(७३) अनित्यमिति।—यौवनं तारुण्यं, रूपं सौन्दर्य्यं, जीवितं प्राणाः, द्रव्यसञ्चयः धनसङ्ग्रहः, ("द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु" इत्यमरः) ऐश्वर्य्यं सम्पत्, प्रियसंवासः प्रियजनैः पुत्रकलत्रादिभिः सह एकत्रावस्थितिः, एतत् सर्व्वमेव अनित्यम् अस्थिरं, क्षणस्थायि इत्यर्थः, [पदमेतत् सर्व्वत्र विभक्तिविपरिणामेन अन्वयि] तत्र तेषु यौवनादिषु विषये, पण्डितः विवेकी जनः, न मुह्येत् न मोहं गच्छेत, तत्र नात्यासक्तो भवेत् इत्यर्थः; एतेषां वियोगे न शोचेत् इति भावः। (भारतवनपर्व्वणि द्वितीयाध्याये "द्रव्यसञ्चयः" इत्यत्र "रत्नसञ्चयः" "मुह्येत्" इत्यत्र "गृध्येत्" तथा शान्तिपर्व्वणि मोक्षधर्म्मव्याख्याने पञ्चाधिकद्विशत-तमाध्याये विंशदधिकत्रिशततमाध्याये च "ऐश्वर्य्यम्" इत्यत्र "आरोग्यम्" "मुह्येत्" इत्यत्र "गृध्येत्" इति पाठभेदाः)।

(७४) यथेति।—महोदधौ महासमुद्रे, काष्ठञ्च काष्ठञ्च दारुखण्डद्वयं, स्रोतसा नीयमाने द्वे काष्ठे इत्यर्थः, यथा यद्वत्, समेयाताम् आत्मनैव सङ्गच्छेयातां, समेत्य च क्षणं मिलित्वा च. व्यपेयातां पुनः वियुज्येयातां, [कर्म्मकर्त्तरि प्रयोगः] भूतानां प्राणिनामिति वा, भूतसमागमः भूतैः पुत्रादिभिः प्राणिभिः सह, समागमः परस्परमेलनम्, अपीति शेषः, तद्वत् तथा, क्षणेन भवति याति च इत्यर्थः। (श्लोकोऽयं भारतशान्तिपर्व्वणि राजधर्म्मव्याख्याने २८ अध्याये मोक्षधर्म्म-व्याख्याने च १७४ अध्याये दृश्यते)।

(७५) यथेति।—यथा यादृक्, कश्चित् कोऽपि, पथिकः अध्वगः, छायाम् अनातपम्, आश्रित्य अवलम्ब्य, तिष्ठति वर्त्तते, विश्राम्यति इत्यर्थः, विश्रम्य च

अन्यच,—पञ्चभिर्निर्मिते देहे पञ्चत्वञ्च पुनर्गते।
स्वां स्वां योनिमनुप्राप्ते तत्र का परिदेवना ? ॥ ७६ ॥
यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान्।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ७७ ॥
नायमत्यन्तसंवासो लभ्यते येन केनचित्।
अपि स्वेन शरीरेण किमुतान्येन केनचित् ? ॥७८॥

---

विश्रामं कृत्वा च, परिश्रमम् अपनीय च इत्यर्थः, पुनः भूयः, गच्छेत् यायात्, स्वाभीष्टदेशमिति भावः, तद्वत् तथा, भूतसमागमः भूतानां प्राणिनां, समागमः संसारे आगमनमित्यर्थः, क्षणं विश्रामभूतोऽयं संसारः, न तु चिरं स्थातुमिति भावः।

(७६) पञ्चभिरिति।—पञ्चभिः क्षित्यादिपञ्चभूतैः, निर्मिते आरब्धे, सृष्टे इत्यर्थः, पुनः भूयः, पञ्चत्वं पञ्चस्वरूपं, प्रकृतिभूतक्षित्यादिभावमित्यर्थः, देहारम्भक-भूतानां स्वस्वांशस्य स्वेषु स्वेषु भावेषु प्रवेशरूपमिति यावत्, गते प्राप्ते, देहे शरीरे, स्वां स्वां स्वस्वकर्मानुरूपां, योनिं जन्म, उत्पत्तिमित्यर्थः, यद्वा,—स्वां स्वां योनिं स्वस्वोत्पत्तिकारणं क्षित्यादिकमित्यर्थः, देहस्य क्षितिभागः क्षितौ अवयः अप्सु तेजोऽंशस्तेजसि इति भावः, अनुप्राप्ते च लब्धे च सति, तत्र तस्मिन्, तथाविधे देहे इत्यर्थः, तच्छरीरनिमित्तमिति यावत्, का परिदेवना ? विलापः ? "मरणं प्रकृतिः शरीरिणां विकृतिः जीवितम्" इति विचिन्त्य तदर्थं शोकः न कर्त्तव्यः इति निष्कर्षः।

(७७) यावत इति।—जन्तुः प्राणी, यावतः यावत्सङ्ख्याकान्, मनसः चेतसः, प्रियान् अनुकूलान्, हृद्यानित्यर्थः, सम्बन्धान् सम्पर्कान्, स्नेहबन्धनानि इति यावत्, कुरुते विदधाति, यावतः जनान् स्निह्यति इत्यर्थः, अस्य जन्तोः, हृदये मनसि, तावन्तः तत्सङ्ख्याकाः, शोकशङ्कवः मन्युरूपकीलानि, निखन्यन्ते विध्यन्ते, स्नेहानु-रूपमेवानुतापं भजन्ते इत्यर्थः।

(७८) नायमिति।—येन केनचित् येन केनापि भावेन, किमधिकं, स्वेन स्वकीयेन, शरीरेणापि देहेनापि, नित्यसम्बद्धेन इत्यर्थः, अयं जीवः, अत्यन्तसंवासः चिराश्रयः, दीर्घाश्रयत्वेनेत्यर्थः, न लभ्यते न प्राप्यते, अन्येन अपरेण, केनचित् जनेन, पुत्रादिना दूरसम्बद्धेनेत्यर्थः, किमुत ? किं वक्तव्यम् ? न कथमपि सम्भाव्यते इत्यर्थः, निजदेहमपि चिराश्रयत्वेन न प्राप्नोति देहस्य विनश्वरत्वात्, अन्यं

अपिच,—संयोगो हि वियोगस्य संसूचयति सम्भवम् ।
अनतिक्रमणीयस्य जन्म मृत्योरिवागमम् ॥ ७९ ॥
आपातरमणीयानां संयोगानां प्रियैः सह ।
अपथ्यानामिवान्नानां परिणामोऽतिदारुणः ॥ ८० ॥
अपरञ्च,—व्रजन्ति न निवर्त्तन्ते स्रोतांसि सरितां यथा ।
आयुरादाय मर्त्त्यानां सदा रात्र्यहनी तथा ॥ ८१ ॥

---

कदाचित् न आश्रयत्वेन लभते इत्यत्र किमु वक्तव्यमिति सरलार्थः । (भारतशान्तिपर्वणि राजधर्मव्याख्याने "येन" इत्यत्र "जातु" इति पाठान्तरम् । मोक्षधर्मव्याख्याने च एतदनुरूपश्लोकान्तरं दृश्यते यथा,—"यथि सङ्गतमेवेदं दारैरन्यैश्च बन्धुभिः । नायमत्यन्तसंवासो लब्धपूर्वो हि केनचित्" ॥ ) इति ।

(७९) संयोग इति ।—जन्म उत्पत्तिः, अनतिक्रमणीयस्य अलङ्घनीयस्य, अवश्यम्भाविनः इत्यर्थः, मृत्योः मरणस्य, आगमम् उपस्थितिमिव, संयोगः मिलनं, वियोगस्य विच्छेदस्य, अवश्यम्भाविन इति भावः, सम्भवम् उत्पत्तिं, संसूचयति ज्ञापयति, हि निश्चयेन, मरणवत् वियोगोऽपि अवश्यम्भावीति मत्वा न शोचितव्यमिति भावः ।

(८०) आपातेति ।—आपातरमणीयानां तत्कालप्रीतिप्रदानां, तत्तत्समये सुखकराणामित्यर्थः, अपथ्यानाम् अहितकराणाम्, अन्नानां भोज्यवस्तूनां, परिणतिः इव परिणाम इव, प्रियैः सह पुत्रादिप्रियजनैः सह, संयोगानां मिलनानां, परिणामः परिणतिः, अतिदारुणः अतिभीषणः, असुखजनक इत्यर्थः, भवतीति शेषः, तस्य विरहपर्य्यवसानत्वादिति भावः, अपथ्यसेवनमापाततः रसनाहृप्तिसाधनमपि रोगाद्युत्पादकत्वेन यथा परिणामे दारुणक्लेशावहं भवति, तथा प्रियसम्मेलनं तत्कालप्रीतिजननमपि अवश्यम्भाविविच्छेदोदर्कत्वात् परिणामे मरणाधिकयातनाप्रदं भवतीति निष्कर्षः ।

(८१) व्रजन्तीति ।—सरितां नदीनां, स्रोतांसि प्रवाहाः, यथा यद्वत्, व्रजन्ति नियतमेव गच्छन्ति, न निवर्त्तन्ते न कदाचित् प्रत्यागच्छन्ति, तथा तद्वत्, मर्त्त्यानां प्राणिनाम्, आयुः जीवितं, जीवनकालमित्यर्थः, आदाय गृहीत्वा, रात्र्यहनी रात्रिः दिवा च, सदा सर्वदा, व्रजतः न निवर्त्तेते इति विभक्तिविपरिणामात् पूर्वेणान्वयः ; कालेन सर्वसंहारकेण जीवानामायुषः प्रतिनिमेषमेव

सुखास्वादपरो यस्तु संसारे सत्समागमः ।
स वियोगावसानत्वात् दुःखानां धुरि युज्यते ॥ ८२ ॥
अत एव हि नेच्छन्ति साधवः सत्समागमम् ।
यद्वियोगासिलूनस्य मनसो नास्ति भेषजम् ॥ ८३ ॥
सुकृतान्यपि कर्माणि राजभिः सगरादिभिः ।
अथ तान्येव कर्माणि ते चापि प्रलयं गताः ॥ ८४ ॥

---

अपाक्रियमाणत्वादिति भावः । ("स्रवन्ति न निवर्त्तन्ते स्रोतांसि सरितामिव। आयुरादाय मर्त्त्यानां रात्र्यहानि पुनः पुनः" ॥ इति भारतशान्तिपर्वीयमोक्षधर्म्मोक्तपाठः ) ।

( ८२ ) सुखेति ।—संसारे अस्मिन् विश्वे, यः सत्समागमः साधुसङ्गः, सुखास्वादपरः परमसुखास्पदमित्यर्थः, स तु स सत्समागमोऽपि, वियोगावसानत्वात् विच्छेदपर्य्यन्तत्वात्, वियोगोदर्कत्वादित्यर्थः, दुःखानां दुःखजनकानां भावानां, धुरि अग्रे, युज्यते गण्यते, सोऽपि चरमे अतीव दुःखदायको भवतीत्यर्थः, अन्येषान्तु सुतरामेव इति भावः ; साधुसमागमो यथा परमानन्दप्रदः, तद्वियोगः ततोऽधिकदुःखप्रदः इति निष्कर्षः ।

( ८३ ) अत इति ।—अत एव समागमस्य वियोगावसानत्वेन अतीव दुःखत्वादेव, साधवः विवेकिनः, सत्समागमं साधुसङ्गम्, अपीति शेषः, न इच्छन्ति नाभिलषन्ति, हि यस्मात्, यस्य साधोः, वियोगः विच्छेदः एव, असिः खड्गः, तेन लूनस्य छिन्नस्य, साधुवियोगार्त्तस्येत्यर्थः, मनसः चित्तस्य, भेषजं प्रतीकारसमर्थम् औषधं, नास्ति न विद्यते, जगत्यस्मिन् धनादिविनाशप्रभवः शोकः कालेनापगच्छति परन्तु साधुवियोगजो न कदाऽपि केनाप्युपायेन, अत एव तत्त्वदर्शिनः सद्भिरपि अत्यन्तसङ्गं नेच्छन्ति, एवञ्च अधीतसाङ्गवेदेन त्वया अत्र अत्यन्तासक्तिः नैव कार्य्या इति भावः ।

( ८४ ) सुकृतानीति ।—सगरः सूर्य्यवंशीयो नृपतिविशेषः, स एवादिर्येषां तैः सगरप्रभृतिभिः, महाबलसम्पन्नैः धार्म्मिकैश्चेति भावः, राजभिः नरपतिभिः, कर्माणि अश्वमेधाद्यनुष्ठानानि, सुकृतानि अपि सुसम्पादितान्यपि, यथाशास्त्रं सम्यगनुष्ठितानि सन्त्यपीत्यर्थः, तानि पूर्वोक्तानि सुकृतानि, कर्माणि अनुष्ठानानि, तेऽपि च राजानोऽपि च, अथ कालक्रमेण, एव निःशेषतयैवेत्यर्थः, ( "मङ्गलानन्तरारम्भ-

सञ्चिन्त्य सञ्चिन्त्य तमुग्रदण्डं
मृत्युं मनुष्यस्य विचक्षणस्य।
वर्षाम्बुसिक्ता इव चर्मबन्धाः
सर्वे प्रयत्नाः शिथिलीभवन्ति ॥ ८५ ॥

यामेव रात्रिं प्रथमामुपैति
गर्भे निवासं नरवीरलोकः।
ततः प्रभृत्यस्खलितप्रयाणः
स प्रत्यहं मृत्युसमीपमेति ॥ ८६ ॥

प्रलयकाल्पेऽप्यथोऽस्थ" इत्यमरः) प्रलयं नाशं, गताः प्राप्ताः; मादृशानां का कथा? इति भावः।

(८५) सञ्चिन्त्येति।—उग्रदण्डम् उत्कटशासनं, तं प्रसिद्धं, मृत्युं कृतान्तं, सञ्चिन्त्य सञ्चिन्त्य पुनः पुनर्मनसि ध्यात्वा, स्थितस्य इति शेषः, विचक्षणस्य विदुषः, अपीति शेषः, मनुष्यस्य मानवस्य, सर्वे प्रयत्नाः निखिलप्रयासाः, वर्षाम्बुसिक्ताः वर्षाजलार्द्राः, चर्मबन्धाः इव चर्मग्रन्थय इव, चर्ममयबन्धनानीवेत्यर्थः, शिथिलीभवन्ति मन्दीभवन्ति, कार्य्यसाधने पूर्ववत् सुदृढ़प्रयत्नो न वर्त्तते इत्यर्थः, चर्म्मबन्धपक्षे—अदृढ़ीभवन्ति, जलेनार्द्रीभावात् बन्धनग्रन्थिः स्वदृढ़तां परित्यजतीत्यर्थः; आसन्नमृत्युभयेन चित्तवैक्लव्यादिति भावः; प्राज्ञाः मृत्योरवश्यम्भावित्वं विचिन्त्य पार्थिवे वस्तुनि नात्यधिकं समादरबुद्धयो भवन्ति, अतः तवापि एतदर्थं शोकवैकल्यं न युज्यते इति हृदयम्। इन्द्रवज्रा वृत्तम्।

(८६) यामिति।—नरवीरलोकः नरेषु मनुष्येषु मध्ये शूरो जनः, अस्खलितप्रयाणेन मृत्युसमीपगमनात् वीरत्वमवगन्तव्यम्; यद्वा,—"नरवीर!" इति सम्बोधनम्; भो नरवीर! लोकः जनः, यामेव प्रथमाम् आद्यां, रात्रिं निशाम्, [अत्यन्तसंयोगे द्वितीया] गर्भे निवासं वसतिम्, उपैति प्राप्नोति, यस्यामेव रात्रौ गर्भस्थो भवतीत्यर्थः, ("गर्भे निवासी नरवीर! लोकः" इति पाठे—हे नरवीर! लोकः निवासी वासार्थी सन् इत्यर्थः, गर्भे यामेव प्रथमां रात्रिम् उपैति अधितिष्ठतीत्यर्थः) ततः प्रभृति तामेव रात्रिमारभ्य, [प्रभृतिशब्दयोगे पञ्चमी] अस्खलितप्रयाणः अविचलितगतिः सन्, स नरवीरः, प्रत्यहं प्रतिदिनं, मृत्युसमीपं मृत्योः अन्तिकम्, एति गच्छति; "मृत्युर्जन्मवतां वीर! जन्मना सह जायते" इति विभावनीयमिति भावः। उपजातिः वृत्तम्।

अथ (ड) संसारं विचारय, शोकोऽयम् (ढ) अज्ञानस्य प्रपञ्चः। पश्य,—

अज्ञानं कारणं न स्याद्वियोगो यदि कारणम्।
शोको दिनेषु गच्छत्सु वर्द्धतामपयाति किम्? ॥८७॥

तद्भद्र! (ण) आत्मानम् अनुसन्धेहि (त) शोकचर्चाञ्च परिहर। यतः,—

अकाण्डपातजातानामस्त्राणां मर्मभेदिनाम्।
गाढशोकप्रहाराणामचिन्तैव महौषधम्" ॥ ८८ ॥

---

(ड) संसारं—विश्वं, विश्ववासिनां प्रकृतिमिति यावत्।

(ढ) अज्ञानस्य प्रपञ्चः,—मोहस्य विस्तृतिः, मोहविजृम्भणमित्यर्थः, ("विपर्य्यासे विस्तरे च प्रपञ्चः" इत्यमरः) अज्ञानतमसावृता एव जनाः शोकविमुग्धा भवन्ति, ये खलु ज्ञानिनः मोहावरणनिर्म्मुक्ताः ते पुनः शोकादिभिरनाक्रान्ता मोदन्ते इति भावः।

(८७) शोककारणं सयुक्तिकं दर्शयन्नुपसंहरति, अज्ञानमिति।—यदि वियोगः विच्छेद एव, कारणं हेतुः, शोकस्य इति शेषः, अज्ञानं मोहः, कारणं न स्यात् न भवेत्, तदा दिनेषु दिवसेषु, गच्छत्सु अतिक्रामत्सु, शोको मन्युः, वर्द्धताम्? वृद्धिं गच्छतु? किं किमर्थम्, अपयाति? अपगच्छति? कालेन प्रशमितो भवति इत्यर्थः, पुत्त्रादिवियोगशोकस्य अप्रतिविधेयत्वात् वियुक्तस्य पुनः प्राप्तिसम्भावना-विरहाच्च तथा प्रियवियोगस्य नित्यमेव सम्भवत्वाच्च उत्तरोत्तरं शोकस्य वृद्धिरेव उचिता न प्रशमनम्, अतः अज्ञानमेव शोकस्य कारणं न पुनर्विच्छेदः, तत्त्वदर्शिनां शोकाभिभूतत्वादर्शनादिति भावः।

(ण) आत्मानं—स्वं, कोऽहं कुतः किमर्थमागतः इत्येवमात्मज्ञानमित्यर्थः। अनुसन्धेहि—अन्वेषय, आत्मतत्त्वं विज्ञातुं प्रयत्नपरो भव इत्यर्थः।

(त) शोकचर्चा—शोकचिन्ताम्। ("चर्चा स्यात्सङ्कचिन्तयोः" इति शाश्वतः)।

(८८) अकाण्डेति।—मर्मभेदिनां मर्मविदारकाणाम्, अस्त्राणाम् आयुधानाम्, अस्त्रस्वरूपाणामित्यर्थः, अकाण्डे असमये, सहसा इत्यर्थः, पातः पतनं, तेन जातानाम् उत्पन्नानाम्, अचिन्तितपूर्वाणामित्यर्थः, गाढशोकप्रहाराणां तीव्र-

ततस्तद्वचनं निशम्य (थ) प्रबुद्ध इव कौण्डिन्य उत्थाय अब्रवीत्,—"तदलम् इदानीं गृहनरकवासेन, वनमेव गच्छामि"। पुनः कपिलो ब्रूते,—

"वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः।
अकुत्सिते कर्मणि यः प्रवर्त्तते
निवृत्तरागस्य गृहं तपोवनम्॥ ८९॥

अतः,—दुःखितोऽपि चरेद्धर्मं यत्र कुत्राश्रमे रतः।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम्॥ ९०॥

---

शोकाघातानां, तज्जनितवेदनानामित्यर्थः, अचिन्तैव अनालोचनैव, औषधम् अव्यर्थ-मेव इत्यर्थः, महौषधं प्रधानं भेषजम्।

(थ) प्रबुद्ध इव—जागरित इव, मोहनिद्रापगमानन्तरं लब्धचैतन्य इव इत्यर्थः।

(८९) वनमेव गच्छामि इति कौण्डिन्योक्तेः प्रत्युत्तरमाह, वने इति।—रागिणां विषयासक्तचेतसां, वनेऽपि अरण्येऽपि, गृहे तु सुतरामेव इत्यपेरर्थः, दोषाः दूषणानि, लोभमोहादयः पापप्रवृत्तयः इत्यर्थः, प्रभवन्ति जायन्ते, प्रभुत्वेन वर्त्तन्ते इत्यर्थः, गृहे भवने, पञ्चानां पञ्चसङ्ख्यकानाम्, इन्द्रियाणां चक्षुः-कर्णादीनां, निग्रहः संयमोऽपि, तपः नियमः, धर्मानुष्ठानम् इत्यर्थः, यः जनः, अकुत्सिते अनिन्दिते, पुण्ये इति यावत्, कर्मणि क्रियायां, प्रवर्त्तते तिष्ठति, पुण्य-कार्य्यमाचरति इत्यर्थः, तादृशस्य निवृत्तरागस्य विषयासक्तिरहितस्य, वीतस्पृहस्येति यावत्, जनस्येति शेषः, गृहं भवनम् एव, तपोवनं तपोवनवत् धर्मानुष्ठानस्थानं, भवतीति शेषः; तदत्रैव अनासक्ततया स्थातव्यं, किं वनगमनाभिलाषेण? इति भावः। शान्तिशतकादिषु विविधप्राचीनग्रन्थेषु श्लोकस्यास्य भूयसा प्रचारो दृश्यते। वंशस्थविलं वृत्तम्।

(९०) दुःखित इति।—दुःखितोऽपि प्राप्तदुःखोऽपि, पुत्रकलत्राद्यभाव-जनितविविधदुःखं सहित्वाऽपीत्यर्थः, जनः इति शेषः, यत्र कुत्र यस्मिन् कस्मिन्नपि, आश्रमे गार्हस्थ्यादौ, रतः अनुरक्तः, समाहितचित्तः सन् इत्यर्थः, धर्मं पुण्यं, चरेत् [ भावप्रधान-निर्देशेन ], सर्वेषु निखिलेषु, भूतेषु प्राणिषु, समः समभावः एव,

अन्यच्च,—वृत्त्यर्थं भोजनं येषां सन्तानार्थञ्च मैथुनम् ।
वाक् सत्यवचनार्थञ्च दुर्गाण्यपि तरन्ति ते ॥ ९१ ॥

तथा हि,—

आत्मा नदी संयमपुण्यतीर्था
सत्योदका शीलतटा दयोर्मिः ।
तत्राभिषेकं कुरु पाण्डुपुत्र !
न वारिणा शुध्यति चान्तरात्मा ॥ ९२ ॥

निर्देशः अयम्, अथवा विशेषणमेतत् नरः इत्यस्य, तत्र च समदर्शी इत्यर्थः], सर्वत्र आत्मवत् ज्ञानमित्यर्थः, धर्मकारणं धर्मस्य हेतुः, धर्मसाधनहेतुरित्यर्थः, लिङ्गं चिह्नं, ब्रह्मचर्य्याद्याश्रमव्यञ्जकं दण्डाजिनधारणादि इत्यर्थः, न, धर्मकारणमिति शेषः । (मनुसंहितायां षष्ठाध्याये "दुःखितः" इत्यत्र "दूषितः" "कुत्र" इत्यत्र च "तत्र" इति पाठान्तरम्) ।

(९१) वृत्त्यर्थमिति ।—येषां नराणां, भोजनम् आहारः, वृत्तिः जीविका, अर्थः प्रयोजनं यस्य तत् जीविकार्थं, जीवनधारणार्थमित्यर्थः, न तु रसनातृप्त्यर्थमिति भावः ; मैथुनं स्त्रीसम्भोगश्च, सन्तानार्थम् अपत्यार्थं, न तु इन्द्रियसुखार्थमिति भावः ; वाक् वचनप्रयोगश्च, सत्यवचनार्थं सत्यकथननिमित्तं, न तु बहुजल्पनार्थं मृषाजल्पनार्थं वा इति भावः, ते नराः, दुर्गाणि कृच्छ्राणि अपि, दारुणसङ्कटानपीत्यर्थः, दुस्तरसंसारदुःखानपीत्यर्थो वा, तरन्ति अतिक्रामन्ति ; ते नराः धार्म्मिकाः, सर्वा विपदः अतिक्रम्य सुखेन वर्त्तन्ते च इति भावः । (भारतशान्तिपर्वीयराजधर्म-वर्णनप्रकरणे दशाधिकशततमेऽध्याये,—"यात्रार्थं भोजनं येषां सन्तानार्थञ्च मैथुनम् । वाक् सत्यवचनार्थाय दुर्गाण्यतितरन्ति ते" ॥ इति पाठः) ।

(९२) आत्मेति ।—आत्मा परं ब्रह्म एव, आत्मस्वरूपज्ञानमेवेत्यर्थः, संयमः इन्द्रियनिग्रह एव, पुण्य पवित्रं, तीर्थम् अवतारः, जलावतरणार्थं सोपानमित्यर्थः, ("अवतारे विदुस्तीर्थम्" इति शाश्वतः) यस्याः सा, संयमरूपसोपानसहायेन आत्मस्वरूपज्ञानरूपनद्यां प्रवेशाधिकारं लभेदिति भावः ; सत्यं तथ्यभाषणमेव, उदकं जलं यस्याः सा, शीलं सच्चरित्रमेव, तटं तीरं यस्याः सा, दया भूतानुकम्पा एव, ऊर्म्मिः तरङ्गमाला यस्याः तादृशी, नदी सरित्, नदीस्वरूपः इत्यर्थः, सर्वकालुष्य-विशोधकत्वात् इति भावः ; पाण्डुपुत्र ! हे युधिष्ठिर ! तत्र तादृश्याम् आत्मज्ञानरूप-नद्याम्, अभिषेकं स्नानं, कुरु अवगाहस्व, सत्यशीलदयासंयमाद्यनुष्ठानेन आत्मज्ञानं

विशेषतश्च,—

जन्ममृत्युजराव्याधिवेदनाभिरभिप्लुतम्।
संसारमिममत्यन्तमसारं त्यजतः सुखम् ॥ ९३ ॥

यतः,—दुःखमेवास्ति न सुखं यस्मात् तदुपलभ्यते।
दुःखार्त्तस्य प्रतीकारे सुखसंज्ञा विधीयते" ॥ ९४ ॥

शुद्ध्या आत्मानं विशोधय इत्यर्थः, वारिणा जलेन, प्रसिद्धेन लौकिकजलेनेत्यर्थः, अन्तरात्मा अन्तरिन्द्रियं, चेत इत्यर्थः, न शुध्यति शुद्धिं न लभते, सद्धर्माद्याचरणमेव चित्तशुद्धुपायः, न तु जलावगाहनमिति भावः। ("भारतीयशान्तिपर्वणि उद्योगपर्वणि च "आत्मा नदी भारत! पुण्यतीर्था सत्योदका धृतिकूला दयोर्मिः। तस्यां स्नातः पूयते पुण्यकर्मा पुण्यो ह्यात्मा नित्यमम्भोऽम्भ एव" ॥ इति पाठः। युधिष्ठिरं प्रति भीष्मस्य उपदेशोऽयम्)। इन्द्रोपेन्द्रवज्रयोः उपजातिः वृत्तम्,—"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति लक्षणात्।

(९३) जन्मेति।—जन्म उत्पत्तिः, मृत्युः मरणं, जरा वार्द्धक्यं, व्याधिः रोगः, वेदना शोकादिजन्या व्यथा, ताभिरभिप्लुतं सङ्कुलं, परिपीड़ितमित्यर्थः, अत एव अत्यन्तम् अतिशयेन, असारं स्थिरांशशून्यं, तुच्छमित्यर्थः, इमं परिदृश्यमानं, संसारं भवं, त्यजतो विहाय गच्छतः, जनस्य इति शेषः, सुखं प्रीतिः, भवतीति शेषः। (भारतशान्तिपर्वीयराजधर्मव्याख्याने नवमेऽध्याये,—"जन्ममृत्युजराव्याधिवेदनाभिरभिद्रुतम्। अपारमिव चास्वस्थं संसारं त्यजतः सुखम्" ॥ इति पाठान्तरम्)।

(९४) दुःखमिति।—दुःखमेव क्लेश एव, अस्ति विद्यते, सुखं प्रीतिः, न, अस्ति इति पूर्वेणान्वयः, संसारे इति शेषः; कुतः? इत्याह,—यस्मात् यतः, तत् अस्ति इति पूर्वेणान्वयः, संसारे इति शेषः; कुतः? इत्याह,—यस्मात् यतः, तत् दुःखमेव, उपलभ्यते अनुभूयते; ननु यदि संसारेऽस्मिन् सुखं नास्ति, निरवच्छिन्नं दुःखमेव विद्यते, तदा कथं सुखदुःखमिति नामद्वयं श्रूयते? इत्याह,— दुःखार्त्तस्य दुःखकातरस्य, जनस्येति शेषः, प्रतीकारे दुःखोपशमे सति, सुखसंज्ञा 'सुखम्' इति नाम, विधीयते क्रियते, व्यवह्रियते इत्यर्थः; जगति दुःखं दुःखाभावश्च इति द्वयमेव वर्त्तते, सुखव्यपदेशश्च दुःखाभावे एव लोकानाम्, अतोऽलम् अलीकसुखान्वेषणेन भवतः इति हृदयम्। (भारतशान्तिपर्वीयराजधर्मपर्वणि पञ्चविंशाध्याये,—"दुःखमेवास्ति न सुखं तस्मात्तदुपलभ्यते। तृष्णाऽऽर्त्तिप्रभवं दुःखं दुःखाऽऽर्त्तिप्रभवं सुखम्" ॥ इति पाठः)।

कौण्डिन्यो ब्रूते,—"एवमेव"। ततोऽहं तेन (द) शोकाकुलेन ब्राह्मणेन शप्तः यत्,—"अद्यारभ्य (ध) मण्डूकानां वाहनं भविष्यसि" इति। कपिलो ब्रूते,—"सम्प्रति (न) उपदेशासहिष्णुः भवान्, शोकाविष्टं ते हृदयम्; तथाऽपि कार्य्यं शृणु,—

सङ्गः सर्वात्मना त्याज्यः स चेत् त्यक्तुं न शक्यते।
स सद्भिः सह कर्त्तव्यः सतां सङ्गो हि भेषजम् ॥९५॥

अन्यच्च,—कामः सर्वात्मना हेयः स चेद्धातुं न शक्यते।
स्वभार्य्यां प्रति कर्त्तव्यः सैव तस्य हि भेषजम्" ॥९६॥

एतच्छ्रुत्वा स कौण्डिन्यः (प) कपिलोपदेशामृतप्रशान्त-

---

(द) शोकाकुलेन—शोकार्त्तेन। शप्तः,—एवं ते अनिष्टं भूयादित्येवम् आक्रुष्टः, अभिशापयुक्त इत्यर्थः।

(ध) मण्डूकानां—भेकानाम्।

(न) उपदेशासहिष्णुः,—दुःखाभिसन्तप्तहृदयत्वात् हितवाक्यग्रहणे अक्षमः। शोकाविष्टं—शोकाभिभूतम्।

(९५) सङ्ग इति।—सङ्गः संसर्गः, लोकैः सह सम्बन्ध इत्यर्थः, आसक्तिः वा, विषयानुरागः इत्यर्थः, सर्वात्मना सर्वथा, त्याज्यः परिहर्त्तव्यः, चेत् यदि, स सङ्गः, त्यक्तुं परिहर्त्तुं, न शक्यते न पार्य्यते, तर्हि स सङ्गः, सद्भिः साधुभिः, सह सार्द्धं, कर्त्तव्यः विधेयः, हि यतः, सतां साधूनां, सङ्गः संसर्गः, भेषजम् औषधं, मानसव्याधिप्रशमकं महौषधम् इति भावः; सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवतीति तात्पर्य्यम्।

(९६) काम इति।—कामः इच्छा, विषयाभिलाष इत्यर्थः, स्रक्चन्दनवनिताद्युपभोगेच्छा इति यावत्, ("कामः स्मरेच्छयोः पुमान्" इति मेदिनी) सर्वात्मना सर्वप्रयत्नेन, हेयः त्याज्यः, चेत् यदि, स कामः, हातुं त्यक्तुं, न शक्यते न क्षम्यते, तर्हि स्वभार्य्यां निजधर्मपत्नीं, प्रति कर्त्तव्यः विधेयः, हि यतः, सैव स्वभार्य्यैव, तस्य कामस्य, भेषजम् औषधं, तन्निवर्त्तिका इति भावः।

(प) कपिलोपदेशामृतप्रशान्तशोकानलः,—कपिलस्य उपदेशः हितवचन-

शोकानलो (फ) यथाविधि दण्डग्रहणं कृतवान्। ततोऽहं ब्राह्मणशापं भोक्तुं मण्डूकान् वोढुम् अत्र तिष्ठामि। अनन्तरं तेन मण्डूकेन गत्वा मण्डूकनाथस्य जालपादनाम्नोऽग्रे तत् कथितम्। ततोऽसावागत्य मण्डूकनाथः सर्पमधिष्ठितवान्। स च सर्पस्तं पृष्ठे कृत्वा (ब) चित्रपदक्रमं बभ्राम। परेद्यु-श्चलितुम् असमर्थं तं मण्डूकनाथोऽवदत्,—"किमिति भवान् अद्य मन्दगतिः?"। सर्पो ब्रूते,—"देव! आहारविरहात् दुर्बलोऽस्मि"। मण्डूकनाथोऽवदत्,—"अस्मदाज्ञया मण्डूकान् भक्षय"। ततः "गृहीतोऽयं (भ) महाप्रसादः" इत्युक्त्वा क्रमशः स मण्डूकान् खादति। अथ निर्मण्डूकं सरो विलोक्य मण्डूकनाथोऽपि तेन खादितः। अतोऽहं ब्रवीमि,—'स्कन्धे-नापि वहेच्छत्रून्' इत्यादि।

[इति वृद्धसर्प-मण्डूककथा]।

देव! यातु इदानीं (म) पुरावृत्ताख्यानकथनम्। सर्वथा सन्धेयोऽयं हिरण्यगर्भो राजा सन्धीयतामिति मे मतिः"। राजा उवाच,—"कोऽयं भवतो (य) विचारः? यतो

---

मेव, अमृतं पीयूषं, तेन प्रशान्तः उपशमं गतः, शोकानलः शोकदहनो यस्य सः, कपिलानुशासनेन लब्धप्रबोध इत्यर्थः, सञ्जातनिर्वेद इति भावः।

(फ) यथाविधि—यथाशास्त्रम्। दण्डग्रहणं—भैक्षाश्रमावलम्बनं, तत्रैव दण्ड-धारणनियमादिति भावः।

(ब) चित्रपदक्रमं—चित्रः विचित्रः, पदक्रमः पादकल्पः, चरणव्यापार इत्यर्थः, गमनमिति यावत्, यस्मिन् तत् यथा तथा, विस्मयजनकगमनभङ्गीप्रदर्शन-पुरःसरमित्यर्थः।

(भ) महाप्रसादः,—महान् राजानुग्रहः इत्यर्थः।

(म) पुरावृत्तेति।—पुरावृत्ते इतिहासे, यदाख्यानं प्रसिद्धेतिवृत्तवर्णनं, तस्य कथनम् उक्तिः, पुनः कीर्त्तनमित्यर्थः, ऐतिहासिकवृत्तान्तस्य पुनरावृत्तिः।

(य) विचारः,—नीतिः इत्यर्थः, मन्त्रणा इति यावत्।

जितस्तावत् अयम् अस्माभिः। ततो यदि अस्मदाज्ञया (र) सेवायां वसति, तदाऽऽस्तां, नो चेत् विगृह्यताम्"। अत्रान्तरे जम्बूद्वीपात् आगत्य शुकेन उक्तं,—"देव! सिंहलद्वीपस्य सारसो राजा सम्प्रति जम्बूद्वीपम् आक्रम्यावतिष्ठते"। राजा तं (ल) ससम्भ्रमम् आह,—"किं किम्?"। शुकः पूर्वोक्तं कथयति। गृध्रः स्वगतम् उवाच,—"साधु रे चक्रवाक! मन्त्रिन्! साधु"। राजा सकोपम् आह,—"आस्तां तावदयं, गत्वा तमेव समूलमुन्मूलयामि"। दूरदर्शी विहस्याऽऽह,—

"न शरन्मेघवत् कार्य्यं वृथैव घनगर्जितम्।
परस्यार्थमनर्थं वा प्रकाशयति नो महान्॥९७॥

अपरञ्च,—एकदा न विगृह्णीयात् बहून् राजा विवादिनः।
सदर्पोऽप्युरगः कीटैर्बहुभिर्नाश्यते ध्रुवम्॥९८॥

---

(र) सेवायां—परिचर्य्यायाम्। वसति—तिष्ठति। विगृह्यतां—युध्यताम्।

(ल) ससम्भ्रमं—सावेगं, सत्वरमित्यर्थः।

(९७) वृथा वागाडम्बरो न महतां लक्षणमित्याह, नेति।—शरन्मेघवत् शारदजलदेन इव, वृथैव विफलमेव, तदानीं जलवर्षणाभावादिति भावः, घनगर्जितं निरन्तरगर्जनं, ("घनं निरन्तरं सान्द्रम्" इत्यमरः) पुनः पुनः वृथा आस्फालनमित्यर्थः, न कार्य्यं न कर्त्तव्यं, महान् मनस्वी जनः, परस्य अन्यस्य, अर्थं प्रयोजनम्, इष्टसम्पादनम् इति यावत्, अनर्थम् अनिष्टं वा, अनिष्टसम्पादनमित्यर्थः, न प्रकाशयति न व्यक्तीकरोति, न वाक्यावेश प्रकटयति, किन्तु कार्य्यतः दर्शयत्येव इत्यर्थः; अतोऽलं शुष्कजल्पनेन भवत इति भावः।

(९८) युगपद्बहुभिः सार्द्धं कलहः नीतिविरुद्ध इत्याह, एकदेति।—राजा नृपः, विजिगीषुरिति यावत्, सदर्पः सगर्वः, अहङ्कारमत्तः सन् इत्यर्थः, एकदा युगपत्, बहून् अनेकान्, विवादिनः विरोधिनः, शत्रूनिति यावत्, न विगृह्णीयात् न युध्येत, बहुभिः सह युगपत् न विरुध्यात इत्यर्थः, तथा हि उरगः सर्पोऽपि, तीक्ष्णविषधरोऽपि इत्यर्थः, बहुभिः अनेकैः, कीटैः पिपीलिकादिभिः, ध्रुवं निश्चितं नाश्यते हन्यते; "क्षुद्राणामपि वस्तूनां संहतिः कार्य्यसाधिका" इति भावः।

देव ! किम् (ब) इतो विना सन्धानं गमनमस्ति ? यतः अस्माकं पश्चात्प्रकोपोऽनेन कर्त्तव्यः। अपरञ्च,—

योऽर्थतत्त्वमविज्ञाय क्रोधस्यैव वशं गतः।
स तथा तप्यते मूढो ब्राह्मणो नकुलाद्यथा" ॥९९॥

राजा पृच्छति,—"कथमेतत् ?"। दूरदर्शी कथयति,—

ब्राह्मण-नकुलकथा।

"अस्ति उज्जयिन्यां माधवो नाम ब्राह्मणः। तस्य ब्राह्मणी प्रसूता। सा बालापत्यरक्षार्थं ब्राह्मणमवस्थाप्य स्नातुं गता। अथ ब्राह्मणाय राज्ञः (ग) पार्वणश्राद्धं दातुमाह्वानमागतम्। तत् श्रुत्वा ब्राह्मणः (घ) सहजदारिद्र्यात् अचिन्तयत्,—"यदि सत्वरं न गच्छामि तदा अन्यः कश्चिच्छ्राद्धं ग्रहीष्यति। उक्तञ्च,—

आदेयस्य प्रदेयस्य कर्त्तव्यस्य च कर्मणः।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥१००॥

---

(ब) इतः,—अस्मात् स्थानात्। सन्धानं—सन्धिम्। पश्चात्प्रकोपः,—पृष्ठदेशादाक्रमणमित्यर्थः। अनेन—राजहंसेन।

(९९) पूर्वापरमनालोच्य सहसा क्रोधवशीभूतत्वात् दोषमाह, य इति।—यो जनः, अर्थतत्त्वम् अर्थस्य प्रयोजनस्य, किम्प्रयोजनमुद्दिश्य एतत् कार्य्यमनुष्ठितमित्येवं-रूपस्येत्यर्थः, यद्वा,—अर्थस्य वस्तुनः, सङ्घटितव्यापारस्येत्यर्थः, ("अर्थोऽभिधेयरैवस्तु-प्रयोजननिवृत्तिषु" इत्यमरः) तत्त्वं याथार्थ्यं, प्रकृतकारणम् इत्यर्थः, अविज्ञायैव अज्ञात्वा एव, क्रोधस्य कोपस्य, उत्कटरोषस्येत्यर्थः, वशम् अधीनतां, गतः प्राप्तः, यः सहसा क्रुध्यति इत्यर्थः, स मूढः मूर्खः, नकुलात् नकुलं व्यापाद्य इत्यर्थः, ब्राह्मणः यथा विप्रः यद्वत्, अतप्यत इति शेषः, तथा तद्वत्, तप्यते अनुतापं लभते।

(ग) पार्वणश्राद्धं—पर्वणि अमावस्यादौ विहितं, श्राद्धं पित्रादिभ्यः श्रद्धया देयं द्रव्यम्।

(घ) सहजदारिद्र्यात्—आजन्मनिर्धनत्वात्।

(१००) आदेयस्येति।—आदेयस्य आदातुं योग्यस्य, अन्यस्माद्ग्रहीतव्यस्येत्यर्थः, प्रदेयस्य दातव्यस्य, स्वयं सम्प्रदातृ अन्यकर्तृकसम्प्रदानविषयीभूतस्य इति यावत्,

किन्तु शिशोरत्र रक्षकः कोऽपि नास्ति, तत् किं करोमि ? भवतु तावत् चिरकालपालितममुं (स) सुतनिर्विशेषं नकुलं बालकरक्षार्थं व्यवस्थाप्य गच्छामि"। इति तथा कृत्वा गतः। ततस्तत्र नकुलेन बालकसमीपमागच्छन् तूष्णीं (ह) कृष्णसर्पो व्यापादितः खण्डितश्च। अथ असौ नकुलो ब्राह्मणमायान्तम् अवलोक्य (क) रक्तविलिप्तमुखपादः सत्वरम् उपगम्य तच्चरणयोर्लुलोठ। ततः असौ ब्राह्मणस्तं तथाविधं दृष्ट्वा,—"मम पुत्रः अनेन भक्षितः" इति अवधार्य्य तं व्यापादितवान्। अनन्तरं यावत् उपसृत्य पश्यति ब्राह्मणस्तावत् बालकः सुस्थः स्वपिति, सर्पस्तु व्यापादितस्तिष्ठति। ततः असौ ब्राह्मणः परं विषादम् उपगतः। अतोऽहं ब्रवीमि,—'योऽर्थतत्त्वमविज्ञाय' इत्यादि।

[ इति ब्राह्मण-नकुलकथा ]।

अपरञ्च,—कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा।
षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी भवेत्" ॥१०१॥

---

योग्यस्य इत्यर्थः, तथा कर्त्तव्यस्य अवश्यसम्पादनीयस्य, कर्मणश्च कार्य्यस्य च, यद्वा,—कर्त्तव्यस्य आदेयस्य प्रदेयस्य च कर्म्मणः, क्षिप्रं शीघ्रम्, अक्रियमाणस्य असम्पाद्यमानस्य सतः, कालः समयः, यथाकालमक्रियमाणत्वात् अतिक्रान्तः समय इत्यर्थः, तस्य कर्म्मणः, रसं स्वादं, माधुर्य्यमित्यर्थः, सारांशमिति यावत्, पिबति ग्रसति, तत् कार्य्यं निष्फलीकरोतीत्यर्थः, अतः यथाकालमेव सम्पादनीयं सर्वं कर्त्तव्यमिति भावः।

(स) सुतनिर्विशेषम्—अपत्यवत् स्नेहास्पदम्। व्यवस्थाप्य—नियोज्य।

(ह) कृष्णसर्पः,—तीव्रविषः सर्पविशेषः। (केउटे इति भाषा)। [अत्र नित्यकर्म्मधारयसमासः]।

(क) रक्तविलिप्तमुखपादः,—रक्तेन रुधिरेण, सर्पशोणितेनेति यावत्, विलिप्तं रञ्जितं मुखपादं वदनचरणं यस्य सः रुधिरदिग्धमुखचरणः।

(१०१) आभ्यन्तरीणारिषट्कस्य अवश्यत्याज्यत्वे कामन्दकीयप्रथमसर्गोक्तश्लोकं प्रमाणयति, काम इति।—कामः विषयभोगाभिलाषा, स्रक्चन्दनवनितादुपभोगेच्छा

राजाऽऽह,—"मन्त्रिन्! एष ते निश्चयः?"। मन्त्री ब्रूते,—"एवमेव। यतः,—

स्मृतिश्च परमार्थेषु वितर्को ज्ञाननिश्चयः।
दृढ़ता मन्त्रगुप्तिश्च मन्त्रिणः परमो गुणः ॥१०२॥

तथा च,—

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृष्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥१०३॥

---

इत्यर्थः, क्रोधः कोपः, तथा लोभः परद्रव्येषु अत्यन्ताभिलाषः, हर्षः इष्टप्राप्तौ आनन्द इत्यर्थः, इष्टानिष्टप्राप्तौ हर्षविषादाधीनतायाः महापुरुषलक्षणविरोधात्, तदुक्तं,—"सम्पदि यस्य न हर्षो विपदि विषादः रणे च धीरत्वम्। तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम्" ॥ इति; मानः चित्तसमुन्नतिः, आत्माभिमानजनकत्वात् तस्य षड्वर्गान्तर्गतत्वं बोध्यम्; तथा मदः गर्वः, एनं षड्वर्गं रिपुषट्कम्, उत्सृजेत् परिहरेत्, तथा हि अस्मिन् षड्वर्गे, त्यक्ते परिहृते सति, सुखी आनन्दितः, भवेत्, लोकः इति शेषः. ("कामः क्रोधो मदो मोहो लोभो मात्सर्यमेव च" इति "कामः क्रोधस्तथा मोहो लोभो मानो मदस्तथा" इति च पाठान्तरम्। कामन्दकीयप्रथमसर्गे तु "भवेत्" इत्यत्र "नृपः" इति पाठः)। एतं केवलं दुःखनिदानम् इति हृदयम्।

(१०२) मन्त्रिणः प्रधानगुणमाह, स्मृतिरिति।—परमार्थेषु धर्मतत्त्वेषु, स्मृतिः अभिनिवेशः, यद्वा,—परमार्थेषु आवश्यकीयवस्तुषु, कर्त्तव्यविषयेषु इत्यर्थः, स्मृतिः स्मरणं, वितर्कः विवेकबुद्धिः, विचारनैपुण्यं वा, कर्त्तव्यस्य फलाफलचिन्तनमित्यर्थः, ज्ञाननिश्चयः ज्ञानेन बुद्ध्या, निश्चयः सुनिपुणं विचार्य कर्त्तव्यस्थिरीकरणं बुद्धिस्थिरता वा, दृढ़ता अविचलितप्रतिज्ञता च, मन्त्रगुप्तिः गुह्यवादसङ्गोपनञ्च, मन्त्रितस्य अर्थस्य अप्रकाशनमित्यर्थः, इत्येतत् सर्वं मन्त्रिणः सचिवस्य, परमो महान्, गुणः धर्मः। (कामन्दकीयचतुर्थसर्गे तु,—"स्मृतिस्तत्परताऽर्थेषु वितर्को ज्ञाननिश्चयः। दृढ़ता मन्त्रगुप्तिश्च मन्त्रिसम्पत्प्रकीर्त्तिता" ॥ इति पाठः)।

(१०३) निश्चयज्ञानमन्तरेण कार्य्यप्रवृत्तौ दोषमाह, सहसेति।—सहसा हठात्, अविमृश्य इत्यर्थः, ["सहसैत्याकस्मिकाविमर्षयोः" इति गणव्याख्याने स्वरादिपाठादव्ययम्] क्रियां किञ्चिदपि कार्य्यं, न

तद्देव! यदि इदानीमस्मद्वचनं क्रियते तदा सन्धाय गम्यताम्। यतः,—

यद्यप्युपायाश्चत्वारो निर्दिष्टाः साध्यसाधने।
सङ्ख्यामात्रं फलं तेषां सिद्धिः साम्नि व्यवस्थिता"॥१०४॥

राजाऽऽह,—"कथमेवं सत्वरं सम्भाव्यते?"। मन्त्री ब्रूते,—"देव! सत्वरं भविष्यति। यतः,—

मृद्घटवत् सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति।
सुजनस्तु कनकघटवत् दुर्भेद्यश्चाशु सन्धेयः॥१०५॥

---

विदधीत न कुर्य्यात्, कुत इत्याह,—अविवेकः विवेकशून्यता, अविमृश्यकारित्वमित्यर्थः, परम् अत्यन्तम्, आपदां विपदां, पदम् आस्पदम्। व्यतिरेकेणोक्त्वा इदानीमन्वयमुखेनाह, वृणते इति।—गुणलुब्धाः गुणपक्षपातिन्यः, सम्पदः श्रियः, अत्र स्वयं वरणे गुणलुब्धत्वमेव हेतुः; विमृश्यकारिणं विवेकिनं, [विमृश्य करोतीति "उपपदमतिङ्" (२।२।१९ पा०) इति समासः] स्वयमेव आत्मनैव, न तु परप्रेरणया इति भावः; वृणते भजन्ते, स्वयंवरा भवन्तीत्यर्थः, हि निश्चये; अतो मया यदुक्तं तत् विमृश्यैव उक्तमिति भावः। सुन्दरी वृत्तम्।

(१०४) उपायचतुष्टये सन्धेरुपयोगितामाह, यदीति।—यद्यपि यदि च, साध्यसाधने साध्यस्य कार्य्यस्य, साधने सम्पादने, अभीष्टसिद्धिविषये इत्यर्थः, चत्वारः चतुर्विधाः, उपायाः साधनानि, सामदानादयः इत्यर्थः, निर्दिष्टाः कथिताः, नीतिविद्भिरिति शेषः, तथाऽपि तेषाम् उपायानां, सङ्ख्यामात्रं चतुःसङ्ख्यकत्वेन गणनामात्रं, फलं लाभः, गणनया आधिक्यदर्शनमेव अस्य लाभः, नान्यः कश्चित् लाभ एभिर्भवति इति भावः; सिद्धिः कार्य्यसाधनन्तु, साम्नि सामप्रयोगे, सन्धिरूपे उपाये एव इत्यर्थः, व्यवस्थिता निरूपिता; सर्वत्र साम्न एव मुख्यत्वादिति भावः।

(१०५) सन्धिसंस्थापनस्य आशु एव सम्भाव्यत्वे हेतुं प्रदर्शयति, मृदिति।—दुर्जनः असज्जनः, मृद्घटवत् मृन्मयकुम्भ इव, सुखेन अनायासेन, भेद्यः विघटनीयः, भेदार्हः इत्यर्थः, स्वल्पेनैव कारणेन तेन सह मैत्रीभावः विच्छिन्नो भवतीति भावः; दुः कष्टसाध्यं, सन्धानं सन्धिर्यस्य स तथोक्तश्च दुःसन्धेयश्च, पुनर्मेलनानर्हश्चेत्यर्थः, भवति जायते, सुजनः सज्जनस्तु, कनकघटवत् सुवर्णमयकलस इव, दुर्भेद्यः कष्टेन विश्लेषणीयः, आशु शीघ्रं, सन्धेयश्च सन्धानयोग्यश्च, पुनर्मेलनार्हश्च इत्यर्थः;

अपरञ्च,—अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्माऽपि नरं न रञ्जयति ॥ १०६ ॥

विशेषतश्च अमी धर्मज्ञो राजा, सर्वज्ञो मन्त्री च ; ज्ञातमेतन्मया पूर्वं मेघवर्णवचनात्, तत्कृतकार्य्यसन्दर्शनाच्च । यतः,—

कर्मानुमेयाः सर्वत्र परोक्षगुणवृत्तयः ।
तस्मात् परोक्षवृत्तीनां फलैः कर्म विभावयेत्" ॥१०७॥

---

भवति इति पूर्वेणान्वयः ; मृत्कुम्भो यथा स्वल्पेनैवाघातेन भग्नो भवति, अतश्चेष्टया पुनर्न तं संयोजयितुं शक्नोति कश्चित्, एवं दुर्जनमैत्री स्वल्पेनैव हेतुना विच्छिन्ना भवति न पुनः कोऽपि मेलयितुं शक्नोति ताम् । सुवर्णकुम्भः सुजनश्च एतद्विपरीतगुणविशिष्ट एव, अतः सुजनस्यास्य मेलनं सुकरमेव इति भावः । आर्य्या जातिः ।

(१०६) हेत्वन्तरं प्रदर्शयति, अज्ञ इति ।—अज्ञोऽविद्वान्, हिताहितबोधविहीनः मूर्खः इति यावत्, सुखम् अनायासं यथा तथा, अल्पायासेनेति यावत्, आराध्यः प्रसादनीयः, स्वल्पसन्तुष्टतया आशुविश्वासितया च मधुरवाक्येनैव स अनुकूलयितव्य इत्यर्थः, विशेषज्ञः विद्वान्, विवेकधीसम्पन्न इति यावत्, सुखतरम् अनायासतरं, ततोऽप्यल्पायासं यथा तथा इत्यर्थः, आराध्यते सेव्यते, प्रसादयितुं शक्यते इत्यर्थः, हिताहितबोधसम्पन्नत्वात् युक्तियुक्तवचनप्रयोगेनाल्पेनैव सः अनुकूलो भवतीति भावः ; परन्तु ज्ञानलवदुर्विदग्धं ज्ञानलवेन बुद्धिलेशेन, स्वल्पमात्रया बुद्ध्या इत्यर्थः, दुर्विदग्धम् अविनीतं, पण्डिताभिमानिनमित्यर्थः, नरं मानवं, ब्रह्माऽपि विधाताऽपि, सकलज्ञानाधारोऽपि इति यावत्, न रञ्जयति सन्तोषयितुं न शक्नोतीत्यर्थः, "स्वल्पविद्या भयङ्करी" इत्युक्तेः तादृश्या विद्यया अहं विद्वान् इत्याद्याकारक आत्माभिमान एव केवलं जायते न कोऽपि तं बोधयितुं शक्नोति, अतः तादृशः पण्डितम्मन्यः खलु सर्वजनविलक्षणः अद्भुतो जीव इति भावः । राजहंसोऽयं विशेषज्ञः अतः सत्वरं सुखतरमेव सन्धातुं शक्यः इति तात्पर्य्यम् । श्लोकोऽयं विविधप्राचीनग्रन्थेषु परिदृश्यते । आर्य्या जातिः ।

(१०७) कार्य्यदर्शनेन शीलादीनामनुमेयत्वे कामन्दकीयचतुर्थसर्गोक्तश्लोकं प्रमाणयति, कर्मेति ।—सर्वत्र सर्वस्मिन् देशे विषये वा, परोक्षगुणवृत्तयः परोक्षा अप्रत्यक्षा, गुणानां दयाधर्म्मादीनां, वृत्तिः व्यापारविशेषः येषां ते तादृशाः, जना इति शेषः, कर्म्मणा कार्य्येण, व्यवहारदर्शनेनेत्यर्थः, अनुमेयाः अनुमातव्याः, एते

राजाऽऽह,—"अलम् (ख) उत्तरोत्तरेण, यथाऽभिप्रेतम् अनुष्ठीयताम्"। एतन्मन्त्रयित्वा गृध्रो महामन्त्री,—"तत्र यथार्हं कर्त्तव्यम्" इत्युक्त्वा दुर्गाभ्यन्तरं प्रचलितः। ततः प्रणिधिबकेनागत्य राज्ञा हिरण्यगर्भस्य निवेदितं,—"देव! सन्धिं कर्त्तुं महामन्त्री गृध्रोऽस्मत्समीपम् आगच्छति"। राजहंसो ब्रूते,—"मन्त्रिन्! पुनः (ग) अभिसन्धिना केनचिदत्रागन्तव्यम्?"। सर्वज्ञो विहस्याऽऽह,—"देव! न शङ्काऽऽस्पदमेतत्, यतो महाशयोऽसौ दूरदर्शी। अथवा (घ) स्थितिरियं मन्दमतीनां, कदाचित् शङ्कैव न क्रियते, कदाचित् सर्वत्र शङ्का। तथा हि,—

सरसि बहुशस्ताराच्छाये क्षणात् परिवञ्चितः
कुमुदविटपान्वेषी हंसो निशास्वविचक्षणः।

---

ईदृगगुणसम्पन्नाः इति ज्ञातव्यम् इत्यर्थः, तस्मात् अत एव, परोक्षवृत्तीनां परीक्षा वृत्तिः गुणानां व्यापारविशेषः येषां तेषां प्रत्यक्षादृष्टगुणानामित्यर्थः, जनानामिति शेषः, कर्म्म कार्य्यं, दृष्ट्वाद्यनुष्ठानमित्यर्थः, फलैः परिणामैः, कार्य्यस्य परिणामदर्शनैरित्यर्थः, विभावयेत् जानीयात्; यद्वा,—परीक्षा अप्रत्यक्षाः, अन्यतः श्रुताः न तु स्वयं दृष्टाः इति भावः, गुणवृत्तयः कर्म्मानुमेयाः स्वनिश्चयार्थं कर्म्मदर्शनैरनुमातव्याः, तस्मात् परोक्षवृत्तीनां परीक्षा या वृत्तयः गुणवृत्तयः तासां, कर्म्म क्रिया, फलैः विभावयेत्।

(ख) उत्तरोत्तरेण—उत्तरस्य उत्तरवाक्यस्य, उत्तरेण प्रत्युत्तरेण, उत्तरप्रत्युत्तररूपवाक्प्रपञ्चेनेत्यर्थः।

(ग) अभिसन्धिना—अभिसन्धानेन, व्याजेन इत्यर्थः, काचित् प्रतारणासुद्दिश्येति यावत्। ("सम्बन्धिना" इति पाठे—केनचित् आगन्तुकेन, सम्बन्धिना सम्पर्कवता सता, कपटबन्धुना सता इत्यर्थः।

(घ) स्थितिः,—अवस्थानं, नियमः इत्यर्थः। मन्दमतीनाम्—अल्पबुद्धीनाम्।

(१०८) मूढानां प्रकृतिं प्रदर्शयति, सरसीति।—निशासु रात्रिषु, कुमुदविटपं कैरवम् अन्विष्यतीति कुमुदविटपान्वेषी कैरवमृणालग्राही, अविचक्षणः मूढः, हंसः सरसि सरोवरे, बहुशः अनेकशः, ताराच्छाये नक्षत्रप्रतिबिम्बे, ["छाया

न दशति पुनस्ताराशङ्की दिवाऽपि सितोत्पलं
कुहकचकितो लोकः सत्येऽप्यपायमपेक्षते ॥१०८॥
दुर्जनदूषितमनसः सुजनेष्वपि नास्ति विश्वासः।
बालः पायसदग्धो दध्यपि ननु फुत्कृतं भुङ्क्ते ॥१०९॥

तद्देव! यथाशक्ति तत्पूजार्थं रत्नोपहारादिसामग्री सुसज्जी-क्रियताम्"। तथाऽनुष्ठिते सति स गृध्रो मन्त्री दुर्गद्वारा-च्चक्रवाकेण उपगम्य (ङ) सत्कृत्यानीय राजदर्शनं कारितो दत्तासने च उपवेशितः। चक्रवाक उवाच,—"मन्त्रिन्!

---

बाहुल्ये" (२।४।२२ पा०) इति छायाशब्दस्य क्लीवत्वम्] यद्वा,—अविचक्षणः हंसः निशासु ताराच्छाये ताराणां छाया यत्र तादृशे, सरसि बहुशः बहु-वारान्, पुनः पुनरित्यर्थः, कुमुदविटपान्वेषी, क्षणात् क्षणकालमध्ये, यद्वा,—क्षणात् उत्सवात्, कुमुदभक्षणाशाजनितानन्दादित्यर्थः, ("क्षणः पर्वोत्सवा-व्यापारेषु मानेऽप्यनेहसः" इति मेदिनी), परिवञ्चितः प्रतारितः सन्, नक्षत्रप्रतिबिम्बे कुमुदभ्रान्त्या वञ्चितः सन् इत्यर्थः, दिवाऽपि दिवसेऽपि, पुनः भूयः, ताराशङ्की नक्षत्रभ्रान्तिमान्, सितोत्पलं श्वेतपद्मं, न दशति न कवलीकरोति, तथा हि, कुहकेन छलेन, चकितः विभ्रान्तचित्तः, लोकः जनः, सत्येऽपि तथ्येऽपि, यथार्थविषयेऽपीत्यर्थः, अपायम् अनिष्टम्, अपेक्षते मन्यते, आशङ्कते इति यावत्; सकृत् प्रतारितस्य पूर्वकृतप्रतारणानुस्मरणात् परमार्थवस्तुन्यपि संशयो जायते इति भावः। हरिणी वृत्तम्;—"नसमरसला गः षड्वेदैर्हयैर्हरिणी मता" इति तल्लक्षणात्।

(१०९) उक्तमर्थं प्रकारान्तरेण आह, दुर्जनेति।—दुर्जनेन खलेन, दूषितं कलुषितं, मनश्चित्तं यस्य तस्य खलप्रतारितस्येत्यर्थः, जनस्य इति शेषः, सुजनेषु साधुषु अपि, विश्वासः प्रत्ययः, नास्ति न भवति। अत्र दृष्टान्तमाह,—ननु निश्चितं, पायसेन परमान्नेन, अत्युष्णेन इति भावः, दग्धः प्लुष्टमुखः, बालः शिशुः, दध्यपि फुत्कृतं फुत्कारं यथा तथा, मुखमारुतं दत्त्वा इत्यर्थः, भुङ्क्ते खादति; उष्णज्ञाने-नेति भावः। उपगीतिश्छन्दः,—"आर्य्यापरार्द्धतुल्ये दलद्वये प्राहुरुपगीतिम्" इति लक्षणात्।

(ङ) सत्कृत्य—सम्मान्य।

(च) युष्मदायत्तं सर्वम्। स्वेच्छयोपभुज्यतामिदं राज्यम्"। राजहंसो ब्रूते,—"एवमेव"। दूरदर्शी कथयति,—"एवमेवैतत्, किन्तु इदानीं (छ) बहुप्रपञ्चवचनं निष्प्रयोजनम्। यतः,—

लुब्धमर्थेन गृह्णीयात् स्तब्धमञ्जलिकर्मणा।
मूर्खं छन्दानुवृत्तेन याथातथ्येन पण्डितम्॥११०॥

अन्यच्च,—सद्भावेन हरेन्मित्रं सम्भ्रमेण तु बान्धवान्।
स्त्रीभृत्यौ दानमानैश्च दाक्षिण्येनेतरान् जनान्॥१११॥

तत् इदानीं सन्धाय गम्यताम्। महाप्रतापश्चित्रवर्णो

(च) युष्मदायत्तं—युष्मदधीनम्।

(छ) बहुप्रपञ्चवचनम्—अनेकशः वाग्विस्तरः, वृथा वाक्याडम्बर इत्यर्थः।

(११०) वाग्विस्तरस्य निष्प्रयोजनतायां हेतुप्रदर्शनमुखेन कीदृशं जनं कथं वशीकुर्य्यात् इति वक्तुं चाणक्यवचनं प्रमाणयति, लुब्धमित्यादिद्वाभ्याम्।—लुब्धं लोभपरवशं जनम्, अर्थेन धनेन, गृह्णीयात् वशमानयेत्, स्तब्धं गर्वितं जनं, ("साधुम्" इति पाठान्तरम्) अञ्जलिकर्मणा युग्मकररूपव्यापारेण, हस्तयुग्मं कृत्वा विनयेन इत्यर्थः, मूर्खम् अज्ञं, छन्दानुवृत्तेन अभिप्रेतकार्य्यानुष्ठानेन, ("छन्दोऽभिप्राय आशयः" इत्यमरः। "छन्दानुरोधेन" इति पाठान्तरम्) पण्डितं विद्वांसं, याथातथ्येन याथार्थ्येन, यथार्थज्ञापनेन इत्यर्थः, सर्वत्र गृह्णीयादित्यनुषङ्गः। (भारतशान्तिपर्वीयापद्धर्मव्याख्याने अस्यानुरूपश्लोको यथा,—"शूरमञ्जलिपातेन भीरुं भेदेन भेदयेत। लुब्धमर्थप्रदानेन समं तुल्येन. विग्रहः"॥ इति)। भवान् पण्डितः, अतः भवत्सन्निधौ वृथा वागाडम्बरं परिहृत्य यथार्थकथनमेव युज्यते इति भावः।

(१११) सद्भावेनेति।—सद्भावेन साधुव्यवहारेण, प्रणयेन इत्यर्थः, मित्रं सुहृदं, हरेत् वशीकुर्य्यात् इत्यर्थः, सम्भ्रमेण आदरेण, गौरवप्रदर्शनेन इत्यर्थः, तु पुनः, बान्धवान् आत्मीयान्, ज्ञातिप्रभृतीन् इत्यर्थः, दानमानैः अर्थादिदानेन सम्मान-प्रदर्शनेन च, स्त्रीभृत्यौ भार्य्यानुजीविनौ, दाक्षिण्येन सारल्येन, अकपटव्यवहारेण इत्यर्थः, इतरान् उदासीनान्, जनान्, अवश्यपि हरेदिति सर्वत्रानुषङ्गः; सर्वत्र पात्रानुरूपं व्यवहर्त्तव्यमिति भावः। ("स्वभावेन हरेन्मित्रं सद्भावेन च बान्धवान्। स्त्रीभृत्यान् प्रेमदानाभ्यां दाक्षिण्येनेतरं जनम्"॥ इति कामन्दकीयतृतीयसर्गोक्तपाठः)।

राजा"। चक्रवाको ब्रूते,—"यथा सन्धानं कार्य्यं तदपि उच्यताम्"। राजहंसो ब्रूते,—(ज) "कति प्रकाराः सन्धीनां सम्भवन्ति ?"। गृध्रो वदति,—"कथयामि, श्रूयताम्,—

बलीयसाऽभियुक्तस्तु नृपो नान्यप्रतिक्रियः ।
आपन्नः सन्धिमन्विच्छेत् कुर्वाणः कालयापनम् ॥११२॥
कपाल उपहारश्च सन्तानः सङ्गतस्तथा ।
उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ॥११३॥
अदृष्टनर आदिष्ट आत्मादिष्ट उपग्रहः ।
परिक्रयस्तथोच्छिन्नस्तथा च परभूषणः ॥११४॥
स्कन्धोपनेयः सन्धिश्च षोड़शः परिकीर्त्तितः ।
इति षोड़शकं प्राहुः सन्धिं सन्धिविचक्षणाः ॥११५॥

(ज) कति प्रकाराः,—कति भेदाः ।

(११२) कीदृशेन नृपेण सन्धिः कर्त्तव्य इति वक्तुं कामन्दकीयनवमसर्गोक्तिं प्रमाणयति, बलीयसेति ।—बलीयसा प्रबलेन शत्रुणा, अभियुक्तस्तु आक्रान्तः, न नास्ति, अन्या सन्धिव्यतिरिक्ता, प्रतिक्रिया प्रतिविधानं यस्य स तथाभूतः अनन्योपायः, उपायान्तरविरहित इत्यर्थः, ("बलिना विगृहीतः सन् नृपोऽनन्यप्रतिक्रियः" इति कामन्दकीयपाठः) अत एव आपन्नः विपन्नः, आपद्गत इत्यर्थः, बलीयसाऽभियुक्तत्वादिति भावः, कालयापनं विविधच्छलेन समयातिपातं, कुर्वाणः विदधानः, शक्तिसञ्चयार्थमिति भावः, सन्धिं पणबन्धं, शत्रुणा सह मेलनमित्यर्थः, अन्विच्छेत् अभिलषेत्; आपद्ग्रस्त एव सन्धिः, न तु सार्वत्रिक इति भावः ।

(११३।११४।११५) कामन्दकोक्तं षोड़शधा सन्धिभेदमाह, कपाल इत्यादिभिः त्रिभिः ।—कपालः, उपहारः, सन्तानः, सङ्गतः, तथा उपन्यासः, प्रतीकारः, संयोगः, पुरुषान्तरः, अदृष्टनरः, आदिष्टः, आत्मादिष्टः ("आत्मामिषः" इति कामन्दकोक्तपाठः) उपग्रहः, परिक्रयः, तथा उच्छिन्नः, तथा परभूषणश्च, ("परदूषणः" इति कामन्दकीयपाठः) स्कन्धोपनेयश्च इति षोड़शः षोड़शविधः, सन्धिः परिकीर्त्तितः कथितः, ("षोड़शः परिकीर्त्तितः" इत्यत्र "षोड़शैते प्रकीर्त्तिताः" इति पाठे—षोड़श षोड़शविधाः स्कन्धोपनेयश्च सन्धिः सन्धिभेदः, ज्ञातव्य इति शेषः, एते पूर्वोक्ताः, सन्धयः इति शेषः, प्रकीर्त्तिताः कथिताः) सन्धिविचक्षणाः सन्धिशास्त्राभिज्ञाः, इत्यर्थः,

कपालसन्धिर्विज्ञेयः केवलं समसंहितः ।
सम्प्रदानाद्भवति य उपहारः स उच्यते ॥११६॥
सन्तानसन्धिर्विज्ञेयो दारिकादानपूर्वकः ।
सद्भिस्तु सङ्गतः सन्धिर्मैत्रीपूर्व उदाहृतः ॥११७॥
यावदायुःप्रमाणस्तु समानार्थप्रयोजनः ।
सम्पत्तौ वा विपत्तौ वा कारणैर्यो न भिद्यते ॥११८॥
सङ्गतः सन्धिरेवायं प्रकृष्टत्वात् सुवर्णवत् ।
तथाऽन्यैः सन्धिकुशलैः काञ्चनः स उदाहृतः ॥११९॥

---

सन्धिम् इति पूर्वोक्तरूपं, षोडशकं षोडशसङ्ख्याकं, प्राहुः कथयन्ति । अत्रायं वक्तव्यः,—सन्धयस्तावत् द्विविधः अनभियोक्ता अभियोक्ता च, तत्र उपन्यासादयस्त्रयः सन्धयः अनभियोक्तारि, शिष्टाश्च त्रयोदश अभियोक्तारि ज्ञातव्या इति ।

(११६) पञ्चदशभिः श्लोकैः कामन्दकवचनमवलम्ब्य उद्दिष्टानां लक्षणान्याह, कपालेत्यादि ।—केवलं समसंहितः समः तुल्यः, इति संज्ञा जाता अस्य सम इति नाम्ना प्रसिद्धः इत्यर्थः, सन्धिः कपालसन्धिः, विज्ञेयः वेदितव्यः । ("समसन्धितः" इति पाठे—समः समभावेन, सन्धितः मिलित इत्यर्थः । "समसन्धिकः" इति कामन्दकीयपाठे—समः तुल्यः, सन्धिना यः सः सन्धितुल्यः, न तु वास्तवसन्धिरित्यर्थः ) अत्रायमाशयः,—यथा कपालयुगलं तुल्यतया संयोजितमपि नैकीभावो जायते सन्धेः, एवम् अनयोरन्योन्यमविश्वासात् नैकात्मीभावो घटते, तस्मैव केवलं सन्धिरुच्यते इति । सम्प्रदानात् अर्थादिप्रदानात्, स्वेच्छया आदावेव उपक्रियमाणत्वादिति भावः, यः सन्धिः, भवति, स उपहारः उपहारसन्धिः, उच्यते कीर्त्यते ।

(११७) सन्तानेति ।—दारिकादानपूर्वकः कन्यादानारम्भकः, कन्याप्रदानेन सम्बन्धेन सम्बद्धः इत्यर्थः, यः सन्धिः, सः सन्तानसन्धिः सन्तानहेतुत्वात् सन्तानसन्धिरिति, विज्ञेयः ज्ञातव्यः । सद्भिः सज्जनैः, नीतिविद्भिरित्यर्थः, मैत्रीपूर्वः मित्रतापूर्वकः, सन्धिः, सम्प्रदाने सत्यसति वा इति भावः, सङ्गतः सङ्गताख्यः सन्धिः, उदाहृतः कथितः । (कामन्दके तु "सद्भिः सङ्गतसन्धिस्तु" इति पाठः ) ।

(११८।११९) यावदित्यादि ।—यः सन्धिः, यावदायुःप्रमाणः यावज्जीवनस्थायी, ("यावदायुःप्रमाणम्" इति कामन्दकीयपाठे—यावज्जीवनमित्यर्थः; समानार्थप्रयोजन इत्यादिना अन्वयः ) समानार्थे विश्वासेनैकीभावगतत्वात् तुल्यरूपम्;

द्रव्यात्मकार्य्यसिद्धिन्तु समुद्दिश्य क्रियेत यः।
स उपन्यासकुशलैरुपन्यास उदाहृतः ॥१२०॥
मयाऽस्योपकृतं पूर्वं ममाप्येष करिष्यति।
इति यः क्रियते सन्धिः प्रतीकारः स उच्यते ॥१२१॥
उपकारं करोम्यस्य ममाप्येष करिष्यति।
अयञ्चापि प्रतीकारो रामसुग्रीवयोरिव ॥१२२॥

---

एकप्रकारमित्यर्थः, प्रयोजनं कार्य्यं यस्मिन् सः तुल्यकार्य्यः इत्यर्थः, सम्पत्तौ सम्पत्काले वा, विपत्तौ विपत्काले वा, कारणैः कैश्चिदपि हेतुभिः, न भिद्यते न भेदमाप्नोति, न विच्छिन्नीभवतीत्यर्थः, अयम् एतादृश एव, सन्धिः सङ्गतः सङ्गतः इति नाम्ना ख्यातः, मैत्रीपूर्वत्वादिति भावः, तथा किञ्च, सुवर्णवत् स्वर्णं इव, प्रकृष्टत्वात् उत्कृष्टत्वात्, सर्वलोहेभ्यः सुवर्णं यथा उत्कृष्टं तथा सर्वसन्धिभ्यः सङ्गतसन्धेः उत्कृष्टत्वादित्यर्थः, सः सङ्गतसन्धिः, अन्यैः अपरैः, सन्धिकुशलैः सन्धितत्त्वनिपुणैः, काञ्चनः काञ्चननाम्ना, उदाहृतः कथितः। चत्वार एते अभियोक्तरि सन्धेये द्रष्टव्याः। कामन्दके श्लोकाविमौ किञ्चित्परिवर्त्तितौ दृश्येते।

(१२०) द्रव्येति।—द्रव्यं सम्पत्, आत्मा देहः, कार्य्यं कर्त्तव्यम्, एतेषां यद्वा,—द्रव्याय भव्याय, मङ्गलायेत्यर्थः, ("भव्यभेषजयोर्द्रव्यम्" इति शाश्वतः) तत् आत्मकार्य्यं स्वकीयं कर्म, तस्य सिद्धिं साफल्यं, समुद्दिश्य अभिप्रेत्य, यः सन्धिः, क्रियेत साध्येत, स सन्धिः, उपन्यासकुशलैः उपन्यासाख्यसन्धितत्त्वाभिज्ञैः, उपन्यासः उपन्यासनाम्ना, उदाहृतः कीर्त्तितः। (अत्र प्रथमपादे "आत्मकार्य्यस्य सिद्धिन्तु" इति पाठे—स्वकार्य्यसिद्ध्यर्थम् इत्यर्थः। "भव्यार्थकार्य्यसिद्धिम्" इति कामन्दकीयपाठे—भव्यां शुभावहाम्, एकार्थसिद्धिं तुल्यप्रयोजनसम्पादनं, रिपुरेषः द्वयोरेवावयोरनिष्टकारी, निहतेऽस्मिन् मया तवापि इष्टसिद्धिरित्येवमुपन्यस्य यः सन्धिः क्रियते स उपन्यासः इति भावः)।

(१२१) मयेति।—पूर्वं प्राक्, मया अस्य आपन्नस्य एतस्य, उपकृतम् उपकारः कृतः, मम अपि, आपन्नस्य इति भावः; एषः पूर्वोपकृतः अयं, करिष्यति विधास्यति, उपकारमिति शेषः, ("ममाप्येष करिष्यति" इत्यत्र "अयं प्रतिकरिष्यति" इति कामन्दके) इति एतदभिसन्धाय, यः सन्धिः क्रियते व्याप्यते, स प्रतीकारः प्रतीकाराख्यः सन्धिः, प्रतीकारहेतुत्वादिति भावः; उच्यते, पण्डितैरिति शेषः।

(१२२) उपकारमिति।—अस्य उपकारं हितं, करोमि, अहमिति शेषः,

एकार्थां सम्यगुद्दिश्य क्रियां यत्र हि गच्छति ।
सुसंहितप्रमाणस्तु स च संयोग उच्यते ॥ १२३ ॥
आवयोर्योधमुख्यैस्तु मदर्थः साध्यतामिति ।
यस्मिन् पणस्तु क्रियते सः सन्धिः पुरुषान्तरः ॥१२४॥
त्वयैकेन मदीयोऽर्थः सम्प्रसाध्यस्त्वसाविति ।
यत्र शत्रुः पणं कुर्य्यात् सोऽदृष्टपुरुषः स्मृतः ॥१२५॥

एषः अपि मम करिष्यति च, उपकारमिति शेषः, रामसुग्रीवयोरिव अयमपि प्रतीकारः अपरविधः प्रतीकारसन्धिः; तुल्यव्यसनगतयोः रामसुग्रीवयोः श्रीरामचन्द्रः प्रत्युपकारलिप्सुः वालिवधपूर्वकं राज्यकलत्रप्रदानेन प्रथमं सुग्रीवस्य उपकारं कृतवान्, अनन्तरं सुग्रीवोऽपि श्रीरामचन्द्रस्य प्रत्युपकारं कृतवान् एवमन्योन्यमुपकारप्रत्याशया सन्धिकरणात् अयं प्रतीकारसन्धिः ।

(१२३) एकार्थामिति ।—यत्र हि सन्धौ, एकः अभिन्नः, अर्थः प्रयोजनं यस्याः सा तां तुल्यविषयिणीं, क्रियां कार्य्यम्, उद्दिश्य लक्ष्यीकृत्य, सम्यक् साधु यथा तथा, सुदृढं यथा तथेत्यर्थः, गच्छति मिलनं याति, सन्धिं करोति इत्यर्थः, सु सुदृढं यथा तथा, संहितं सङ्घटितं, निबद्धमित्यर्थः, प्रमाणं मर्य्यादा, सीमा इत्यर्थः, यस्य तादृशः, सम्यङ्निर्द्दिष्टावधिकालः, स तु सन्धिः, संयोगः संयोगसन्धिः, उच्यते च कथ्यते । ("एकार्थां सम्यगुद्दिश्य यात्रां यत्र हि गच्छतः । स संहतप्रयाणस्तु सन्धिः संयोग उच्यते" ॥ इति कामन्दकीयपाठे—एकार्थां यात्राम् एकयातव्यविषयाम्, उद्दिश्य सम्यक् गच्छतः, अरिविजिगीषू इति शेषः, संहतयोः मिलितयोः, प्रयाणं यत्र तादृशः सः सन्धिः संयोगसन्धिः उच्यते, उभयोर्मिलितभावेन एकत्र गमनादिति भावः । त्रय एते अनभियोक्तृविषयाः ज्ञातव्याः ।

(१२४) आवयोरिति ।—आवयोर्द्वयोः, योधमुख्यैः भटप्रधानैः, सेनापतिभिरित्यर्थः, ("योधमुख्याभ्याम्" इति कामन्दकीयपाठे—तव मम च सेनापतिना) मदर्थः मत्कार्य्यं, साध्यतां सम्पाद्यताम्, एतैरेव अस्मद्भूमौ विरोधाचरणादि कार्य्यं सम्पन्नं भवतु, आवान्तु उदासीनौ तिष्ठावः इति भावः, इति एवं, यस्मिन् सन्धौ, पणः नियमः, क्रियते, ("पणः प्रक्रियते" इति कामन्दकीयपाठः) स सन्धिस्तु पुरुषान्तरः पुरुषान्तरनामा सन्धिः, विजिगीषोः पुरुषान्तरसन्धानादिति भावः, उच्यते इति शेषः ।

(१२५) त्वयेति ।—त्वया भवता, एकेन असहायेनैव, न वा मत्साहाय्येन

यत्र भूम्येकदेशेन पणेन रिपुरूर्जितः।
सन्धीयते सन्धिविद्भिः आदिष्टः स उदाहृतः ॥१२६॥
स्वसैन्येन तु सन्धानमात्मादिष्ट उदाहृतः।
क्रियते प्राणरक्षार्थं सर्वदानादुपग्रहः ॥१२७॥
कोषांशेनार्द्धकोषेण सर्वकोषेण वा पुनः।
शिष्टस्य प्रतिरक्षार्थं परिक्रय उदाहृतः ॥ १२८ ॥

न वा बलसाहाय्येन इति भावः, मदीयः असौ अर्थः प्रयोजनं, सम्प्रसाध्यः सम्पादनीयः, शत्रुः रिपुः, यत्र सन्धौ, इति इत्थं, पणं नियमं, कुर्य्यात् स्थापयेदित्यर्थः, सः अदृष्टपुरुषः तन्नाम्ना ख्यातः सन्धिः, स्मृतः कथितः। सन्धिरयं विजिगीषोः शत्रुकार्य्यमन्यत्र सम्पादयतः परेषामदृष्टत्वाददृष्टपुरुषाख्यः ज्ञातव्यः।

(१२६) यत्रेति।—यत्र सन्धौ, भूम्येकदेशेन राज्यांशदानरूपेण इत्यर्थः, पणेन नियमेन, ऊर्जितः बलातिशययुक्तः, प्रबल इत्यर्थः, रिपुः शत्रुः, विजिगीषुरित्यर्थः, सन्धीयते सन्धेयो भवति, हीनबलेनेति शेषः, शेषप्रकृतिरक्षाऽर्थमिति भावः, स सन्धिः, सन्धिविद्भिः सन्धिकुशलैः, आदिष्टः आदिष्टाभिधानः, ऊर्जितस्य रिपोरभिप्रायानुसारेण सम्पादितत्वादिति भावः; उदाहृतः कथितः।

(१२७) स्वेति।—स्वसैन्येन निजबलेन सह, स्वकीयसेनया सह शत्रुसमीपमुपगम्य इत्यर्थः, तु पुनः, सन्धानं सन्धिः, क्रियते यदिति शेषः, स आत्मादिष्टः आत्मादिष्टाख्यः सन्धिः, आत्मानं शत्रोरादेशवहं कृत्वा क्रियमाणत्वादिति भावः; उदाहृतः कथितः। (अत्र द्वितीयपादे "आत्मामिष इति स्मृतः" इति कामन्दकीयपाठे—स आत्मामिषनामा सन्धिः इति स्मृतः; आत्मानमामिषीकृत्य क्रियमाणत्वादिति भावः)। प्राणरक्षार्थं जीवितरक्षार्थं, प्राणेषु रक्षितेषु सम्पत्तयः पुनरप्यर्जनीया न तु प्राणा इति बुद्ध्या इति भावः; सर्वदानात् सर्वराज्यप्रदानात्, ("सर्वदानम्" इति कामन्दकीये पाठः) यः सन्धिः क्रियते संस्थाप्यते, स उपग्रहः उपग्रहनामा सन्धिः; सर्वथा शत्रूपग्रहहेतुत्वादिति भावः।

(१२८) कोषेति।—यत्र कोषांशेन कोषस्य अर्थसमूहस्य, सञ्चितार्थराशेरित्यर्थः, अंशेन एकदेशेन, त्रिभागेण चतुर्भागेण वा इत्यर्थः, अर्द्धकोषेण सञ्चितधनार्द्धदानेन, वा अथवा, सर्वकोषेण पुनः सर्वस्वदानेनापि, शिष्टस्य अवशिष्टस्य, अमात्यादेरिति शेषः, सभ्यस्य वा, प्रतिरक्षार्थं परित्राणाय, यः सन्धिः क्रियते इति

भुवां सारवतीनान्तु दानादुच्छिन्न उच्यते ।
भूम्युत्थफलदानेन सर्वेण परभूषणः ॥ १२९ ॥
परिच्छिन्नं फलं यत्र प्रतिस्कन्धेन दीयते ।
स्कन्धोपनेयं तं प्राहुः सन्धिं सन्धिविचक्षणाः ॥१३०॥
परस्परोपकारस्तु मैत्री सम्बन्धकस्तथा
उपहारश्च विज्ञेयाश्चत्वारश्चैव सन्धयः ॥ १३१ ॥

शेषः, स पुनः परिक्रयः तन्नामा, उदाहृतः कथितः । ("अर्द्धकोषेण" इत्यत्र "अथ कुप्येन" इति तथा "शिष्टस्य प्रतिरक्षार्थम्" इत्यत्र "शेषप्रकृतिरक्षार्थम्" इति कामन्दकीयपाठे—कुप्येन स्वर्णरौप्येतरेण द्रव्येण, वस्त्रकम्बलादिना इत्यर्थः)। अयमवशिष्टामात्यादीनामच्छिन्नानामिव परिक्रयणात् परिक्रयसन्धिः ।

(१२९) भुवामिति ।—सारवतीनाम् उर्वरत्वादिगुणयुक्तानां, कोषवलभृति-जनिकानामिति यावत्, भुवां भूमीनां, दानात् त्यागात, उच्छिन्नः उच्छिन्ननामा सन्धिः, उच्यते कथ्यते । अयं सारभूमिदानेन उच्छिन्नसर्वैश्वर्य्यस्य सन्धिः उच्छिन्न-सन्धिः । सर्वेण सकलेन, अधिकेनेत्यर्थः, भूम्युत्थफलदानेन भूजातशस्यादीनामर्पणेन, भूमिभ्यो यावन्ति फलानि उत्पद्यन्ते तदतिरिक्तानामपि समर्पणेनेत्यर्थः, यः सन्धिः स परभूषणः, उच्यते इति शेषः । सर्वभूमिजातफलेभ्यः अतिरिक्तग्रहणेन बलिनः परस्य भूषणभूतत्वादयं सन्धिः परभूषणः । (कामन्दके तु "सर्वभूम्युत्थित-फलदानेन परदूषणः" इति पाठः । "अयं परस्य दूषणात् परदूषणः । तद्यथा—अपकर्तुकामो ह्यन्यमायादभ्यधिकमिच्छतीति" इति तट्टीकाकारः शङ्कराय्यः)।

(१३०) परिच्छिन्नमिति ।—यत्र यस्मिन् सन्धौ, परिच्छिन्नं त्वया एतावदुप-नेतव्यम् इत्येवंरूपेण कृतविशेषनियममित्यर्थः, फलं नियमितं द्रव्यमित्यर्थः, प्रति-स्कन्धेन स्कन्धं स्कन्धं प्रतिस्कन्धं तेन खण्डखण्डेन, नियममनुसृत्य द्वित्रिचतुर्वारैरित्यर्थः, दीयते अर्प्यते, अबलेन बलिने रिपवे इति शेषः, सन्धिविचक्षणाः सन्धिनीति-कुशलाः विद्वांसः, तं सन्धिं, स्कन्धोपनेयं तदाख्यं, प्राहुः वदन्ति, निर्दिष्टसमये अंशांशविभागेन किञ्चित् किञ्चिद्दीयमानत्वादयं स्कन्धोपनेयाख्यः । नवैते सन्धयः अभियोक्तारि ज्ञातव्या इति । ("प्रतिस्कन्धेन दीयते" इत्यत्र "स्कन्धस्कन्धेन नीयते" "सन्धिविचक्षणाः" इत्यत्र "सन्धिविदो जनाः" इति कामन्दकीयः पाठः)।

(१३१) सन्धिविषये मतभेदमाह, परस्परेति ।—परस्परोपकारः प्रतीकार-

एक एवोपहारश्च सन्धिरेव मतो मम ।
उपहारविभिन्नास्तु सर्वे मैत्रविवर्जिताः ॥ १३२ ॥
अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्त्तते ।
उपहाराद्दते तस्मात् सन्धिरन्यो न विद्यते " ॥१३३॥

राजाऽऽह,—"भवन्तो महापण्डिताः, तदत्रास्माकं यथाकार्य्यम् उपदिश्यताम्"। दूरदर्शी ब्रूते,—"आः ! किमुच्यते ?—

सन्धिः तु किंच, मैत्रो मित्रभावः, सङ्गतसन्धिरित्यर्थः, तथा सम्बन्धकः सन्तानसन्धिरित्यर्थः, दारिकादानपूर्वकसम्बन्धसंस्थापनादिति भावः ; उपहारश्च इति सन्धयश्च चत्वारः चतुर्विधा एव, विज्ञेयाः वेदितव्याः, शेषाणामेष्वेवान्तर्भावात्, तथा च, परस्परोपकाराख्यप्रतीकारसन्धौ उपन्याससंयोगयोरन्तर्भावः, तत्र हि उभयोरपि राज्ञोरेकार्थसिद्ध्या परस्परोपकारात्, कोषदण्डभूम्यादि उपांशुसमानत्वात् उपहारसन्धौ शेषाणामन्तर्भावः विज्ञेयः। ("परस्परोपकारश्च मैत्रः सम्बन्धजस्तथा। उपहारश्च विज्ञेयाश्चत्वारोऽन्ये तु सन्धयः" ॥ इति कामन्दकीयपाठः)।

(१३२) स्वमतमाह, एक इति।—मम च मम पुनः, एकः उपहार एव तन्नामा सन्धिरेव, सन्धिः इति मतः अभिप्रेतः. [ अत्र "मतः" इति "मतिबुद्धिपूजार्थेभ्यश्च" (३।२।१८८पा०) इति वर्त्तमाने क्तविधानात् "क्तस्य च वर्त्तमाने" (२।३।६७पा०) इति मम इत्यत्र कर्त्तरि षष्ठी] मैत्रविवर्जिताः सङ्गतसन्धिं वर्जयित्वा इत्यर्थः, तत्र नम्प्रदानाभावादिति भावः ; सर्वे तु अन्ये सर्वे एव, उपहारविभिन्नाः उपहारसन्धिभेदा इत्यर्थः, सर्वेष्वेव सन्धौ आदानप्रदानसम्बन्धसत्त्वात इति भावः। ("एक एवोपहारस्तु सन्धिरेतन्मतं हि नः। उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिताः"॥ इति कामन्दकीयपाठः)।

(१३३) तदेव स्फुटयितुमाह, अभियोक्तेति।—अत्र यतः इति पदमध्याहार्य्यम् ; बलीयस्त्वात बलवत्तरत्वात्, बलदर्पितत्वादित्यर्थः, ("बली यस्मात्" इति कामन्दकीयपाठः) अभियोक्ता आक्रमणकारी शत्रुः, अलब्ध्वा किञ्चिदपि धनादिकम् अप्राप्य, न निवर्त्तते न प्रतिगच्छति, अनभियोक्ता अपि उपन्यासप्रतीकारसंयोगसन्धिषु किञ्चित् प्रत्युपकाराभिप्रत्याशया एव घटते न तु किञ्चिदप्यलब्ध्वान् इति बोध्यम् ; तस्मात् कारणात्, उपहारात् ऋते उपहारं विना, अन्योऽन्यविधः, सन्धिः, न विद्यते नास्ति ; सर्वेषामेव उपहारभेदत्वादिति भावः ; स च सन्धिः तत्र प्रशमनोपाय इत्यभिप्रायः।

आधिव्याधिपरीतापैरद्य श्वो वा विनाशिने ।
को हि नाम शरीराय धर्मापेतं समाचरेत् ? ॥१३४॥
जलान्तश्चन्द्रचपलं जीवितं खलु देहिनाम् ।
तथाविधमिति ज्ञात्वा शश्वत् कल्याणमाचरेत् ॥१३५॥
वाताभ्रविभ्रममिदं वसुधाऽऽधिपत्यम्
आपातमात्रमधुरो विषयोपभोगः ।

(१३४) यस्य हि शरीरस्यार्थे दुर्बलपीड़नादिकं तत् दोषबहुलत्वात् विनश्वरमिति वक्तुं कामन्दकीयतृतीयसर्गोक्तश्लोकं प्रमाणयति, आधीति ।—आधिः मनोव्यथा, व्याधिः रोगः, परीतापः पुत्रादिवियोगजशोकः, तैः उपलक्षिताय, आधिव्याधिपरीतापैः हेतुभिरिति वा, ("आधिव्याधिपरीताय" इति कामन्दकीयपाठः) अद्य अस्मिन् अहनि, श्वो वा परेऽहनि वा, आगामिनि दिने वा इत्यर्थः, विनाशिने अवश्य क्षयशीलाय, नश्वरायेत्यर्थः, शरीराय देहार्थम् इत्यर्थः, को हि नाम जनः, नाम इति प्रश्ने ; धर्मापेतं धर्मविगर्हितं, पापमिति यावत्, अविचारेण दुर्बलपीड़नादिरूपमिति भावः ; समाचरेत् ? अनुतिष्ठेत् ? न कोऽपीत्यर्थः, देहार्थं पापकारिणः खलु मूर्खा एव, न तु भवादृशा मादृशा वा इति भावः ।

(१३५) जीवितमनित्यं ज्ञात्वा महात्मभिः सदा श्रेय एवाचरितव्यमिति वक्तुं कामन्दकीयतृतीयसर्गोक्तं प्रमाणयति, जलेति ।—देहिनां शरीरिणां, जीवितं जीवनं, खलु निश्चयेन, जलान्तश्चन्द्रचपलं जलमध्यप्रतिबिम्बितचन्द्रबिम्बवत् चञ्चलं, क्षणविध्वंसीत्यर्थः, इति एवं, ज्ञात्वा विदित्वा, शश्वत् नित्यकालं, तथाविधं तादृशं, शरणागतदुर्बलरक्षणरूपमिति भावः ; कामन्दकीयतृतीयसर्गे राज्ञामाचारव्यवस्थाप्रकरणे दीनपालनप्रस्तावे श्लोकस्यास्य उक्तत्वात् ; कल्याणं शुभं, पुण्यमिति यावत्, आचरेत् कुर्यात्, अनित्यजीवनार्थं न कदाऽपि अकार्य्ये प्रवर्त्तितव्यमिति भावः ।

(१३६) धर्म्मस्यैव एकमात्रसहायकत्वे प्रसिद्धप्राचीनश्लोकमाह, वातेति ।—इदं परिदृश्यमानं वसुधाऽऽधिपत्यं राजत्वं, वाताभ्रविभ्रमं वातेन चालितं यत् अभ्रं मेघः, तस्य विभ्रमवत् विभ्रमो यस्य तादृशं वायुचालित-मेघ-विलासवत् अस्थिरम् ; अथवा वातस्य वायोः, अभ्रस्य मेघस्य च, विभ्रमः भ्रमणं यत्र तादृशं, तद्वत् क्षणस्थायीत्यर्थः, विषयाणां स्रक्चन्दनादीनाम्, उपभोगः रसास्वादनम्, आपात-मात्र-मधुरः आपातमात्रम् आपतनक्षणे, उपभोगसमकालमेवेत्यर्थः, मधुरः शोभनः,

प्राणास्तृणाग्रजलविन्दुसमा नराणां
धर्मः सखा परमहो! परलोकयाने ॥ १३६ ॥
मृगतृष्णासमं वीक्ष्य संसारं क्षणभङ्गुरम्।
सज्जनैः सङ्गतं कुर्य्यात् धर्माय च सुखाय च ॥ १३७ ॥

तन्मम सम्मतेन (ञ) तदेव क्रियताम्। यतः,—

अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥१३८॥

---

तत्कालसुखप्रदः परिणतिविरस इति भावः; नराणां मानवानां, प्राणाः जीवितञ्च, तृणाग्रजलविन्दुसमाः तृणाग्रस्थितवारिकणसदृशाः, क्षणस्थायिन इत्यर्थः, परलोकयाने परलोकगमने, स्वर्गार्थम् इत्यर्थः, धर्म्मः सुकृतमेव, परम् एकमात्रः, सखा बन्धुः, सहायः इत्यर्थः, अहो! इति विस्मये; अतः धर्म्म एव पालनीयः सर्वैः इत्यत्र किमुपदेशान्तरेण इति भावः। वसन्ततिलकं वृत्तम्।

(१३७) सत्सङ्गस्य फलमाह, मृगेति।—क्षणभङ्गुरं क्षणविध्वंसिनं, संसारं विश्वं, मृगतृष्णासमं मरीचिकासदृशं, मायामयम् असारञ्चेत्यर्थः, वीक्ष्य आलोक्य, धर्माय च धर्मार्थञ्च, सुखाय च श्रेयसे च, सज्जनैः साधुभिः सह, सङ्गतं सन्धिं, मेलनमित्यर्थः, सङ्गताख्यं सन्धिमित्यर्थो वा, कुर्य्यात् विदधीत, सतां सङ्गिः सङ्गः कथमपि हि पुण्येन भवति इति भावः। ("जगन्मृगतृषातुल्यं वीक्ष्येदं क्षणभङ्गुरम्। सुजनैः सङ्गतिं कुर्य्यात् धर्म्माय च सुखाय च" ॥ इति कामन्दक-तृतीयसर्गोक्तपाठः)।

(ञ) तदेव—काञ्चनापरनामसङ्गताख्यसन्धानमेवेत्यर्थः। ("तावदेवम्" इति पाठः सङ्गतः)।

(१३८) सत्यस्य औत्कर्ष्यमाह, अश्वमेधेति।—अश्वमेधानाम् अश्वमेधयागानां, सहस्रञ्च दशशतञ्च, सहस्राश्वमेधयागफलञ्चेत्यर्थः, तथा सत्यञ्च सत्यपरायणता च, तुलया मानदण्डेन, धृतं तोलितं सत्, अश्वमेधसहस्रात् सहस्राश्वमेधयागात्, सत्यमेव सत्यपरायणतैव, अतिरिच्यते गुरुत्वेन अधिकं भवति इत्यर्थः, हि निश्चये, इति ब्रह्मणा दृष्टमिति शेषः। [ कर्म्मकर्त्तरि लट् ]। ("भारतादिपर्वान्तर्गतसम्भवपर्वणि "अतिरिच्यते" इत्यत्र "विशिष्यते" इति पाठः। वाल्मीकीयरामायणे अयोध्याकाण्डे कौशल्याविलापे तु "अश्वमेधसहस्राद्धि" इत्यत्र "तुलयित्वा तु पश्यामि"

अतः (ञ) सत्याभिधानदिव्यपुरःसरं द्वयोरप्येतयोर्भूपालयोः काञ्चनाभिधानसन्धिर्विधीयताम्"। सर्वज्ञो वदति,—"एवमस्तु"। ततो (ट) वस्त्रालङ्कारोपहारैः स मन्त्री दूरदर्शी पूजितः प्रहृष्टमनाश्चक्रवाकं गृहीत्वा मयूरस्य राज्ञः समीपं गतः। ततः चित्रवर्णेन राज्ञा सर्वज्ञो गृध्रवचनात् बहुमानदानपुरःसरं सम्भाषितस्तथाविधं सन्धिं स्वीकृत्य राजहंससमीपं प्रस्थापितः। दूरदर्शी ब्रूते,—"देव ! सिद्धं नः (ठ) समीहितम्, इदानीं स्वस्थानमेव विन्ध्याचलं प्रतिगम्यताम्"। अथ सर्वे स्वस्थानं प्राप्य मनोवाञ्छितफलम् अनुभवन्ति।

[ * इति हंस-मयूरकथा ]।

विष्णुशर्मणा उक्तम्,—"अपरं किं कथयामि, तदुच्यताम्"। राजपुत्रा ऊचुः,—"आर्य्य ! तव प्रसादात् (ड) सकलराजव्यवहाराङ्गं ज्ञातं, ततः सुखिनो (ढ) भूता वयम्"। विष्णुशर्मोवाच,—"यद्यप्येवं तथाऽपि अपरमपीदमस्तु,—

इति पाठः। सत्याग्निसत्यानस्तु तत्रैव यथा,—"सत्यकथायं महाराज ! पौराणः प्रथितः क्षितौ। सत्यं पुरा तुलयता स्वयं गीतः स्वयम्भुवा" ॥ इति )।

(ञ) सत्याभिधानदिव्यपुरःसरं—सत्याख्यशपथपूर्वकं, सत्यशपथं कृत्वेत्यर्थः। काञ्चनाभिधानसन्धिः,—काञ्चनसन्धिः, सङ्गतसन्धिरित्यर्थः।

(ट) वस्त्रालङ्कारोपहारैः,—वसनभूषणोपढौकनप्रदानादिना।

(ठ) समीहितम्—अभीष्टम्।

(ड) सकलराजव्यवहाराङ्गं—राज्ञां नृपाणां, व्यवहारः स्थितिः, कर्त्तव्याकर्त्तव्यावधारणमित्यर्थः, तन्निर्णायकं शास्त्रमिति यावत्, नीतिशास्त्रमिति भावः; यद्वा,—व्यवहारः न्यायः, नियम इति यावत्, ("व्यवहारः द्रुभेदे स्यात्त्यायेऽपि च पणे स्थितौ" इति मेदिनी ) तस्य अङ्गम् अवयवः, अंश इत्यर्थः, सकलं निखिलं, राजव्यवहाराङ्गं नीतिशास्त्रस्य निखिलांश इत्यर्थः।

(ढ) भूताः,—सञ्जाताः।

* इयं खलु विग्रहे प्रारब्धा अत्र च समाप्तिं गता।

सन्धिः सर्वमहीभुजां विजयिनामस्तु प्रमोदः सदा
सन्तः सन्तु निरापदः सुकृतिनां कीर्त्तिश्चिरं वर्द्धताम् ।
नीतिर्वारविलासिनीव सततं वक्षःस्थले संस्थिता
वक्त्रं चुम्बतु मन्त्रिणामहरहो भूयान्महानुत्सवः ॥१३९॥

अन्यच्चास्तु,—

उर्वीमुद्दामसस्यां जनयतु विसृजन् वासवो वृष्टिमिष्टाम्
इष्टैस्त्रैविष्टपानां विदधतु विधिवत् प्रीणनं विप्रमुख्याः ।
आकल्पान्तञ्च भूयात् समुपचितसुखः सङ्गमः सज्जनानां
निःशेषं यान्तु शान्तिं पिशुनजनगिरो दुर्जया
वज्रलेपाः ॥१४०॥

(१३९) ग्रन्थावसाने भरतवाक्यमाह, सन्धिरिति ।—विजयिनां जयशीलानां, सर्वमहीभुजां सकलनरपतीनां, सन्धिः मेलनं, सदा सततं, प्रमोदयतीति प्रमोदः प्रीतिजननः, अस्तु भवतु, ते अविगृह्य सदा सन्धिमेव श्रेयसी परिगणयन्तु इत्यर्थः ; ...,—सर्वमहीभुजां सन्धिः अस्तु भवतु, राजानः सर्वे परस्परं सख्यसूत्रेणाबद्धाः ...न्तु इति भाव ; विजयिनां सदा प्रमोदः हर्षः, अस्तु भवतु ; सन्तः सज्जनाः, ...रापदः निर्विघ्नाः, सन्तु तिष्ठन्तु. सुकृतिनां पुण्यवतां. कीर्त्तिः यशः, चिरं नित्यं, ...र्द्धतां आप्यायतां, समन्तात् प्रसृता भवतु इत्यर्थः, नीतिः नयः, वारविलासिनीव ...राङ्गनेव, सततं सदा, मन्त्रिणां सचिवानां, वक्षःस्थले वक्षसि, मनसि इत्यर्थः, संस्थिता अधिष्ठिता सती. वक्त्रं मुखं, चुम्बतु, सदा हृदये मुखे च निवसतु इत्यर्थः, ...न्त्रिणः सदा नीत्यनुसारेणैव राजकार्य्यं साधयन्तु इति भावः, अहरहः प्रतिदिनं, ...हान् अतिशयः, उत्सवः आनन्दानुष्ठानं, भूयात् अस्तु, जनानामिति शेषः, प्रजाः ...र्वाः महोत्सवेनेव दिनम् अतिवाहयन्तु इत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ।

(१४०) उर्वीमिति ।—वासवः इन्द्रः, इष्टां पर्य्याप्तां, वृष्टिं वर्षं, जलमित्यर्थः, विसृजन् मुञ्चन्, यथेष्टं वारिवर्षणं कृत्वेत्यर्थः, उर्वीं पृथिवीम्, उद्दामसस्यां ...धान्यादिसम्पन्नां, जनयतु विदधातु, 'विप्रमुख्याः ब्राह्मणश्रेष्ठाः, यागविधिज्ञा ...वरा इत्यर्थः, तैरिष्टैः यागैरिष्टैः विष्टपानां विधिवत् प्रीणनं भवति, ...देवैः कतुभिरित्यर्थः, ("विद्यादिष्टं क्रतावपि" इति शाश्वतः) विष्टपानां ...देवानाम्, ("क्षयो जगती लोको विष्टपं भुवनं जगत्" इत्यमरः) विधिवत्

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत्" ॥१४१॥

इति श्रीविष्णुशर्मविरचिते हितोपदेशे सन्धिर्नाम
चतुर्थः कथासङ्ग्रहः ॥ ४ ॥

यथावत्, प्रीणणं तर्पणं, रचणमित्यर्थः, यागस्य पर्जन्यजनकत्वेन पर्जन्यस्य च जगत्तर्पकत्वेनेति भावः ; तथा च.—"अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः । यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः" ॥ इति ; विदधतु कुर्वन्तु, [ वि+धा +लोट्-अन्तु ] आकल्पान्तम् आप्रलयं, प्रलयकालपर्यन्तमित्यर्थः, सज्जनानां सल्लोकानां, सङ्गमः मेलनञ्च, समुपचितसुखः समुपचितं सम्यक् वृद्धिं गतं, सुखम् आनन्दः यत्र तादृशः, अत्यर्थमानन्दजननः, भूयात् अस्तु, सुजनाः परस्परं मिलिताः आप्रलयं सुखेन तिष्ठन्तु इत्यर्थः ; दुर्जयाः अतिदारुणाः, वज्रलिपाः वज्रलेपवत् सुदृढ़तया मनसि अङ्किता इत्यर्थः, पिशुनजनगिरः खलानां वाचः, निःशेषं सम्पूर्णं यथा तथा, शान्तिं प्रशमं, यान्तु गच्छन्तु, खलजनाः स्वस्वखलोक्तिं सर्वथा परिहृत्य सुजनाः मधुरभाषिणश्च भवन्तु इत्यर्थः, खलाः सर्वे विनष्टा भवन्तु इत्यर्थो वा । स्रग्धरा वृत्तम् ।

*(१४१) सर्वे इति ।—सर्वे सकलाः, जना इति शेषः, सुखिनः सुखभाजः, भवन्तु जायन्तां, सर्वे निखिला लोकाः, निरामयाः नीरोगाः, सन्तु भवन्तु, सर्वे कृत्स्ना लोकाः, भद्राणि शुभानि, पश्यन्तु अवलोकन्तां, लभन्तामित्यर्थः, कश्चित् कोऽपि जनः, दुःखभाक् दुःखी, मा भवेत् न भवतु ।

इति पण्डितकुलपतिना श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्येण विरचिता
हितोपदेशव्याख्या ॥ ४ ॥



